एते तु[1] सन्धयो ज्ञेया [2]नाटकस्य प्रयोक्तृभिः।
[3]तथा प्रकरणस्यापि शेषाणां च निबोधत॥ ४४
डिमः समवकारश्च चतुःसन्धी प्रकीर्तितौ[4]।
[5]न तयोरवमर्शस्तु कर्तव्यः कविभिः सदा॥ ४५
व्यायोगेहामृगौ चापि सदा कार्यौ त्रिसन्धिकौ[6]।
[7]गर्भावमर्शौ न स्यातां तयोर्वृत्तिश्च कैशिकी॥ ४६
द्विसन्धि तु प्रहसनं वीथ्यङ्को भाण एव च।
मुखनिर्वहणे [8]तत्र कर्तव्ये कविभिः सदा[9]॥ ४७
[10][वीथी चैव हि भाणश्च तथा प्रहसनं पुनः।
कैशिकीवृत्तिहीनानि कार्याणि कविभिः सदा]॥

---

एतेषां विनियोगं विभजति एते त्वित्यादिना "मुखनिर्वहणे तत्र कर्तव्ये कविभिः सदा" इत्यन्तेन। एतच्च पूर्वमेवनिर्णीतार्थं 'एकलोपे चतुर्थ' स्येत्यादि (१९-२७) व्याख्यानावसरे।

कस्मात्तौ (डिमसमवकारौ) चतुःसन्धी इत्याह न तयोरित्यादिना। तुर्हेतै, यतस्तयोरवमर्शं निबद्धुमशक्यमिति। एवमुत्तरत्रापि हेतुग्रन्थान्तरत्वे-

---

1 ड - हि 2 ट - नाटकेषु 3 ढ - यथा 4 ट - चतुःसन्धिः प्रकीर्तितः, ड - प्रकीर्तितौ। गर्भावमर्शहीनौ (नः) तु कर्तव्यौ (व्यः) कविभिः सदा * ॥ कैशिकी-वृत्ति हीनौ तु (नस्तु) कर्तव्यौ च (व्यश्च) त्रिवृत्तिकौ (कः)। भारत्या त्वथ सात्त्वत्या ह्यारभट्या तथैव च॥ 5 ट - विमर्शस्तु तयोर्न स्यान्न च वृत्तिस्तु कैशिकी, न - न तयोर्विमर्शस्तु स्यान्न च वृत्तिस्तु कैशिकी। 6 भ - त्रिसन्धी संप्रकीर्तितौ (ड - परि) 7 प - न गर्भो न विमर्शश्च न च वृत्तिश्च कैशिकी द - गर्भो विमर्शो न स्यातां न च वृत्तिस्तु, ड - गर्भं चैवावमर्शं च त्यक्त्वा वृत्तिं च कैशिकीम् 8 भ - चैव, ब - तेषां, ट - तेषु ड - स्यातां तेषां वृत्तिश्च भारती, 9 भ - कैशिकीं विना भ - द्विजाः 10 अयं श्लोकार्थः पूर्वाध्याये (१८-१२) उक्त एव भ - मातृकायामिहैव-दृश्यते

एवं [1]हि सन्धयः कार्या [2]दशरूपे प्रयोक्तृभिः ।
[3]पुनरेषां तु सन्धीनामङ्गकल्पं निबोधत[4] ॥ ४९

सन्धीनां यानि वृत्तानि [5]प्रदेशेष्वनुपूर्वशः ।
[6]स्वसम्पद्गुणयुक्तानि तान्यङ्गान्युपधारयेत्[7] ॥ ५०

---

नेदं योज्यम्, न तु लोपस्थानित्वेन, तस्यैको लोप इत्यादिना पूर्वमेवोक्तत्वात् ।

ननु सन्धिपञ्चकात्मक इतिवृत्तशरीरारम्भे कथं दशरूपकादिभेद इत्याशंक्याह एवं हीति । हिर्यस्मात्, एवमुक्तेन विनियोगप्रकारेण सन्धयो भवन्ति ततो दशरूपभेद इति केचिदाशङ्कापूर्वकं व्याचक्षते, तच्चासत्, [1]लक्ष्यभेदादेव दशरूपकभेदस्य दर्शितत्वात् । अवश्यं चेतत्, अन्यद्वा डिमसमवकारयोश्चतुःसन्धिताविशेषात् कथं भेदः स्यात्, नाटकादीनां वा, तस्मादुपसंहारग्रन्थोऽयमिति हीति । अङ्गानां कल्पं कल्पनाप्रकारो वा तेनैवंप्रायमन्यदपीतिवृत्तोपयोगि भवति ।

अङ्गानां सामान्यस्वरूपं प्रयोजनद्वारेण दर्शयितुं प्रथमेन स्वरूपं द्वाभ्यां प्रयोजनमेकेन द्वयं द्वयेन प्रकाशयन्नाह श्लोकषट्कं "सन्धीनां यानि वृत्तानी"त्यादि "शोभामेति न संशयः" इत्यन्तम् ।

अर्थभागराशिः सन्धिरित्युक्तं, तत्र सन्धीनां संबन्धनीयानि वृत्तानि संविधानखण्डानि । अनुपूर्वश इति मुख्यप्रयोजनसंपादनबलोपनतेन क्रमेण, न तु लक्षणनिरूपणप्रसङ्गपरिकल्पितेन, प्रदेशेष्वादिमध्यान्तभागेषु वर्तनेनाङ्गानि, कुत इत्याह स्वस्याङ्गिनः सन्धेर्या संपत्तेर्निष्पत्तिः तत्र गुणवत्त्वे शेषभावे यतो यतो युक्तान्युचितानि संबन्धसंपादकत्वादङ्गानीत्यर्थः ।

---

1 भ - तु 2 भ - दशरूपेषु 3 ड - पुनः सन्ध्यन्तरं तेषां 4 ड - अतः परं "साम भेदः" इत्यादि श्लोकत्रयं वर्तते 5 च - प्रदेशाश्च तु पूर्वतः, ढ - प्रवेशेषु 6 प - सु 7 म - अवधारयेत्

1 पक्षभेदादेव

इष्टस्यार्थस्य रचना[1] वृत्तान्तस्यानुपक्षयः ।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम्[2] ॥ ५१
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् ।
[3]अङ्गानां षड्विधं ह्येतद्[4] दृष्टं शास्त्रे प्रयोजनम् ॥
अङ्गहीनो नरो [5]यद्वन्नैवारम्भ[6]क्षमो भवेत् ।
अङ्गहीनं तथा [7]काव्यं न प्रयोगक्षमं भवेत् ॥ ५३

---

अन्ये त्वाहुः—स्वसंपदो बीजोत्पत्त्युद्घाटनादिका गुणाश्च शब्दार्थवैचित्र्याणि, स्वसंपदां वा गुणाः तैरेव युक्तानीति ।

इष्टस्येत्यादिना प्रयोजनमाह । अभीष्टस्य प्रयोजनस्य रसास्वादकृतो रचना विस्तारणा । वृत्तान्तस्यानुपक्षयः क्रमेण स्फुटत्वादयः शलाकाकल्पत्वाभावः, एतत्प्रयोजनं सर्वसाधारणम् । प्रयोगस्येतिवृत्तस्य स्वयं परस्परस्यापि रागप्राप्तिः रञ्जनायोग्यत्वलाभः व्युत्पत्त्यवस्थायोगात्, यदि वा पौनरुक्त्याद्याभासे गुह्याः संछादनीया अर्थाः तेषां संछादनम् । पुनः पुनः श्रुतमपि यदभिख्यानं इतिवृत्तं तत एव नाश्चर्यकारि तदपि अङ्गयोजनायामपूर्वतामिव दधदद्भुततामेति, तदाह आश्चर्यवदिति । यच्च व्युत्पत्तौ सातिशयोपयोगि तत एव प्रकाश्यं तस्य प्रकाशनं विस्तारणम्, आद्यन्तु प्रयोजनं चमत्कारकृतं स्मृतिदृष्टमपि प्रत्यक्षविशेषसिद्धमेव, न तु सन्ध्योपासनादिवददृष्टं, नापि पूर्वरङ्गाङ्गवदुभयरूपमित्यर्थः । शास्त्र इति नाट्यात्मके वेद इत्यर्थः । एषां प्रयोजनानामङ्गलक्षणेषूदाहरणं वर्णयिष्यामः अत एव दृष्टान्तेन दृढयति । अङ्गकर्तव्यसंपादनं प्रयोगक्षममिति । ततः प्रयोजनस्यासंपत्तेर्दृष्टस्य वा

---

1 ड - वचनं य - वचनात् 2 च - च निगूहनम् 3 इदमर्धं च - मातृकायां न दृश्यते 4 ड - उक्तं शास्त्र 5 ट - यावत् 6 ड - आरम्भे 7 ट - कार्यमप्रयोग

[1]उदात्तमपि यत्काव्यं [2]स्यादङ्गैः [3]परिवर्जितम् ।
हीनत्वाद्धि[4] प्रयोगस्य न सतां [5]रञ्जयेन्मनः ॥ ५४
काव्यं [6]यदपि हीनार्थं सम्यगङ्गैः समन्वितम् ।
[7]दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशयः ॥ ५५
[तस्मात् सन्धिप्रदेशेषु [8]यथायोगं[9] यथारसम् ।
[10]कविनाङ्गानि कार्याणि सम्यक्तानि निबोधत ][11] ॥

---

प्रच्युतसंभावनात् । एतद् व्यतिरेकद्वारेण स्फुटयति उदात्तमपीति लक्षणगुणालङ्कृतियुक्तमित्यर्थः । प्रयोगस्येति अपादानमपि संबन्धित्वेन (षष्ठी), वृक्षस्य पर्णं पततीति यथात्र । तस्य प्रयोगस्य तस्य काव्यस्य यतो हीनत्वं यदयोग्यत्वं यस्मात्, सतां परोपकारप्रवृत्तानां कविनटानां साधुभूतानां वा सामाजिकानां मनो न रञ्जयतीति संभाव्यते । अन्वयद्वारेणोपसंहरति यदपि इति । हीनार्थमिति स्वल्पमपि प्रयोजनं प्रहसननिदर्शनकथाख्यायिकादि* । प्रयोगः प्रयुक्तिः तत्राङ्गं प्रयोजकं रञ्जनातिशयो व्युत्पत्त्यतिशयश्च तदुभयम्, तत्र काव्ये दीप्तं स्फुटमित्यर्थः ।

---

1 अयं श्लोकः सर्वासु मातृकासु "काव्यं यदपि" इत्यादि श्लोकानन्तरमेव दृश्यते । 2 च - कार्यं 3 ट - तदङ्गैः 4 ड - तत् 5 ट - सतो 6 न - पदविहीनार्थं 7 भ - दीप्ताङ्गत्वात्, ब - दीप्तिं गत्वा प्रयोगश्च, ढ - दीप्ताङ्गस्य 8 च - प्रयोगेषु 9 ड - देशं प - काव्यं 10 भ - कार्याण्यङ्गानि तेषां तु प्रविभागः प्रदर्श्यते, ब - कविता 11 अतः परं यमनप - आदर्शेषु "साम भेद" इत्यादि श्लोकत्रयं च, तदनु—"एते विशेषाः सन्धीनां स्युः सन्धिष्वर्थयोगतः । एभ्योऽङ्गान्यर्थयोगेन सन्धितानि निबोधत" इति श्लोको वर्तते

---

* प्रहसनानिदर्शितकथंचाधीष्यादि (?)

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ ५७
उद्भेदः करणं भेद [1]एतान्यङ्गानि वै मुखे ।
तथा प्रतिमुखे चैव शृणुताङ्गानि नामतः[2] ॥ ५८
विलासः परिसर्पश्च विधूतं [3]तापनं तथा ।
[4]नर्म नर्मद्युतिश्चैव तथा [5]प्रगयणं पुनः ॥ ५९
निरोधश्चैव विज्ञेयः पर्युपासनमेव च ।
[6]पुष्पं वज्रमुपन्यासो वर्णसंहार एव च[7] ॥ ६०
[8]एतानि वै प्रतिमुखे [9]गर्भेऽङ्गानि निबोधत ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः[10] ॥ ६१
संग्रहश्चानुमानं च [11]प्रार्थनाक्षिप्तमेव च ।
तोटकाधिबले चैव [12]ह्युद्वेगो विद्रवस्तथा ॥ ६२

---

अथाङ्गानामुद्देशमाह उपक्षेपः परिकर इत्यादिना एतान्यङ्गानि सन्धिषु (६७) इत्यन्तेन । मुखे द्वादश, प्रतिमुखे गर्भे च त्रयोदश, अवमर्शे द्वादश, निर्वहणे चतुर्दशेति मिलित्वा चतुःषष्टिः ।

केचिन्मन्यन्ते—इह उपक्रम उपसंहारो मध्यमिति प्रत्यवस्थं स्थानभेदत्रयं, तत्र प्रत्येकं सूक्ष्मेणारम्भावस्थापञ्चकेन भाव्यमिति पञ्चदश्यो

---

1 म - द्वादशाङ्गानि 2 ट - वक्ष्याम्यङ्गानि ढ - वक्ष्याम्यङ्गान्यतः परम् ड - अतः परम् 3 ड - शमनं 4 ट - नर्मद्युतिः प्रगमनं विरोधः पर्युपासनं (भ - शम, नि) 5 ढ - प्रस्रवणं, न - प्रगमनं च - प्रशमनं 6 ड - वज्रं पुष्पं 7 अतःपरं, नमयोः—"संपदार्थानि बीजस्य संप्रसिद्धिकराणि च" इत्यर्धमप्युपलभ्यते 8 भ - एतान्येव 9 भ - गर्भाङ्गानि, य - गर्भे चैव 10 भ - रूपमाहरणं क्रमः ढ - हरणक्रमाः 11 च - प्रार्थनाक्षिप्तिरेव भ - तोटकाधिबले तथा । उद्वेगसंभ्रमाक्षेपा गर्भाङ्गानीति योजयेत् 12 ट - चोद्भेदो विभ्रमः

[1]एतान्यङ्गानि वै गर्भे [2]ह्यवमर्शे निबोधत ।
[3]अपवादश्च[4] संफेटो[5] विद्रवः [6]शक्तिरेव च ॥ ६३
[7]व्यवसायः प्रसङ्गश्च द्युतिः खेदो निषेधनम् ।
विरोधनमथादानं छादनं[8] च प्ररोचना ॥ ६४
[9]व्यवहारश्च युक्तिश्च विमर्शाङ्गान्यमूनि च ।
सन्धिर्निरोधो[10] ग्रथनं निर्णयः परिभाषणम् ॥ ६५
[11]द्युतिः प्रसाद आनन्दः[12] समयो [13]ह्युपगूहनम् ।
[14]भाषणं पूर्ववाक्यं च [15]काव्यसंहार एव च ॥ ६६
प्रशस्तिरिति [16]संहारे ज्ञेयान्यङ्गानि नामतः[17] ।
चतुष्षष्टि बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु ॥ ६७

---

दशाः क्रमभाविन्यः, तत्राद्यास्तावद्दशानामङ्गत्वेन वर्ण्यन्ते। अङ्गिबुद्ध्युदयात् । तत्रेति चतुर्दश निर्वहणे फलयोगबलात् सर्वा एवोपपाद्यन्ते। अन्यत्र तु मुखादौ काश्चिल्लीनीक्रियन्ते, न द्वादशादिभेदानि तत्राङ्गानीति। तदेत-

---

1 भ - अवमर्शे तु वक्ष्यानि यथाङ्गानि भवन्ति हि ड - अङ्गान्येतानि वै गर्भे विमर्शे च, 2 ट - विमर्शे च 3 भ - अवपातोऽथ 4 म - अथ 5 प - संस्फोटो 6 भ - द्रव एव च । युक्तिर्द्युतिः प्रसङ्गश्च व्यवसायो विरोधनम् । प्ररोचनाविचलनमादानं च्छेदनं तथा । अवमर्शे समाख्यातान्येतान्यङ्गानि वै द्विजाः ॥ 7 न - प्रसङ्गो व्यवसायश्च विरोधश्च प्रकीर्तितः । प्ररोचनातिबलनमादानं छलनं तथा । ड - एतान्यवमृशेऽङ्गानि भूयो निर्वहणे शृणु ॥ 8 च - छन्दनं 9 य - व्याहारश्चैव 10 ड - विरोधो 11 भ - स्तुतिः, न - कृतिः, 12 ड - प्रसादानन्दौ च 13 ड - अप्युप-, य - श्चोप-, 14 य - आभाषणं पूर्वभावं 15 ड - कार्यं 16 भ - चाङ्गानि कुर्यान्निर्वहणे पुनः, म - संहारे सन्ध्यङ्गानि चतुर्दश 17 अतः परं यढ योः "सन्धौ निर्वहणाख्ये तु कर्तव्यानि प्रयोक्तृभिः । एतेषामर्थसंबन्धं पुनर्वक्ष्यामि लक्षणम् ।" इत्यधिकः श्लोको विद्यते ।

[संपादनार्थं बीजस्य सम्यक्[1] सिद्धिकराणि च।
कार्याण्येतानि कविभि[2]र्विभज्यार्थानि नाटके॥] ६८
[3]पुनरेषां प्रवक्ष्यामि लक्षणानि यथाक्रमम्।

---

दसत्। एवं हि वक्ष्यमाणेषु तेनैव क्रमेण भाव्यम्। न चासावस्ति प्रयोजनशङ्काषट्कं ततश्चानुपपन्नं स्यात्, अनुपक्षय इत्येकमेव हि प्रयोजनं भवेत्। बीजकरणेऽपि च नियमनिदानानुपपत्तौ द्वयोर्द्वादश द्वयोस्त्रयोदशेति कुतस्त्यो विभाग इत्यास्तामदः।

पुनरेषामिति। पुनश्शब्दो विशेषद्योतकः, लक्षण एवायं क्रमो न निबन्धन इति यावत्। तेन यदुद्भटप्रभृतयोऽङ्गानां सन्धौ क्रमे च नियममाहुस्तद्युक्त्यागमविरुद्धमेव। तथा हि—'संप्रधारणमर्थानां युक्तिरित्यभिधीयते' इति यन्मुखसन्धौ पञ्चममङ्गं वक्ष्यति तत्सर्वेषु सन्धिषु तावन्निबन्धनयोग्यं, न च तथा निवेश्यं बध्यमानमदृष्टकृतं विदध्यात्। न च लक्ष्येन दृश्यते। वेणीसंहारे हि तृतीयेऽङ्के गर्भसन्धौ दुर्योधनकर्णयोर्महति संप्रधारणे द्रोणवधे वृत्ते—

तेजस्वी रिपुहतबन्धुदुःखपारं
बाहुभ्यां तरति धृतायुधप्लवाभ्याम्।
आचार्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत्॥

इत्यादि यावत्—

दत्त्वाभयं सोऽतिरथो हन्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत् कथमन्यथा॥ इति।

न चात्र प्रतीतिव्युत्पत्त्योः क्षतिः काचित्। यत्तु सन्धिनैयत्येनाभिधानं तत्र सन्धाववश्यंभावित्वख्यापनार्थं युक्तिर्मुखे भवत्येव। सन्ध्यन्तरालानि तु नेत्थमिति पृथक् तानि वर्णयिष्यन्ते। कानिचित्त्वङ्गानि स्वरूपबलादेव

---

1 ड - सन्धिकराणि तु 2 ड - विस्पष्टार्थानि 3 च - एतेषां तु पुनर्वक्ष्ये

नियमभाञ्जि, यथोपक्षेपो मुखसन्धावेव प्रथमे । एवं च न ह्यनुपक्षिप्ते वस्तुनि किञ्चिदपि शक्यक्रियम् । यत्तूच्यते '(अ १९) चतुःषष्ट्यङ्गसंयुत' मिति तेन संभवमात्रमेषामुक्तं, न तु नियमः । यथासन्निकृतः कर्तव्यानीति वचनं प्रत्युत सन्ध्यौचित्येनैषां निबन्धनमभिदधदस्मदभिहितनीतिपथोपदेश्येव, योग्यतार्थवृत्तिना हि यथाशब्देनायमव्ययीभावः ।

यत्तूक्तं शरीराङ्गनियमदर्शनात् कथमेतदिति, तत्रापि दृष्टान्ताद् व्यवस्थापि तु न संभवतः स चास्तीत्युक्तं, शाखादयश्च वृक्षावयवा मध्येऽपि ब्रध्नेऽप्यूर्ध्वेऽपि भवन्ति, न च शरीरे पादपादिवदुपक्षेपादिभिरवयवविकल्पः सन्धिरारभ्यते, यच्च प्रतिसन्ध्यभिधानं तद्बाहुल्येन तथा दर्शनात् । तथाप्युपक्षिप्तेऽर्थे विस्तारिते निश्चितगुणादभिलषिते संभावनीयमुपायादिविषयं संप्रधारणमित्युपक्षेपपरिकरपरिन्यासविलोभनहेतुत्वादन्यान्यभिधाय युक्तिरुक्ता, न तु तत्रैव सद्भावात् । आनन्तर्यनियमश्च मुनेरनभिमतो लक्ष्यते । अन्यथा सन्ध्यन्तरालानि सामादीनि मदान्तान्येकविंशतिः, लास्याङ्गानि गेयपदादीनि दश यानि वक्ष्यन्ते, तेषां कुत्र निवेशः स्यात् । सन्धिपञ्चकमयं हि रूपकं क्रमनियतं, तदङ्गसंहारभावितश्च सन्धिरिति, न च क्रमेणानेनैव तानि प्रयोज्यानीति वचनमस्ति । सदपि वा न्यायापेतमन्यथा योज्येत । न चोद्देशक्रममनूच्यते निबन्धं,* लक्षणालङ्कारगुणवीथ्यङ्गसन्ध्यन्तराणि लास्याङ्गवृत्तितदङ्गान्यपि तु असाधर्म्यदृष्टान्तः । तदेतत्प्रत्येकं लक्षणे स्फुटीभविष्यतीत्यास्तां तावत् ।

१ उपक्षेपः—तत्र प्रस्तावना न तावद्रूपकाङ्गं नटवृत्तव्याप्ततयेतिवृत्तानन्तुप्रवेशात् । इति तदनन्तरं पूर्वं, काव्यार्थ इतिवृत्तशरीरलक्षणोऽभिधेयः प्रधानरसलक्षणं च प्रयोजनसंक्षेपेणोपक्षिप्यते । यथा वेणीसंहारे भीमः—

लाक्षागृहानलविषान्नगृहप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान्
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ इति

---

* 'क्रम इत्युच्यते निबन्धः' इति स्यात् ।

[1]काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ॥ ६९

२ परिकरः—तत ईषद् विस्तार्यते (परिकरः)। यथा भीमः—

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम्।
जरासन्धस्योरस्तलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत ॥ (अ १-१०)

३ परिन्यासः—ततोऽपि निश्चयापत्तिरूपतया परितो हृदये सोऽर्थो-न्यस्यते (परिन्यासः)।

यथा— चञ्चद्भुजाभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचान्स्तव देवि भीमः ॥ (१-२१) इत्यादि।

४ विलोभनम्—ततस्तदेव गुणवदिति श्लाघ्यते, श्लाघैव विलोभनहेतुत्वाद्विलोभनम्। यथा—द्रौपदी—अणुगह्णन्तु मए एदं वअणं देवदाओ (अनुगृह्णन्तु मे एतद्वचनं देवताः) इत्यादि। यथा वा विक्रमोर्वश्यां—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ इत्यादि।

तदेतदुपक्षेपाद्यङ्गचतुष्कं प्रायशो मुखसन्धौ भवति। उक्तेनैव न पौर्वापर्येण भवति। आनन्तर्यनियमस्तु नास्ति, न सन्ध्यन्तराणां सामादीनां मध्येऽनुप्रवेशात्। तदेतदाह मुनिः काव्यार्थस्य समुत्पत्तिरित्यादिना विलोभनमिति स्मृतमित्यन्तेन तत्र वृत्तान्तेनोपक्षयः सर्वेषां प्रयोजनमित्युक्तम्। परिकरस्य प्रयोजनमिष्टार्थस्य रचनापि।

1 भ - काव्यस्यार्थं, ड - कार्यस्यार्थं

[1]यदुत्पन्नार्थबाहुल्यं[2] ज्ञेयः परिकरस्तु सः ।
[3]तन्निष्पत्तिः परिन्यासो विज्ञेयः कविभिः सदा ॥
गुणनिर्वर्णनं चैव[4] विलोभनमिति स्मृतम् ।
संप्रधारणमर्थानां युक्तिरित्यभिधीयते[5] ॥ ७१
[6]सुखार्थस्याभिगमनं प्राप्तिरित्यभिसंज्ञिता[7] ।
[8]बीजार्थस्योपगमनं समाधानमिति स्मृतम् ॥ ७२

---

५ युक्तिर्यथा—'सहदेवः—आर्य, किंचन महाराजसन्देशोऽयं आर्येण-व्युत्पन्न एवं गृहीतः' इत्यतः प्रभृति यावद्भीमवचनम्—

युष्मान् ह्रेपयते क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥ (१-१७) इति ।

अस्याः प्रयोजनं प्रकाश्यप्रकाशनमपि ।

६ प्राप्तिः—सुखार्थस्याभिगमनं प्राप्तिरिति । सुखयतीति सुखं तादृशस्य वस्तुनः । यथा (वेण्याम्)—"एष खलु भगवान् वासुदेवः पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्धः" इत्यादि "कुमारमविलम्बितं द्रष्टुमिच्छामीति । "अयं ह्यर्थो भीमस्य चेतः सुखय"तीति सन्धेर्विघटनात् (प्राप्तिः) ।

७ समाधानम्—बीजार्थस्योपगमनमिति । यस्मिन् बीजं तदिदानीं

---

1 भ - समुत्पन्न-, ढ - यदल्पं नार्थं 2 भ - बाहुल्ये 3 ड - तन्निष्पत्त्या तु कथनं परिन्यासः प्रकीर्तितः, च - तन्निर्वृत्तिः ट - तन्निष्पत्तिस्तु कथनं परिन्यासः प्रचक्ष्यते 4 ढ - निर्वहणं तज्ज्ञैः ड - यत्तु ट - निर्वर्णना यत्तत् 5 भ - संज्ञितम् 6 भ - मुख्यार्थस्योप, प - सुखार्थस्योप-, 7 न - धीयते 8 भ - बीजस्यागमनं यत्तु तत्समाधानमिष्यते ढ - बीजार्थस्याभि-, फ - बीजार्थागमनं यत्तु तत्...उच्यते

[1]सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ।
[2]कुतूहलोत्तरावेगो[3] विज्ञेया [4]परिभावना ॥ ७३

प्रधाननायकानुगतत्वेन सम्यगाहितं भवतीति (समाधानम्) । "यौधिष्ठिर"-मित्यनेन* समाधानं दर्शितम् ।

८ विधानम्—सुखदुःखकृतो योऽर्थस्तद्विधानमिति । व्यामिश्रतया सुख-दुःखे अभिधीयेते यत्रेति (विधानम्) । यथा—

भीमः—तत्पाञ्चालि गच्छामो वयमिदानीं कुरुकुलक्षयाय ।

द्रौपदी—णाह जं असुरसमराहिमुहस्स हरिणो मङ्गलं तं तुंहाण होदु—(नाथ, यदसुरसमराभिमुखस्य हरेर्मङ्गलं तत्तव भवतु) इत्यादि (अ १) तथा—"मा अनवेक्खिदसरीरा संचरह, अप्पमत्त संचरिणिज्जाइं रिपुवलाइं—(मा अनपेक्षितशरीराः संचरथ, अप्रमत्तसंचरणीयानि रिपुबलानि)" इति । अत्र द्रौपद्याः प्रहर्षो भयं च मिश्रतया विहितमिति विचित्रत्वाद् रसवत्ता भवति । तेनेष्टस्यार्थस्य रचना, तथा निगूह्यस्य नायिकाचित्तनिस्त्रिंशभावस्य निगूहनं प्रयोजनम् । एवमन्यत्रापि प्रयोजनमुत्प्रेक्ष्यम् । युक्तिवच्चेदमन्यत्रापि संभवत्येवेत्येवमन्यत्राप्यूह्यम् ।

९ परिभावना—कुतूहलेति कौतुकेन जिज्ञासातिशयेन व्यामिश्रो य आवेगः सा परिभावना किमेतदिति । यथा—संग्रामं संघटनया संशयमाना द्रौपदी तूर्यशब्दं श्रुत्वाह—"णाह किं दाणिं एसो पळअंतजळहरत्थणिदमंसळो

---

1 भ - सुखतो दुःखतो योऽर्थस्तद्विधानमिहोच्यते 2 ड - कौतूहलोत्तरो वेधो भवेत्तु 3 भ - वेध्यो, न - वेधो, ट - वेदो, च - वेध्या 4 प - प्रोक्ता तु न - भवेत्तु

---

* यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृपशुना केशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥ (१-२५)

[1]बीजार्थस्य प्ररोहो यः स उद्भेद इति स्मृतः[2] ।
[3]प्रकृतार्थसमारम्भः करणं नाम तद्भवेत्[4] ॥ ७४
[5]संघातभेदनार्थो यः स भेद इति कीर्तितः[6] ।

---

खणे खणे समरदुन्दुभी ताडीअदि—(नाथ किमिदानीमेष प्रलयान्तजलधरस्तनितमांसलो क्षणे क्षणे समरदुन्दुभिस्ताड्यते)" इति

१० उद्भेदः—बीजार्थस्य प्ररोह इति । यथा—द्रौपदी—हा णाह पुणो वि तुए अहं समस्ससइदव्वा (हा नाथ, पुनरपि त्वयाहं समाश्वासयितव्या)

भीमः—भूयः परिभवक्लान्तिलज्जाबन्धुरिताननम् ।
अनिश्शेषितकौरव्यं न पश्यसि वृकोदरम् ॥ इति ।

न चेदमुद्घाटनं येन प्रतिमुखं भवेत्, अपि तु शत्रुक्षयारम्भं बीजस्याङ्कुरः कुरुकुलोद्घाटनेन विनापि प्ररोहमात्रमनुस्थानानुगुण्यात् भूमिसंश्लोष इव बीजस्य ।

११ करणम्—प्रकृतार्थसमारम्भः करणमिति* । यथा—

सहदेवः—गच्छामो वयमिदानीं कुरुराजानुज्ञाताः विक्रमानुरूपमाचरितुम्, इत्यादि (वेणी-१) ।

१२ भेदः—संघातभेदनार्थो यः स भेद इति । पात्रसंघातस्य यन्निजप्रयोजनोपक्षेपेण निष्क्रमणसिद्धये भेदनं प्रकरणमिव स भेदः । सर्वत्राङ्केऽन्तर्भावी वस्तूपायात्मा भेदः, स सन्ध्यन्तरैकविंशतौ वक्ष्यते । अस्यो-

---

1 भ - उद्भेदस्तद्विनिष्पत्तिर्विज्ञेयो द्विजसत्तमाः (ब - उद्भेदस्य विनि) 2 प - उद्भेदः स तु कीर्तितः 3 भ - अर्थानुस्मरणं चैव प - प्रत्यक्षार्थं 4 ड - समारम्भं करणं परिचक्षते 5 च - संपात भ - उत्साहजननं भेदो विज्ञेयस्तु प्रयोक्तृभिः प - संघातरूपभेदो यः ट - संभूत 6 ड - संज्ञितः

---

* अन्ये तु विपदां शमनं करणमाहुः

[एतानि तु मुखाङ्गानि वक्ष्ये प्रतिमुखे पुनः] ॥
[1]समीहा रतिभोगार्था विलास इति संज्ञितः[2] ।

---

दाहरणं—(वेण्यां—अं १-भीमवाक्यम्) "अन्योन्यास्फालभिन्न" इत्यादि यावत् "पाण्डुपुत्राः" * इति ।

अथ प्रतिमुखोद्दिष्टानामङ्गानामुद्देशक्रमेण लक्षणमाह

१३ विलासः—समीहा रतिभोगार्था विलास इति । रतिलक्षणस्य भावस्य हेतुभूतो यो भोगो विषयः प्रमदा पुरुषो वा तदर्था या समीहा स विलासः । कामफलेषु रूपकेषु प्रतिमुख एव ह्यास्थाफलत्वेन रतिरूपेण भाव्यम् । यथाभिज्ञानशाकुन्तले—

तापसः—कस्येदमुशीरानुलेपनमित्यादि । तथा राजा—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ इत्यादि ।

यस्तु वेणीसंहारे भानुमत्या सह दुर्योधनस्य दर्शितो विलासः, स नायकस्य तादृशेऽवसरेऽत्यनुचित इति चिरन्तनैरेवोक्तम् । यथा सहृदयालोककारः—

सन्धिसन्ध्यङ्गघटनं रसबन्धव्यपेक्षया ।
न तु केवलशास्त्रार्थस्थितिसंपादनेच्छया ॥ (ध्वन्या ३)

एतच्च विवरण एवास्माभिर्विनत्य दर्शितम् ।

इह च रतिग्रहणं पुमर्थोपयोगि रसगतस्थायिभावोपलक्षणं तेन वीरप्रधानेषु रूपकेषु प्रतिमुख एव ह्यास्था रतिरूपेण उत्साहः । सम्यग्विषया

---

1 भ - संभोगरतिसंपन्नो 2 ड - कीर्तितः

---

* अन्योन्यास्फालभिन्नद्विपरुधिरवसासान्द्रमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
संग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥

दृष्टनष्टानुसरणं परिसर्प इति स्मृतः[1] ॥ ७६
[2]कृतस्यानुनयस्यादौ विधूतं ह्यपरिग्रहः ।
[3]अपायदर्शनं यत्तु तापनं[4] नाम तद्भवेत् ॥ ७७

---

समीहा चेष्टा विलास इति मन्तव्यम् । पुरुषचैतन्य एव हि रसो मुख उपक्षिप्तः । तस्यैव स्वयं प्रतिमुखस्थोचितात्मसंभावितः कर्तव्यः । लस श्लेषणेऽपि हि पठ्यते ।

१४ परिसर्पः—दृष्टनष्टानुसरणं परिसर्प इति । यथा (वेण्यां) कञ्चुकी—"आशस्त्रग्रहणादकुण्ठपरशोः" * इत्यादि दृष्टनष्टप्रायो हि कार्यान्तरव्यासङ्गात् । कुरुकुलक्षयो भीष्मवधेन स्थानपरितोषसूचितेन च दुर्योधनस्यायुक्तचेष्टितत्वेनानुसृत इति प्रकृतस्यार्थस्य परिसर्पणात् प्रसरणात् परिसर्पः । यथा चाभिज्ञानशाकुन्तले भवितव्यमात्रतया । तथा हि—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यते हि नवा ॥ (३-५) इति ।

१५ विधूतम्—§ कृतस्यानुनयस्येति । आदौ प्रथमतः, कृतस्यानुनयस्य सामवचसो नाङ्गीकरणं विधूतं, पश्चात् पुनरङ्गीकरणमिति । आदिशब्दात् (उपरोधः), यथा—तत्रैव—शकुन्तला—अइ किं अंतेउरविरहपय्युसिएण राएसिणा अवरुद्धेण—इत्यादि ।

१६ तापनम्—† अपायदर्शनं यत्तु तापनमिति । यथा रत्नावल्याम्—

---

1 स वर्ण्यते, प - प्रकथ्यते 2 भ - विधूतमरतिं प्राहुस्तथा च द्विजसत्तमाः ट - क्रुद्धस्य न - कृतस्य विनयस्य 3 भ - विलापवचनं म - तस्यापनयनं यत्र शमनं 4 ट - शमनं

* वेणीसंहारे (अ २-२)

§ विधूतमरतिं प्राहुः केचित् । तत्रारतिरित्यभीष्टानवाप्तितो दुःखम्

† केचित्तु तापनस्थाने शमनं पठन्ति, अरतेः शमनमथवानुनयग्रहणादरतेर्निग्रहः शमनम् ।

[1]क्रीडार्थं विहितं यत्तु हास्यं नर्मेति [2]तत्स्मृतम् ।
[3]दोषप्रच्छादनार्थं तु हास्यं नर्मद्युतिः स्मृता[4] ॥ ७८

---

दुल्लहजणाणुराओ लज्जागुरुई परवसो अप्पा ।
पिअसहि विसमं पेम्मं मरणं सरणं णु वरमेक्कम् ॥ * (२-७)

१७ नर्म—क्रीडार्थं विहितं यत्तु हास्यं नर्मेति। यथा (रत्नावल्यां द्वितीयेऽङ्के) विदूषकः—

भो मा पांडिच्चगव्वं उव्वह, अहं एदाअ मुहादो सुणिअ वक्खाणइस्सं—(भो मा पाण्डित्यगर्वमुद्वह । अहं एतस्या मुखात् श्रुत्वा व्याख्यास्यामि) इत्यादि ।

१८ नर्मद्युतिः—दोषप्रच्छादनार्थं तु हास्यं नर्मद्युतिरिति । दोषो येनोक्तेन प्रच्छादयितुमिष्यते तस्यापि हास्यजननत्वेन नर्म च सुतरां द्योतितं भवतीति नर्मद्युतिः । यथा च (रत्नावल्यां द्वितीयेऽङ्के विदूषकः)—चउव्वेई विअ बम्हणो रिअइं पट्ठिदुं पवुत्ता । (चतुर्वेदी ब्राह्मण इव ऋचः पठितुं प्रवृत्ता । इत्यभिहिते

राजा—नावधारितं मया

ततो विदूषकः—दुल्लहजणाणुराओ†

इति पठति । अत्र हि मौर्ख्यदोषं छादयितुं यद्विदूषकेणोच्यते तद्राज्ञो हास्यजननमिति नर्मैव द्योतितं भवति । तथा हि राजा—महाब्राह्मण कोऽन्य एवमृचामभिज्ञः—इति ।

---

1 थ - क्रीडाविलोभनार्थं तु न - क्रीडाविनोदनार्थं तु भ - हास्यप्रायं तु यद्वाक्यं तन्नर्म परिकीर्तितम् 2 च - संज्ञितम् न - कीर्तितम् 3 भ - रतिनर्मकृता चैव द्युतिरित्यभिसंज्ञिता 4 न - नर्मद्युति स्मृतम्

---

* दुर्लभजनानुरागः लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणं नु वरमेकम् ॥

† पूर्णा गाथा छाया चास्मिन् पृष्ठे दत्ता.

उत्तरोत्तरवाक्यं तु भवेत्प्रगयणं[1] पुनः।
या तु व्यसनसंप्राप्तिः स निरोधः प्रकीर्तितः[3] ॥७९
क्रुद्धस्यानुनयो [4]यस्तु भवेत्तत्पर्युपासनम्।

---

१९ प्रगयणम्—उत्तरोत्तरवाक्यन्तु भवेत्प्रगयणमिति। (यथा—रत्नावल्यां द्वितीयेऽङ्के) विदूषकः—किं णु खु दाणिं गाहेयम् (किं नु खलु इदानीं गाथेयम्)

राजा—कयापि श्लाघ्यनवयौवनया प्रियतमममनासादयन्त्या जीवितनिरपेक्षयेदमुक्तम्। विदूषकः—भो किं एदेहिं णं.........(भोः किमेतैः न) इत्यादि। प्रगयणमिति रूढिशब्दः।

अन्ये तु प्रजाशब्दात् क्विपि क्विप्यथनशब्देन शता क्विना व्युत्पत्तिं कल्पयन्ति। प्रागयणमित्यन्ये पठन्ति—प्रागिति पूर्ववचनं ततोऽयनं प्राप्तिः यस्योत्तरवचनस्येति। *

२० निरोधः—या तु व्यसनसंप्राप्तिः स निरोध † इति। (यथा-रत्नावल्यां द्वितीयेऽङ्के) राजा "उच्चैर्हसता त्वयेयं त्रासिता" (इति), व्यसनमत्र खेदमात्रमभीष्टोपरोधान्निरोधः।

२१ पर्युपासनम्—क्रुद्धस्यानुनयो यस्त्विति। यथा—(तत्रैव) विदूषकः—भो मा कुप्प एसा खु कदलीघरन्ते ··एहि ‡ इत्यादि। राजा अनुनीतः सन्नाह—

---

1 च - अधरोत्तर भ - विज्ञेयं तु प्रशमनं विषादशमनोद्भवम् 2 प - प्रगमणं ड - प्रगमनं बुधाः 3 भ - विरोध इति संस्मृतः ढ - विरोधः स तु संज्ञितः प - मुखानां संनिवेशो यः स निरोध इति स्मृतः 4 भ - यश्च तद्भवेत्

---

* अन्ये तु प्रगमनमिति प्रशमनमिति च पठन्ति

† केचिद्विरोध इति अन्ये रोध इति च पठन्ति.

‡ भो मा कुप्य, एषा खलु कदलीगृहान्तरे (वर्तते), एहि

विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम् ॥ ८०

[1]प्रत्यक्षरूक्षं यद्वाक्यं वज्रं तदभिधीयते ।

[2]उपपत्तिकृतो योऽर्थ उपन्यासश्च[3] स स्मृतः ॥ ८१

---

दुर्वारां कुसुमशरव्यथां वहन्त्या
कामिन्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शुकशिशुसारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति ॥ इत्यादि ।

२२ पुष्पम्—विशेषवचनं यत्तु पुष्पमिति । यथा (तत्रैव विदूषकः)—एसो को वि चित्तफलहओ (एष कोऽपि चित्रफलकः)—इत्यादि विदूषकोक्तेः प्रभृति यावत् "परिच्युतस्तं कुचकुम्भमध्यात्" इत्यादि* । यथा हि प्रेमविकासि पुष्पं भवत्येवमत्रापि राज्ञ उत्तरोत्तरानुरागविशेषसूचकं वचो विकासमस्यानुरागस्य दर्शयति । तथा हि सुसङ्गता—सहि गरुआणुराग-विक्खित्तहिअओ असंवद्धं भट्टा मन्तेदुं पवुत्तो (सखि गुर्वनुरागविक्षिप्तहृदयोऽसंबद्धं भर्ता मन्त्रितुं प्रवृत्तः) इत्यादि ।

२३ वज्रम्—प्रत्यक्षरूक्षं यद्वाक्यं वज्रमिति । यथा (तत्रैव)—"कथमिहस्थोऽहं भवत्या ज्ञात" इति राजन्युक्तवति सुसङ्गता—ण केवलं तुमं, चित्तफलहेण । ता जाव गदुअ देवीए णिवेदेमि । (न केवलं त्वं, चित्रफलकेण । तद्यावद्गत्वा देव्यै निवेदयामि) ।

२४ उपन्यासः—उपपत्तिकृतो योऽर्थ उपन्यास इति । यथा (तत्रैव) विदूषकः (ससाध्वसं)—अदिमुहरा खु एसा गब्भदासी (अतिमुखरा खल्वेषा गर्भदासी) । अत्र मौखर्यात्मिकोपपत्तिरुपन्यस्ता । †

---

1 च - प्रत्यक्षरूपं भ - रूक्षप्रायं तु 2 भ - सोपायवचनं यत्तु स उपन्यास उच्यते 3 न - श्च संस्मृतः

* परिच्युतस्तत्कुचकुम्भमध्यात् किं शोषमायासि मृणालहार ।
न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः किमु स्यात् ॥

† केचिदुपन्यासः प्रसादनमित्याहुः । भोजेन तूपन्यासाङ्गं परिहृतम् ।

चातुर्वर्ण्योपगमनं[1] वर्णसंहार इष्यते[2]।
[3]कपटापाश्रयं वाक्यमभूताहरणं विदुः॥ ८२
[4]तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते।

---

२५ वर्णसंहारः—चातुर्वर्ण्योपगमनं वर्णसंहार इति। चातुर्वर्ण्यशब्देन पात्राण्युपलक्ष्यन्ते। तेन यत्र पात्राणि पृथक् स्थितान्यपि ढौक्यन्ते स वर्णसंहारः। उपाध्यायास्त्वाहुः—इह वीरप्रधाने तावन्नायकप्रतिनायकौ तत्सचिवौ च प्रधानत्वेन वर्ण्यन्त इति वर्णाः, कामप्रधानेऽपि नायको नायिका तत्सचिवौ चेति। तथा हि रत्नावल्यां (द्वितीयेऽङ्के) सुसङ्गताया वचनात्—"अदो मे अअं गरुओ पसाओ (अतो ममायं गुरुः प्रसादः)" इत्यारभ्य, राजा—कासौ। सुसङ्गता—हत्थे गेह्णअ सहिं पसाएहि णं (हस्ते गृहीत्वा सखीं प्रसादयैनाम्)—इत्यादि। अत्र चतुर्णामेकीभावः प्रयोगस्य, इष्टस्य रचना, प्रकाश्ये प्रकाशनमित्यपि प्रयोजनानि। यत्तु ब्राह्मणादिवर्णचतुष्टयमेलनमिति तद्फलत्वादनादृत्यमेव।

अथ गर्भाङ्गान्युद्देशक्रमेण लक्षयति।

२६ अभूताहरणम्—कपटापाश्रयं वाक्यमभूताहरणमिति। यथा वासवदत्तया चित्रफलके दृष्टे विदूषकवचनं—अप्पा किल दुक्खेण आलिहिदुत्ति मम वअणं सुणिअ पिअवयस्सेण विण्णाणं दंसिअं (आत्मा किल दुःखेनालिखितुमिति मम वचनं श्रुत्वा प्रियवयस्येन विज्ञानं दर्शितम्)—इत्यादि।

२७ मार्गः—तत्त्वार्थवचनं मार्ग इति। (तत्रैव) "भट्टिणि कदा वि घुणक्खरं त्ति संभावीयदि (भर्त्रि कदापि घुणाक्षरमपि संभाव्यते)" इति

---

1 भ - चतुर्वर्णाभिगमनं प - वर्णितार्थतिरस्कारो प - उच्यते 2 भ - इतः परं—"एतानि तु प्रतिमुखे गर्भे चापि निबोधत" इत्यर्धमधिकं वर्तते 3 य - अभूताहरणं तत्स्याद् वाक्यं यत्कपटाश्रयम् भ - कपटाय तु यद्वाक्यमभूताहरणं तु तत् 4 च - सत्त्वार्थ

---

* वर्णितार्थतिरस्कारो वर्णसंहार इति पाठे उक्तार्थस्य विषयान्तरप्रसक्तया प्रच्छादनम्।

[1]चित्रार्थसमवाये तु वितर्को रूपमिष्यते ॥ ८३
[2]यत्सातिशयवद्वाक्यं तदुदाहरणं स्मृतम् ।

---

काञ्चनमालयोक्ते वासवदत्ता समयानुसारि परमार्थोचितं वचनमाह—अइ उज्जुए वसन्दओ खु एसो (अयि ऋजुके वसन्तकः खल्वसौ)—इत्यादिमार्गवच्च प्रसिद्धत्वात् परमार्थे मार्ग इति व्यपदेशः ।

२८ रूपम्—* चित्रार्थसमवाये तु वितर्को रूपमिति । यथा (रत्नावल्यां द्वितीयेऽङ्के) राजा—प्रसीदेति ब्रूयामिदमसति कोपे न घटते † । इत्यादि विचित्रार्थानां समवाये संभावने सर्वविषय एव विरुद्धस्तर्कः, इदं नोचितमिदं नोचितमिति प्रतियुक्तिपर्यन्तः । युक्तिस्तु नियतप्रतिपत्तिपर्यन्तेति विशेषः, रूपमिति चानियता आकृतिरुच्यते । तत्र विशेषप्रतिपत्तिरिहापि तथोपचाराद् व्यपदेशः ।

२९ उदाहरणम्—यत्सातिशयवद्वाक्यं तदुदाहरणमिति । लोकप्रसिद्धवस्त्वपेक्षया यत् सातिशयमुच्यते उत्कर्षमाहरतीत्युदाहरणम् । यथा (तत्रैव तृतीयेऽङ्के)—

मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे ।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ इति ।

---

1 भ - चित्रार्थै वाक्यसंयोगे रूपकं तु विनिर्दिशेत् न - चिन्तार्थे, म - चिन्त्यार्थे, द - चित्रार्थसमवायो यस्तद्रूपमिति कीर्तितम् 2 य - यत्र सातिशयं वाक्यमुदाहरणमिष्यते भ - यत्तु सातिशयं वाक्यं तदाहरणमिष्यते



* चित्रार्थौ वाक्यसंयोगो रूपकमिति पाठे रूपकं संशयस्य तर्केण च्छेदनमिति केचित् । अन्ये तु चित्रार्थमेव वचो रूपकमिति मन्यन्ते ।

† करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ॥

[1]भावतत्त्वोपलब्धिस्तु क्रम इत्यभिधीयते ॥ ८४
[2]सामदानादिसंपन्नः [3]संग्रहः परिकीर्तितः ।
[4]रूपानुरूपगमनमनुमानमिति स्मृतम् ॥

---

तथा च—

वाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम् ।
दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥

इत्यादि ।

३० क्रमः—भावतत्त्वोपलब्धिस्तु क्रम इति । भावस्य भाव्यमानस्य वस्तुनो भावनातिशये सत्यूहं प्रति भावनादिबलात् स्यात् या परमार्थोपलब्धिः सा क्रमः । बुद्धिर्हि तत्र क्रमते न प्रतिहन्यते । यथा (तत्रैव)—

ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरम् ॥ इत्यादि ।

३१ संग्रहः—सामदानादिसंपन्नः मङ्ग्रह इति । साम्ना सङ्केतादिवार्ताः श्रुत्वा (राज्ञा विदूषकाय) कटकस्य दानम् । एवमन्यदपि ।

३२ अनुमानम्—रूपानुरूपगमनमिति । रूप्यमानेन प्रत्यक्षाद्युपलभ्यमानेन रूपस्य व्यापकस्याविनाभाविनो गमनं ज्ञानमनुमानं निश्चयात्मकत्वादूहः, उपायायुक्तेरन्यत्वात् । यथा (तत्रैव)—

---

1 भ - तत्त्वोपलब्धिर्वाक्यस्य ढ - तत्त्वोपपत्तिर्भावस्य 2 भ - युक्तस्तु सामदानाभ्यां विज्ञेयः संग्रहो बुधैः च - सामदानार्थै 3 ढ - संयोगः संग्रहः स तु कीर्तितः प - संयुक्तः 4 भ - रूपं तु गमनं लिङ्गादनुमान इति स्मृतः

[1]रतिहर्षोत्सवानां तु प्रार्थना प्रार्थना भवेत्।
गर्भस्योद्भेदनं यत्साक्षिप्तिरित्यभिधीयते ॥[2] ८६

पालीयं चम्पकानां नियतमयमसौ सुन्दरः सिन्दुवारः
सान्द्रा वीथी तथेयं वकुलविटपिनां पाटलापङ्क्तिरेषा ।
आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मिन्
व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमोनिह्नुतोऽप्येष चिह्नैः ॥

इत्यादि । अत्र ह्याघ्रायाघ्राय गन्धमिति गन्धानि(तु?) कुसुमानि तेभ्यः पादपाः, तेभ्योऽपि मार्गमनुमापितमिति राज्ञा विदूषकस्योक्तेः ।

३३ प्रार्थना—रतिहर्षोत्सवानां तु प्रार्थना प्रार्थनेति । एतत् साध्यफलोचितभावलक्षणं, तत्र साध्यफले यः प्राधान्येन समुचितो भावस्तद्विषया या प्रकर्षेणाभ्यर्थना सा प्रार्थनाख्यमङ्गम् । यथा (तत्रैव)—संकेतस्थः प्रतिपालयन् राजा—

तीव्रः स्मरसन्तापो न तदादौ बाधते यथासन्ने ।
तपति प्रावृषि हि तरामभ्यर्णजलागमो दिवसः ॥ इति ।

३४ आक्षिप्तिः—गर्भस्योद्भेदनाक्षिप्तिरिति । हृदयान्तःस्थितं (तस्य) पुनः प्रतिष्ठापितस्यापि यतः कुतश्चिन्निमित्तादुद्भेदनमनपह्नवनीया या स्फुटतापत्तिः सा आक्षिप्तिः, अभिप्रायस्य हि तत्राक्षेपो बहिः कर्षणं । वासवदत्तायामेव सागरिकेति राज्ञा विदूषकेण च परिगृहीतायां तदुक्तिषु "सागरिके, *शीतांशुर्मुखमुत्पले तव दृशौ" इत्यादिषु ।

1 म - कार्यानुनयपूर्वस्तु नियोगः. प - अभ्यर्थनापरं वाक्यं प्रार्थनेत्यभिधीयते भ - मातृकायां प्रार्थनालक्षणं नोपलभ्यते ट - अतिहर्षोत्सवार्थानां
2 भ - यत्तु तमाक्षेपं विदुर्बुधाः ढ - उच्छेदनं यत्तु तदाक्षिप्तमिति स्मृतम्, म - उद्भेदनं यत्तु तदुपक्षिप्तमिष्यते

* शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मामङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥

संरम्भवचनं [1]चैव तोटकं त्विति संज्ञितम् ।
[2]कपटेनातिसन्धानं ब्रुवतेऽधिबलं बुधाः ॥ ८७
भयं [3]नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः ।

३५ तोटकम्—संरम्भवचनं चैव तोटकमिति । आवेगगर्भं यद्वचनं तत्तोटकम् । स चावेगो हर्षात्, क्रोधात्, अन्यतोऽपि वा । भिनत्ति यतो हृदयं ततस्तोटकम् । यथा (तत्रैव) विदूषकः—अज्ज वि दाव से देवीए णिव्वरुद्धाए वासवदत्ताए वअणेहि कडुइदे कण्णे सुहावीअदु (अद्यापि तावत्तस्या देव्या निर्व्यरूढाया वासवदत्ताया वचनैः कटूकृते कर्णे सुखय) इत्यादि ।

३६ अधिबलम्—कपटेनातिसन्धानमधिबलमिति[1] । परस्परवचनप्रवृत्तयोर्यस्यैवाधिकं (कर्म) सहायबुद्ध्यादीनवलम्बयति स एव तमतिसन्धातुं वञ्चयितुं समर्थ इति तदिदं कर्माधिबलम्[2] । यथा—सागरिकावेषं धारयन्ती वासवदत्ता विदूषकबुद्धिदौर्बल्याद्राजानमतिसंधत्ते 'किं पद्मस्य रुचिं न हन्ति'† इत्यादि श्लोकान्तमधिभलम्[2] ।

३७ उद्वेगः—भयं नृपारिदस्यूत्थमुद्वेग इति । [3]अरिशब्दान्नाचिकादि । यथा (तत्रैव) राजा—कथं देवी वासवदत्ता, वयस्य किमेतत् । विदूषकः—णं अंहाणं जीविअसंशओ (ननु अस्माकं जीवितसंशयः)—इत्यादि ।

1 द - (वचन) प्रायं तोटकं त्विह, भ - यत्र तोटकं नाम तद्भवेत् 2 भ - कपटप्रवृत्तो योऽर्थो विज्ञेयोऽधिबलो हि सः द - कपटेनाभिसन्धानं ज्ञेयं त्वधिबलं बुधैः (न - त्वति. द - चातिबलं) प - कपटस्यान्यथाभावं य - अनुमानार्थसंयुक्तं विद्यादतिबलं तथा 3 भ - नृपारिसंयुक्तमुद्वेग इति कीर्त्यते ट - नृपादि, प - नृपारिजनितं

1 अतिबलमिति 2 अतिबलम् 3 आदि
† गर्भसन्धिलक्षणेऽयं श्लोक उदाहृतः ।

[1]शङ्का भयत्रासकृतो विद्रवः सुमुदाहृदः ॥ ८८
[2]दोषप्रख्यापनं यत्तु सोऽपवाद इति स्मृतः[3] ।

३८ विद्रवः—शङ्का भयत्रासकृतो विद्रव इति । भयत्रासकारिणो वस्तुनो या शङ्का यदाशङ्कनं स विद्रवः, विद्रवति विलीयते हृदयं येनेति । यथा (तत्रैव)—

* प्रिया मुञ्चत्यद्य ध्रुवमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥ इति ।

अन्ये तु शङ्काभयत्रासैः कृतो यः स विद्रव इति । तत्र च विशेष्यपदमन्वेष्यम्, समुदाय एव विशेष्य इति श्रीशङ्कुकः, उदाहरति च कृत्यारावणे षष्ठेऽङ्के गर्भसन्धौ, (नेपथ्ये) (मण्डोदरी)—हा अय्यउत्त परित्ताआहि परित्ताआहि (हा आर्यपुत्र परित्रायस्व परित्रायस्व)। प्रतीहारी (श्रुत्वा आत्मगतं)—अंहो भट्टिणी विअ आक्खंददि । (अहो भर्त्रीवाक्रन्दति) (प्रकाशं) भट्टा भवदो अन्तेउरे महन्दो कलकलो सुणीअदि । (भर्तः भवतोऽन्तःपुरे महान् कलकलः श्रूयते)

राजा—ज्ञायतां किमेतदिति ।

अत्र रावणस्याशङ्का प्रतिहार्यास्त्रासभये ।

अथावमर्शसन्धावङ्गानां लक्षणमाह—

३९ अपवादः—दोषप्रख्यापनं यत्तु सोऽपवाद इति । यथा (तत्रैव) सागरिकोक्तेरनन्तरं † राजा—अयि मिथ्यावादिनी खल्वसि—

1 भ - नृपारिभयसंयुक्तः संभ्रमस्त्वभिसंज्ञितः ङ - नृपाग्निभयसंयुक्तः संभ्रमो विद्रवः स्मृतः 2 इतः पूर्वं भढपादिषु—"एतान्यङ्गानि गर्भे तु वक्ष्येऽवमर्शने पुनः (ढ - श्याम्यवमृशे)" इत्यर्धमुपलभ्यते, न - "गर्भाङ्गलक्षणं प्रोक्तं विमर्शे च निबोधत" इति संदृश्यते भ - विशेषवचनं यत्तु ट - दोषप्रख्यापनं यत्स्यात् 3 न - यत् स्यादपवादस्तु स स्मृतः

* पूर्वार्धं—समारूढा प्रीतिः प्रणयबहुमानादनुदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।

† सागरिका—अय्यउत्त किं अलीअदक्खिणदाए जीविदादो वि वल्लहदाराए देवीए अत्ताणअं अवराहिणं करोसि (आर्यपुत्र, किमलीकदाक्षिणतया जीविताद्वल्लभाया देव्या आत्मानमपराधिनं करोषि)।

[1]रोषग्रथितवाक्यं तु संफेटः[2] परिकीर्तितः ॥ ८९
[3]गुरुव्यतिक्रमो यस्तु[4] स द्रवः परिकीर्तितः ।
[5]विरोधिप्रशमो यश्च सा शक्तिः परिकीर्तिता ॥ ९०

---

श्वासोत्कम्पिनि कम्पितं स्तनयुगे मौने प्रियं भाषितं
वक्त्रेऽस्याः कुटिलीकृतभ्रुणि रुषा यातं मया पादयोः ।
इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं
प्रेमाबद्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥ इति

अत्र देवीगुणानां सातिशयकोपनत्वेनापवदनं कृतम् ।

४० संफेटः—रोषग्रथितवाक्यन्तु संफेट इति । केचित्तु स्फोट अनादर इति धातुं मनस्कृत्य संस्फोट इति पठन्ति । यथा (तत्रैव)—वासवदत्ता (सरोषं सहसोपसृत्य) अय्यउत्त, जुत्तं......सरिसं (आर्यपुत्र, युक्तं, सदृशम्) ......इत्यादि ।

४१ द्रव—गुरुव्यतिक्रमो यस्तु स द्रव इति । यथा (तत्रैव)—भर्तृसंनिधानेऽपि विदूषकस्य सागरिकायाश्च वासवदत्तया बन्धनम् । यथा वा—तापसवत्सराजे षष्ठेऽङ्के वासवदत्ताया यौगन्धरायणवचनातिक्रमेण मरणाध्यवसायः । द्रवणं चलनं मार्गादिति द्रवः ।

४२ शक्तिः—विरोधिप्रशमः शक्तिरिति । विरोधिनः कुपितस्य प्रशमः प्रसादनं शक्तिः बुद्धिविभवादिशक्तिकार्यत्वात् । यथा (तत्रैव)—

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्या भृशं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः ।
प्रत्यापत्तिमुपागता मम तथा देवी रुदत्या तथा
प्रक्षाल्यैव तथैव बाष्पसलिलैः कोपोऽपनीतः स्वयम् ॥ इत्यादि ।

---

1 ट - दोष 2 प - संस्फोट इति 3 भ - ताडनं वधबन्धो वा विद्रव; समुदाहृतः भ - द्रवस्तत्रावबोद्धव्यो गुरूणां व्यतिक्रमः 4 च - विज्ञेयोऽभिद्रवस्तु स (ड - विद्रवः) 5 म - विरोध ड - विरोधोपगमो यस्तु न - निरोधशमयं युक्तिस्तर्जनाधर्षणं द्युतिः

व्यवसायश्च[1] विज्ञेयः प्रतिज्ञाहेतुसंभवः[2] ।
प्रसङ्गश्चैव विज्ञेयो गुरूणां परिकीर्तनम्[3] ॥ ९१

वाक्यमाधर्षसंयुक्तं[4] द्युतिस्तज्ज्ञैरुदाहृता ।
मनश्चेष्टाविनिष्पन्नः[5] श्रमः खेद उदाहृतः ॥ ९२

---

४३ व्यवसायः—व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभव इति । प्रतिज्ञातस्याङ्गीकृतस्यार्थस्य हेतुवो ये तेषां संभवः प्राप्तिर्व्यवसायः । यथा (तत्रैव)—ऐन्द्रजालिकप्रवेशादितो यावत् "एक्को उण खेडओ अवस्सं पेक्खितव्वो" इति तावत् यौगन्धरायणेन यत्कर्तुमङ्गीकृतं तस्यैव हेतुः (तस्य) प्राप्तिः ।

४४ प्रसङ्गः—प्रसङ्गश्चापि(श्चैव ?) विज्ञेयो गुरुणां परिकीर्तनमिति । यथा (तत्रैव) वासवदत्ताः उज्जयणीदो आअदोत्ति अत्थि मे तस्सि इन्दआलिए पक्खवादो (उज्जयिन्या आगत इति अस्ति मे तस्मिन्निन्द्रजालिके पक्षपातः)—इत्यादि । अत्र हि बन्धुकुलादागमोऽस्य बहुमानकारणम् ।

४५ द्युतिः—वाक्यमाधर्षसंयुक्तं द्युतिरिति । आधर्षो न्यक्कारः तेन संयुक्तम् । यथा विदूषकः—हा दासीए उत्त इन्दआलिअ (आः दास्याः पुत्र इन्द्रजालिक)—इत्यादि ।

४६ खेदः—मदश्चेष्टाविनिष्पन्नः श्रमः खेद इति मानसः कायीयश्चेत्युभयोऽपि यावत् । आद्यो यथा—सिंहलेश्वरस्य कुशलप्रश्ने यथा वसुभूतिर्निश्वस्य "देव न जाने किं कथयामि" इत्यत आरभ्य रत्नावल्याः समुद्रपतनाकर्णनोदितवासवदत्ताविलापपर्यन्तम् । शारीरस्तु खेदः (विक्रमोर्वश्याम्) पुरूरवसा "अहो श्रान्तोऽस्मि यावतस्या गिरिनद्यास्तीरे" इत्यादि ।

---

1 ड - तु 2 ड - दोषसंभवः, य - संश्रयः 3 ट - नित्यं परिभवात्मकः न - वाक्योमर्षप्रयोजितः भ - गुणागुणविवृद्धिस्तु प्रसङ्ग इति कीर्तितः प - अप्रस्तुतार्थवचनं प्रसङ्गः परिकीर्तितः 4 ड - धर्षणयुतं 5 घ - समुत्पन्नः

---

* एकं पुनः खेलनमवश्यं प्रेक्षितव्यम्

ईप्सितार्थप्रतीघातः प्रतिषेधः प्रकीर्तितः[1] ।
[2]कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥ ९३
बीजकार्योपगमन[3]मातानमिति संज्ञितम् ।
[4]अपमानकृतं वाक्यं कार्यार्थे च्छादनं भवेत् ॥ ९४

---

यद्यपि श्रमोद्वेगवितर्कलज्जाप्रभृतयो व्यभिचारिवर्गे पूर्वमुक्तास्तथाप्येते सत्यवसरेऽवश्यप्रयोज्याः प्रागुक्तप्रयोजनार्थसिद्धये, ते पृथक्प्रयोजनत्वात् सन्ध्यङ्गत्वेनोक्ता मन्तव्याः ।

४७ प्रतिषेधः—ईप्सितार्थप्रतीयातः प्रतिषेध इति । यथा रत्नावली-वृत्तान्तवर्णने ईप्सितार्थप्रतीघाते बाभ्रव्येण प्रस्तुते तस्य प्रतिघातोऽन्तःपुरदाहेन ।

४८ निरोधनम्—कार्यात्ययोपगमनं निरोधनमिनि । यथा राजा—"कथमन्तःपुरेऽग्निः । हा हा धिक्कष्टं दग्धा देवी वासवदत्ता" इत्यादि यावत् सागरिकोत्सादनपर्यन्तम् । अत्र हि कार्ये वासवदत्ता सागरिकाप्रेमविस्रम्भस्यात्ययो विनाशमुपगतः प्राप्तः ।

४९ आदानम्—बीजकार्योपगमनमादानमिति बीजफलस्य समीपताभवनमित्यर्थः । यथा सागरिका राजानं दृष्ट्वा (स्वगतं) 'अय्यउत्त' इत्यादि, अत्र हि बन्धुकुलादागमो यावद्राज्ञ उक्तिः—

व्यक्तं लग्नोऽपि भवतीं न धक्ष्यति हुताशनः ।
यतः सन्तापमेवायं स्पर्शस्ते हरति प्रिये ॥

इत्यन्तम् ।

५० छादनम्—अपमानकृतं वाक्यं छादनमिति । वाक्यमिति तदर्थो लक्ष्यते । करोतिः बहुमाने वर्तने, तेन दुष्टोऽप्यर्थोऽपमानेन बहुमतीकृतः ।

---

1 ड - निषेधः स तु कीर्तितः 2 भ - उत्तरोत्तरवाक्यं तु विरोध इति संज्ञितः ड - विरोधनं तु संरम्भादुत्तरोत्तरभाषणम्, नय - उत्तरोत्तरवाक्यं च 3 भ - नयनं य - शमनं 4 भ - अवमानार्थजनिता छलना परिकीर्तिता, ड - अवमानात् य - अवमानादिजनितः समूहः छन्दनं भवेत् (स मोहः छलनं) ह - अवमानादिभणनं

प्ररोचना च विज्ञेया संहारार्थप्रदर्शिनी[1] ।
(प्रत्यक्षवचनं यत्तु स व्याहार इति स्मृतः ॥ ९५
सविच्छेदं वचो यत्र सा युक्तिरिति संज्ञिता ।
ज्ञेया विचलना तज्ज्ञैरवमानार्थसंयुत ) ॥ ९६
[2](एतान्यवमृशेऽङ्गानि संहारे तु निबोधत) ।

---

तदपमानकलङ्कापवारणाच्छादनमिति । यथा सागरिका—दिट्ठिआ पज्जलिदो भअवं हुदासणो, अज्ज करइस्सदि मे सअलदुक्खावसाणम् । (दिष्ट्या प्रज्वलितो भगवान् हुताशनः, अद्य करिष्यति मे सकलदुःखावसानम् ।) इति ।

५१ प्ररोचना—प्ररोचना च विज्ञेया संहारार्थप्रदर्शिनी इति । संह्रियमाणस्य निर्वाह्यमाणस्यार्थस्य दर्शिका प्रकर्षेण रोचत इति प्ररोचना । यथा—

क्वासौ ज्वलन् हुतवहस्तदवस्थमेत
 दन्तः पुरं कथमवन्तिनृपात्मजेयम् ।
वाभ्रव्य एष वसुभूतिरयं वयस्यः
 स्वप्नो मतिभ्रममिति*

युक्तिरित्यन्ये इदमङ्गं व्यवहरन्ति । अत्रोद्देशक्रमत्यागे यत्केषांचिदङ्गानां लक्षणं तत्क्रमानियमसूचनार्थः । अनेन पाठविपर्यासेन यत्कैश्चिदुद्देशस्यान्यथापठनं तद्ग्रन्थकाराशयापरिज्ञानकृतम् । केचिदत्रान्यतममङ्गं नाधीयते, द्वादशाङ्गमेवैतत्सन्धिमाहुः । अन्ये तु त्रयोदशाङ्गत्वेऽप्यस्य निर्वहणसन्धावपि प्रसक्तेरितिवृत्तान्तर्भूतत्वेन गणनमन्याय्यमिति त्रयोदशाङ्गत्वात् चतुःषष्टिसंख्यां समर्थयन्ते ।

---

1 भ - या कार्यार्थप्रदर्शिनी, भ - सत्कारस्य विदर्शिका ड - प्रकाशिनी
2 भ - एतान्यङ्गान्यवमृशे ट - विमर्शे एतान्यङ्गानि ढ - विमर्शेऽङ्गानि चोक्तानि

* स्वप्नो मतिभ्रम इदं नु किमिन्द्रजालम्—इति चतुर्थः पादः । स्वप्ने मतिर्भ्रमति किं स्विदमिन्द्रजालम्—इति पाठान्तरम्

मुखबीजोपगमनं[1] सन्धिरित्यभिधीयते[2] ॥ ९७

[3]कार्यस्यान्वेषणं युक्त्या[4] निरोध[5] इति कीर्तितः ।

[6]उपक्षेपस्तु कार्याणां [7]ग्रथनं परिकीर्तितम् ॥ ९८

[8]अनुभूतार्थकथनं निर्णयः समुदाहृतः ।

---

अथ निर्वहणसन्धावुद्देशक्रमेणाङ्गानि लक्षयितुं प्रक्रमते

५२ <u>सन्धिः</u>—<u>मुखबीजोपगमनं सन्धिरिति</u> । यथा वसुभूतिः—बाभ्रव्य, सदृशीयं राजपुत्र्याः — इत्यादि मुखे यदुक्तं तदिह निकटीभूतं सन्धानं सन्धिः ।

५३ <u>निरोधः</u>—<u>कार्यस्यान्वेषणं युक्त्या निरोध</u> इति यथा वसुभूतिः—कुत इयं कन्यकेत्यादि ।

५४ <u>ग्रथनम्</u>—<u>उपक्षेपस्तु कार्याणां ग्रथनमिति</u> यथा (यौगन्धरायणः—देव क्षम्यतां यन्मयाऽनिवेद्य कृतम्—इत्यादि । अत्र रत्नावलीलाभरूपकार्यस्योपेक्षपाद् ग्रथनम् ।)

५५ निर्णयः—<u>अनुभूतार्थकथनं निर्णय</u> इति । प्रमाणसिद्धस्य वस्तुनः कथनमित्यर्थः । यथा रत्नावल्यां चतुर्थेऽङ्के वसुभूतिः—अपि रत्नावली, ननु त्वमीदृशीमवस्थां प्राप्तासि ।

सागरीका—(समत्यभिज्ञं) तुमं पि किं अमच्चवसुभूदी

वसु—स एवाहं मन्दभाग्यः इति—

प्रभृति यावद् विदूषकवाक्यं “ सविहवो होदु ” इति ।

---

1 भ - नवनं 2 भ - संज्ञितः 3 भ - अन्वेषणं तु कार्याणां निरोधसमुदाहृतः 4 न - यत्र ट - यत्तु निरोध इति संज्ञितः 5 ड - विरोध 6 ह - अप 7 भ - प्रसवं नाम तद्भवेत् 8 ड - अनुभूतस्य, भ - अनुभाव्यस्तथा योऽर्थो निर्णयः सोऽभिधीयते

[1]परिवादकृतं [2]यत्स्यात्तदाहुः परिभाषणम् ॥ ९९
[3]लब्धस्यार्थस्य [4]शमनं द्युतिमाचक्षते पुनः[5] ।
[6]समागमस्तथार्थानामानन्दः परिकीर्तितः[7] ॥ १००

५६ परिभाषणम्—परिवादकृतं यत् तत् परिभाषणमिति ।

यथा सागरिका—किदापराहा खु अहं देवीए ता ण सक्खुणोमि मुहं दंसेदुं कृतापराधा खल्वहं देव्या, तत् न शक्नोमि मुखं दर्शयितुम् ) । वास वदत्ता अपवार्य)—अय्यउत्त लज्जामि खु अहं इमिणा णिसंसत्तणेण ता अवणेहि से बन्धणं । आर्यपुत्र, लज्जे खल्वहमनेन नृशंसत्वेन, तदपनयास्या बन्धनम् ।

एतदुभयोरप्यन्योन्यापराधोद्घट्टनं वचनम् यौगन्धरायणोऽपि प्रविश्यैव-श्यैवमेवापराधमुद्घट्टयति तथा—

देव्या मद्वचनाद्यदाभ्युपगतः पत्युर्वियोगस्तदा
सा चाप्यन्यकलत्रसंघटनया दुःखं मया प्रापिता* । इत्यादि ।

५७ द्युतिः—लब्धस्यार्थस्याशमनं द्युतिरिति । सामर्थ्यात्प्रशमनीयस्य क्रोधादेरर्थस्य प्राप्तस्यापि यत्प्रशमनं सा द्युतिः । (यथा तत्रैव) देव श्रूयता-मिदम् । सिंहलेश्वरदुहिता सिद्धैरादिष्टा " इत्यादि यावद्देव्या उक्तिः, "अय्य अमच्च फुडं एव्व किं ण भणासि पडिवादेहि रअणावलिंत्ति । (आर्य अमात्य, स्फुटमेव किं न भणासि प्रतिपादय तस्य रत्नावलीमिति ।)

५८ आनन्दः—समागमस्तथार्थानामानन्द इति । आर्थितस्य तथेति प्रकारशतै प्रार्थितस्य सम्यगपुनर्वियोगवद्यदागमनं तदानन्तहेतुत्वादानन्दः । यथा (तत्रैव) राजा—को देव्याः प्रसादं न बहुमन्यते—इत्यादि ।

---

1 ट - परिवादात्मकं 2 भ - यत्तु तद्भवेत् 3 प - ईर्ष्याकोपोपशमनं
4 भ - गमनं 5 ट - बुधाः भ - कृतिरित्यभिधीयते ड - द्युतिरित्यभिधीयते
6 ड - समागमस्तु योऽर्थानामानन्दः स तु कीर्तितः 7 भ - कीर्त्यते

---

* तस्याः प्रीतिमयं करिष्यति, जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ॥

[1]दुःखस्यापगमो यस्तु समयः स निगद्यते ।
शुश्रूषाद्युपसंपन्नः प्रसादः प्रीतिरुच्यते[2] ॥ १०१
[3]अद्भुतस्य [4]तु संप्राप्तिरूपगूहनमिष्यते ।
[5]सामदानादि[6]संपन्नं भाषणं समुदाहृतम्[7] ॥ १०२

५९ समयः—दुःखस्यापगमो यस्तु समय इति । अपगमनमपगमः । यथा— अय्यउत्त दूरे खु एदाए णादिउलं ता तह अणुचिट्ठ जहा बन्धुजणं ण सुमरेति (वासवदत्ता—आर्यपुत्र, दूरे खलु अस्या ज्ञातिकुलं, तत्तथानुतिष्ठ यथा बन्धुजनं न स्मरति )

६० प्रसादः—शुश्रूषाद्युपसंपन्नः प्रसाद इति । यथा वासवदत्ता—"एत्तिअं दाव मम बहिणिआ अणुरूवं होदु" इति स्वैराभरणैरलङ्करोतीति । (एतावता तावन्मेभगिन्यनुरूपं भवतु) ।

केचिद् द्युतेरनन्तरामिदमङ्गं पठन्ति ।

६१ उपगूहनम्—अद्भुतस्य तु संप्राप्तिरुपगूहनमिति । यथा विदूषकः—ही ही भो कहं कहं संपुण्णमणोरहा संउत्तह्म ( इत्युत्थाय नृत्यति ) ( ही ही भोः कथं कथं संपूर्णमनोरथाः संवृत्ताः स्मः )

६२ भाषणम्—सामदानादिसंपन्नं भाषणमिति । यद्यपि तदार्थेऽपि संग्रहाख्यमिदमङ्गमुक्तं तथाप्यत्र स्थानेऽवश्यं प्रयोक्तव्यतां ख्यापयितुं पुनरुपादनं शब्दान्तरेण च । यथा वसुभूतिः—देवि स्थाने देवीशब्दमुद्वहसि—

1 भ - दुःखापनयनं चैव समयः परिकीर्तितः प - दुःखस्योपशमो न - दुःखोपशमनं यत्तु 2 भ - शुश्रूषावचनोपेतः प्रसाद इति संज्ञितः च - उपसंपन्नः प्रसाद इति भण्यते द- सुप्रसन्नता 3 य - अत्यद्भुतस्य संप्राप्तिर्भवेत्तदुपगूहनम् 4 न - च 5 म - दानमानादिनिष्पन्नमाभाषणमुदाहृतम्, (भ - भाषणं नाम तत्रभवेत् 6 द - संयुक्तं भाषणं तूच्यते बुधैः 7 प - प्रुवते बुधाः

[1]पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शनम्[2] ।
[3]वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते ॥ १०३

---

इति । सामदानं तु यथा भगवती जीमूतवाहनस्य वरं ददाति—"त्वां विद्याधरचक्रवर्तिनमहं प्रीत्या करोमि क्षणात्"* इत्यादि ।

अन्ये मन्यन्ते—आदिशब्देन भेददण्डादेरुपायान्तरस्य संग्राह्यत्वं, तस्य वेग ( चेह ? ) स्थाने स्पष्टेन पथानौचित्यात्, गर्भसन्धयुक्तसामाद्युपायानुवदनमात्रमत्र यत्क्रियते इत्थमिदं प्राप्तमित्येवंप्रायं तदिदं भाषणाख्यमङ्गमिति ।

६३ पूर्ववाक्यं—पूर्ववाक्यं यथोक्तार्थप्रकाशनमिति । यथा बाभ्रव्यः—इदानीं सफलपरिश्रमोऽस्मि संपन्न—इति ।

६४ काव्यसंहारः—वरप्रदानसंप्राप्तिः काव्यसंहार इति । यथा यौगन्धरायणः—देव तदुच्यतां किं ते भूयः प्रियमुपहरामीत्यादि यावत्, "यातो विक्रमबाहुरात्मसमतां"† इत्यादि ।

---

1 भ - पूर्वभावश्च विज्ञेयः कार्योपक्षेप दर्शकः, प - पुनर्वाक्यं......यथोक्ताक्षेपदर्शनम्, न - पूर्वभावस्तु विज्ञेयः सद्भिः कार्योपदर्शकः ( ट - दर्शकः ) 2 - ड प्रदर्शकम् 3 च - कर

---

* हंसांसाहतहैमपङ्कजरजः संपर्कपङ्कोक्षितै-
रुत्पन्नैर्मम मानसादुपनतैस्तोयैर्महापावनैः ।
स्वेच्छानिर्मितरत्नकुम्भनिहितैरेषाभिषिच्य स्वयं
त्वां... ॥ ( नागानन्दे - अ ५ )

† यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि स्पृहाम् ॥

[1]नृपदेशप्रशान्तिश्च प्रशस्तिरभिधीयते ।
[2]यथासन्धि तु कर्तव्यान्येतान्यङ्गानि नाटके ॥ १०४
कविभिः [3]काव्यकुशलै [4]रसभावमपेक्ष्य तु ।

६४ प्रशस्तिः—नृपदेशप्रशान्तिश्च प्रशस्तिरिति । (यथा रत्नावल्यां)—

उर्वीमुद्दामसस्यां जनयतु विसृजन् वासवो वृष्टिमिष्टा
  मिष्टैस्त्रैविष्टपानां विदधतु विधिवत्प्रीणनं विप्रमुख्याः ।
आकल्पान्तं क्रियायाः* क्रमसमुपचितं संगमं सज्जनानां
  निर्विश्लेषावकाशं पिशुनजनवचोवर्जनाद्वज्रलेपः ॥

यथासन्धि त्विति, यो यस्मिन् सन्धौ योग्य इत्यर्थः । योग्यतां च कविरेव जानाति, न च मुक्तककविः, किन्तु प्रबन्धयोजनासमर्थः । तदाह कविभिरित्यादि ।

ननु कवेः कीदृशं तत्प्रबन्धनिर्माणकौशलमित्याह रसभावमपेक्ष्येति, तदपेक्षा च कौशलमित्यर्थः। रस एव हि प्रीत्या व्युत्पत्तिमिदं नाट्यात्मकं शास्त्रमित्युक्तम् । ततश्च यद्यथा यद्यस्यानुपयोगि तदरोचकिनो रुचितदधिशर्करापयःप्रभृतिरसान्तरमध्ययोजितं—तद्द्वारेणान्तः प्रविष्टं सत् पुष्टिं व्याधिनिवृत्तिं च विधत्ते, तथैव पुमर्थोपायो हृदयमनुप्रवेष्टुमसमर्थ सुन्दरतदुचितरससङ्क्रमणया प्राप्तान्तःप्रवेशो विनेयजनस्य संपाद्ये वस्तुनि कल्पपादपकल्पनायै कल्पते । रससंक्रान्तिश्च विभावादिरूपतयैव नान्यथेत्युक्तं षष्ठे । एतानीति । तान्य-

1 भ - नृपराष्ट्रप्रशान्तिश्च प्रशस्तिरिति संज्ञिता च - नृपदेव, प - नृपदेशादिशान्तिः ब - देवद्विजनृपादीनां प्रशस्ति स्यात्प्रशंसनम्, ढ - नृपदोष
2 ब - इत्येतानि यथासन्धि कार्याण्यङ्गानि रूपके 3 द - कार्यं, भ - नाटयतत्त्वैः
4 भब रसभावान्.

* क्रमीह

[1]संमिश्राणि कदाचित्तु[2] द्वित्रियोगेन वा पुनः ॥१०५

ङ्गानि लिखितानि विवक्षितरसभावादिसंपूर्णमात्रभाञ्जि भवन्ति यानि त्वेकरसावहितमनसो यत्नान्तरनिरपेक्षतयैवाङ्गभङ्गिभङ्गया समुचितभावेन बन्धशय्यामनुवर्तन्ते । इति वृत्ताविच्छेदोऽपि हि रसस्यैव पोषकः, अन्यथा विच्छेदे स्थाय्यादेस्त्रुटितत्वात् क रसवार्ता । तेन रसस्यैवायं विभावादिपरिकरो यदङ्गचक्रमिति । तथा हि *"लाक्षागृहानले"त्युपक्षेपो वीररौद्रयोर्विभावांशपूरकः, *"प्रवृद्धं यद्वैर"मिति क्रोधस्य वीरे व्यभिचारिणो रौद्रे स्थायिनः स्वरूपं प्रत्युज्जीवकः परिकरः, *"चञ्चद्भुज" इति च परिन्यासोऽनुभावांशं पुष्णाति, *"अणुगण्हन्तु एदं ववसिदं देवदाओ" (द्रौपदी—अनुगृह्णन्त्वेतद्व्यवसितं देवताः) (वेण्या—अङ्क १) इत्यादि विलोभनम् । अतो निर्वृत्यौत्सुक्यहर्षमतिस्मृतिप्रभृति व्यभिचारि, स चायं सन्धानधुर्यः, एवमन्यदपि योज्यम् ।

ननु सन्धिपरतन्त्रैरङ्गैर्भवितव्यम्, तद्रसपारतन्त्र्यमेषां कुतस्त्यम्, उच्यते—सन्धयो ह्यवस्थापरतन्त्राः, आरम्भाभिधानदशाविशेषोपयोगिकथाखण्डलकं मुखसन्धिरित्युक्तम्, एवमन्यत्र । अवस्था अप्यन्यकृतिविशेषमनूच्यन्ते । नन्वतः किम्, इदमतो भवतीत्याह—रसभावापेक्षया तु कार्यं स्थितं तस्यापेक्षया अवस्थानं ज्ञात्वेति, कार्यमपि रसप्रवाहजननपर्यन्तत्वेन कृतार्थतां संपद्यते इति यावत् ।

संमिश्राणीति सन्ध्यन्तरोक्तं सन्ध्यन्तरेऽपीत्यर्थः । यथा युक्तिर्मुखेऽप्युक्ता गर्भेऽप्युपनिबद्धा वितर्कव्यभिचार्यंशपोषकभावेन वेणीसंहारे, यथोदाहृतं प्राक् "तेजस्वी रिपुहतबन्धुदुःखपार" मित्यादि । द्वित्रीति द्वित्वत्रित्वयोगेनेत्यर्थः । तेनैकमपि सन्ध्यङ्गं तत्रैव सन्धौ द्विस्त्रिर्वा कर्तव्यम् । यथारत्नावल्यां प्रतिमुखे विलासः सागरिकायां राज्ञि वाऽसकृदुपनिबद्धः प्रधानं शृङ्गारं समुद्दीपयति । वेणीसंहारे संफेटाविद्रवौ पुनः प्रदर्शितौ वीररौद्रोद्दीपनौ

1 द - सर्वाङ्गानि 2 भ - स्युः सर्वाण्येतानि वा पुनः

* वेणीसंहारे

[1]ज्ञात्वा कार्यमवस्थां च कार्याण्यङ्गानि सन्धिषु ।
[2]एतेषामेव चाङ्गानां संबद्धान्यर्थयुक्तितः ॥ १०६

सन्ध्यन्तराणि[3] [4]सन्धीनां विशेषास्त्वेकविंशतिः ।
साम भेदस्तथा दण्डः प्रदानं वध एव च ॥ १०७

प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ।
साहसं च भयं चैव ह्रीर्माया क्रोध एव च ॥ १०८

---

भवतः। अतिशयेन तु पौनःपुन्ये वैरस्यं स्यादिति द्वित्रिग्रहणम् । तथा द्वयोर्योगो द्वाभ्यामङ्गाभ्यां संपाद्यं तदेकेनैव चेद्घटते तत्किमपरेण । एवं त्रियोगः। द्वियोगो यथा प्रतिमानिरुद्धे भीमसूनोर्वसुनागस्य कृते—उपक्षेपानन्तरमेवं न परिकरः, आद्येनैव कृते परिन्यासदर्शनम् । एवं त्रियोगः, यथा भेज्जलविरचिते राधाविप्रलम्भे रासकाङ्के उपक्षेपेणैवहि "लिअलीस्सा" *इत्यादि परिकरपरिन्यासकार्यगुरुभूते पालिते एकोद्देशेन (?) विलोभनानिरूपण । एवं चतुरङ्गो यात् सन्धिर्भवतीति ।

अथ सन्ध्यन्तराणि दर्शयितुमाह <u>एतेषामेव चाङ्गानामित्यादि</u> । तत्र केचिदाहुः—अन्तरं छिद्रं सन्धिरिति । तदङ्गमात्रं—तात्स्थ्याच्च तत्स्थान्यं तेन सन्ध्यङ्गच्छिद्रवर्तित्वात् सन्ध्यन्तराणि, अत एव चाङ्गानां संबद्धानि । ननु किं शेषमात्रेण, नेत्याह, किं त्वर्थस्य प्रयोजनस्य योगेन, अत एव सन्ध्यङ्गानां विशेषकाः, तदर्थविशेषसंबद्धं हि तदङ्गं भवति (इति) ।

अन्ये मन्यन्ते—य एवोपक्षेपाद्या सामान्या उक्ताः तेषामेवैतद्विशेषा अवान्तरभेदाः । उपक्षेपो हि सामादित्रिशेषभिन्नः, तथा हि "लाक्षागृहा-

---

1 न - <u>कार्यं</u> कालमवस्थां च ज्ञात्वा कार्याणि सन्धिषु (भ - काव्यं)
2 इदमर्धं चमय - मातृकास्वेवोपलभ्यते 3 एकविंशति सन्ध्यन्तराणि केषुचिदादर्शेषु चतुः-षष्ट्यङ्गोद्देशग्रन्थपूर्वमेव पठितानि 4 नमय - वक्ष्यामि त्वथोपक्षेपकाणि च 5 न - धीः

* राधाप्रलम्बे..."विहवीस्सा"

ओजः संवरणं भ्रान्तिस्तथा हेत्वपधारणम्[1]।
दूतो लेखस्तथा स्वप्नश्चित्रं मद इति स्मृतम्[2] ॥
‡[विष्कम्भश्चूलिका चैव तथा चैव प्रवेशकः।
अङ्कावतारोऽङ्कमुखमर्थोपक्षेपपञ्चकम् ॥ ११०

नल" (वेणी-१) इति क्रोधात्मोपक्षेपः, रामाभ्युदये भयात्मोपक्षेपः, प्रतिमानिरुद्धे स्वप्नरूपः, उदात्तराघवे हेत्ववधारणात्मा। एवमन्यदनुसरणीयम् (इति। एते च विभावानुभावव्यभिचारिरूपा एव। न तु तदतिरिक्तं जगति किंचिदस्ति प्रयोगे। प्रयोगोज्ज्वलत्वोपयोगाय तूपलक्षणत्वेनैकविंशतिरित्युक्तं कवेर्मार्गं प्रदर्शयितुम्।

तत्र सामादयो वीरे उज्ज्वलत्वहेतवः, वधो रौद्रे, प्रत्युत्पन्नमतित्वं मतिलक्षणं व्यभिचारिरूपं, सर्वत्र गोत्रस्खलनमीर्ष्याविप्रलम्भे, साहसं (श्रृङ्गारवीरादौ), चापकं हास्यादौ। एवमन्यत्र। ओज इति तेजः, सामान्याभिनये (अ- २२) लक्षयिष्यते—"अधिक्षेपावमानादेः" (इत्यत्र), संवरणमवहित्थं, चित्रं विस्मयः शिल्पविशेषश्च। एते सर्वेषु नाटकादिरूपकेषु सुलभाः स्वयं च सुज्ञाना इति तदुदाहारणपरिवर्तनेन ग्रन्थो न विस्तारितः*।

1 न - अवधारणम् 2 म - द्विजा

‡ अर्थोपक्षेपपञ्चकोद्देशलक्षणविधायिन एते सप्त श्लोकाः प्रक्षिप्ता एव, यतः पूर्वाध्यायेऽङ्कलक्षणावसरे यत्रार्थस्य समाप्तिरित्यत्र (१६ - २१) तल्लक्षणानि सूचितानि मुनिना व्याख्याता च कोहलमतानुसारेण वा संग्रहकारमतेन वा श्लोकाश्चैते केश्चिद्विनिवेशिताः। एतेषां सप्तमः कोहलस्यैव, द्वितीयस्तु कोहलश्लोकाच्चतुर्थपादे भिद्यते, तृतीयपञ्चमौ भरतस्यैवाष्टादशाद्गृहीतौ।



* सामादीनामुदाहरणानि ग्रन्थान्तेऽनुबन्धरूपेण दर्शयिष्यन्ते।

मध्यमपुरुषनियोज्यो नाटकमुखसन्धिमात्रसंचारः।
विष्कम्भकस्तु कार्यः पुरोहितामात्यकञ्चुकिभिः ॥
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यकृतः॥ ११२
अन्तर्यवनिकासंस्थैः सूतादिभिरनेकधा ।
अर्थोपक्षेपणं यत्तु क्रियते सा हि चूलिका॥ ११३
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः ॥
अङ्कान्त एव चाङ्को निपतति यस्मिन् प्रयोगमासाद्य।
बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ॥ ११५
विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।
यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते]॥ ११६

---

एवमितिवृत्तनिरूपणनान्तरीयकत्वेन सन्धयः सन्ध्यङ्गानि सन्ध्यन्तराणि चात्मभूतरसोपयोगीन्यपि प्राधान्येनेतिवृत्तात्मकं शरीरांशमभिनिविशमानानि, तत एव वृत्तिचतुष्कसाधारणे निदर्शितानि । अधुना तु यस्याः प्रसादेन शास्त्रेतिहासादिभ्योऽभ्युद्धरकन्धरीभूतं सर्वजनाहरणीयतास्पदत्वं तु नाट्यं, यामुद्दिश्य प्रथमेऽध्याये "कैशिकीमपि योजय यच्च तस्याः क्षमं द्रव्यं" इत्यादि बहुतरमुक्तं, तदाविर्भावकानि, अत एवात्मभूतरसभावभागाभिनिवेशशालीन्येव लास्याङ्गान्यपि कविप्रयोक्तृभिरभिनेतव्यकाव्यविषये

*अन्यान्यपि[1] लास्यविधावङ्गानि तु नाटकोपयोगीनि[2]।
[3]अस्माद्विनिःसृतानि[4] तु भाण इवैकप्रयोज्यानि ॥
[भाणाकृतिवल्लास्यं विज्ञेयं त्वेकपात्रहार्यं वा[5]।
प्रकरणवदूह्य कार्यासंस्तवयुक्तं विविधभावम् ॥]
गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका[6]।
प्रच्छेदकं त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ॥ ११९

---

सर्वथैव योज्यानीति दर्शयितुमाह अन्यान्यपि लास्यविधावङ्गानीत्यादि। नाटकमित्यभिनेयमात्रम्। इतःपरमध्यायान्तमुक्तेभ्योऽङ्गेभ्यो लास्यविधौ यान्यङ्गानि वक्ष्यन्ते तानि नाटकोपयोगीन्यपि भवन्ति।

नन्वेवमङ्गानामभेदादङ्गिनोऽपि लास्यस्य नाटके को भेद इत्याशङ्कां शमयति(अस्मादिति)। अस्मान्नाटकादनुकाराभिनेयलक्षणात् विनिस्सृतानि बहिर्भूतानि, एकपात्रहार्याणि। भाण इति इवशब्देन नाटकमाह, भाणे नाट्यरूपता समास्ति, न तु लास्ये कथंचिदपि तस्य नाट्यरूपवैलक्षण्यात्। तच्चोपपादितं वितत्य तुर्येऽध्याये।

ननु कानि लास्याङ्गानि नाट्ये वक्ष्यन्त इत्याह गेयपदमित्यादि दशविधं ह्येतदङ्गनिर्देशलक्षणमित्यन्तम्। एतस्य अङ्गनिर्देशस्याङ्गोद्देशस्य दशविधं, यद्विशेषलक्षणं तालाध्याये (अ-३१) लास्यनिरूपणावसरे वक्ष्यते, तथा चोपसंहरिष्यति "एतेषां लास्यविधौ विज्ञेयं लक्षण"मिति (अ-१९)। तत्रैव हि संपूर्णमङ्गानां रूपं, इह तर्हि कथमुपयोग इति नाट्योपयोगितां

---

* लास्याङ्गलक्षणं भ - मातृकायां न दृश्यते, चपम - मातृकासु विना सर्वास्वन्यास्वष्टादशाध्याय एव पठितम्, लक्षणपाठोऽपि भिन्नमातृकासु बहुभेदतया विद्यते। भोजशारदातनयादिभिरपि तल्लक्षणे मात्रया भिन्नं मतमुपन्यस्तम्।

1 उ - अन्यानि च 2 ड - उपयुक्तानि, य - योगीति 3 य - तस्मात
4 फ - विनिर्गतानि 5 ढ - च 6 ड - पुष्पगन्धिका

[1]उत्तमोत्तमकं चैवमुक्तप्रत्युक्तमेव च ।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् ॥ १२०
[2]आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम् ।

---

गमयितुं आसनेषूपविष्टैर्य इत्यादिग्रन्थः । तेनेदं तात्पर्यम्—यानि लास्याङ्गानि वक्ष्यन्ते तेभ्यः कश्चिद्वैचित्र्यांशो लोकापरिदृष्टोऽपि रञ्जनावैचित्र्याय कविप्रयोक्तृभिर्नाट्ये निबन्धनीयः

अन्ये तु व्याचक्षते—तथाविधलास्याङ्गयोजनैवात्र क्रियते, तथा हि गेयपदे निदर्शनं दर्शयति "ततः प्रविशति वीणां वादयन्ती मलयवती चेटी च । मलयवती 'उत्फुल्लकमलकेसर' इत्यादि गायति" (नागा-१) इति । तच्चेदमसत् । अत्र ह्यन्यव्यापारवद् देवतापरितोषः, किंचिद्वेयं जप्यसहस्रतुल्यं तन्मिश्रं जप्यं कोटिफलसाधनमित्यादिपुराणवाक्यबलात्, कर्तव्यत्वेनाभिसंहितो मलयवत्याः । "सा च प्रयोज्ये"ति न लास्यार्थोऽत्र किञ्चित्, न लास्याङ्गतापि । यत्रापि, ततः प्रविशतो गायन्त्यौ चेट्यौ, "कुसुमाउहपिअदूअउपे" (रत्ना-२) इत्यादि तत्रापि परिभ्रमणादिवदेव लौकिकवृत्तं वसन्तोत्सवप्रमोदाभ्युदयावसरकृतं । प्रयोजने चेद्यावत् क्रियते तत्र यद्यप्यनुकार्यस्य तथापि नाट्याङ्गत्वे पृथगनुपदेश्यतापत्तिः, यथा (यदा) ह्यश्वमेधयागाद्यनुकारः कर्तव्यस्तदोपयुज्यते यज्ञाङ्गज्ञानमिति यज्ञाङ्गान्युपदेश्यानि भवेयुः । न हि तादृग्वस्तुमात्रमप्यस्ति यन्नाट्ये नोपयुज्यते च । तस्माल्लास्ये यान्यङ्गानि तत उपजीव्ये लौकिक एवांशो रञ्जनोपयोगी लास्याङ्गत्वेन मुनेरिह विवक्षितः । अन्यथा "आसनेषूपविष्टैर्य" दित्यादि किमिहोक्त्या, "एतेषां लक्षणं व्याख्यास्ये" इत्येतदिहैव तु नैवोक्तमित्येतद् विशृङ्खलं स्यात्, "ततश्च परिधानक" मित्यादि (३१-३५०) (यत्पूर्वरङ्गविधौ (अ-३१) लास्याङ्गलक्षणमुक्तं तदप्यत्राभिनेयभागे प्रयोक्तव्यं स्यात् ।)

ततो यावानंशो नाट्योपयोगी तं दर्शयितुमाह आसनेषूपविष्टैर्यदिति । यच्छब्दो निपातो यस्मिन्नित्यत्रार्थे, तेन यत्र काव्ये प्रयोगे वा शुष्कमित्यनु-

---

1 ड - उत्तमोत्तमकं चैव विचित्रपदमेव च । उक्तप्रत्युक्तभावं च लास्याङ्गानि विदुर्बुधाः 2 ड - आसने चोपविष्टायां

गायनैर्गीयते शुष्कं तद्गेयपदमुच्यते[1] ॥ १२१

[या नृत्यत्यासना नारी गेयं प्रियगुणान्वितम् ।
साङ्गोपाङ्गविधानेन तद्गेयपदमुच्यते ॥] १२२

प्राकृतं [2]यद्वियुक्ता तु पठेदात्तरसं स्थिता[3] ।
मदनानलतप्ताङ्गी स्थितपाठ्यं तदुच्यते ॥ १२३

---

करणीयतया शून्यं गायनैरिति न तु पात्रैः, आसनोपविष्टैरिति स्वस्थैः, न तु नेपथ्ये गीयत इत्यादिवत्, कविप्रयोगायातमावेशविशेषं जृम्भद्भिर्गीयते यत् । तन्त्रीभाण्डान्वितमिति सर्वातोद्ययुतं, न तु भाव्यासीनपाठ्यवत्तद्विहीनं तद्गेयस्य पदं स्थानमिति कृत्वा गेयपदम्, तेन ध्रुवागानपञ्चकमन्तरालापस्वररहितं यत्र प्रयोगयोग्यं भवति स काव्यप्रयोगो गेयपदमित्युक्तं भवति, यत्र हि प्रयोगे तत्त्वाभिनिविष्टं सामाजिकरञ्जकं भवतीति यावानंशोऽसौ लास्याङ्गादिहोपजीवितः ।

यत्तु गायनैः पात्रैः शुष्कमित्यर्थात् छेकाश्रितं गेयं निर्गीतमपि वा, एतत् त्र्यश्रं चतुरश्रं वेत्येवंभूतं गीयमानं गेयानि पदानि यत्र गेयपदमिति व्याचक्षते, तत्पूर्वमेवापास्तम् ।

अथ स्थितमपि यल्लास्याङ्गं भविष्यति तदुपजीवितुमाह प्राकृतं यद्वियुक्ता त्विति । लास्येऽपि तावद् देवतानरपतिरञ्जनप्रधानं पाठ्यमस्ति । तच्चित्तग्रहणं हि तत्र तेनैव मध्ये वैचित्र्याय पाठ्येनापि क्रियते, तत्र स्थिते च पठत्यासीनेवेति पाठ्यगतं तदलौकिकं रञ्जनाङ्गं चित्रत्वं तस्मादङ्गादुपजीव्यते । तथा हि—यद्वियुक्ता आतप्तापि सती प्राकृतभाषालक्षणयुक्तं तथात्तरसमिति रसोपयोगि स्थायिरसग्रहणपूर्वकं पठेत् । एतल्लौकिकं यल्लास्याङ्गादुपजीव्यमानं स्थितपाठ्यम् । एतच्चावेशोपलक्षणं तेन क्रोधाविष्टोऽपि संस्कृतेन पठतीत्याद्यपि मन्तव्यम् ।

---

1 फ - गेयं पदभिष्यते च - उत्तमम् 2 ड - या विमुक्ता तु 3 ड - आसन - संस्थिता य - आन्तरसंस्थिता

[[1]बहुचारीसमायुक्तं पञ्चपाणिकलानुगम्।
चञ्चत्पुटेन वा युक्तं स्थितपाठ्यं विधीयते॥] १२४
[2]आसीनमास्यते यत्र सर्वातोद्यविवर्जितम्।
[3]अप्रसारितगात्रं च [4]चिन्ताशोकसमन्वितम्॥
[5]वृत्तानि विविधानि स्युर्गेयं [6]गाने च संश्रितम्।
[7]चेष्टाभिश्चाश्रयः पुंसां[8] यत्र सा पुष्यगण्डिका[9]॥

---

अन्ये तु बहुचारीयुतेन चञ्चत्पुटेनोत्तरेण यत् स्थितपाठ्यमिति लक्षणं कुर्वन्ति, उदाहरन्ति, रत्नावल्यां द्वितीयेऽङ्के राजा—"उद्दामोत्कलिका" मित्यादीति, तत्पूर्वमेव निरस्तम्। न च पाठ्ये चावसरोऽत्र तालस्त्र्यश्रश्चतुरश्रो वा, यथा तु लास्याङ्गत्वे। तत्सर्वं तालाध्याय एव वक्ष्यामः।

अथासीनपाठ्यादुपजीवनीयमंशमाह आसीनमास्यते यत्रेति। अत्यन्तशोकावेशेऽभिनयादिशून्यत्वेन यत्र आस्ते सोऽश उपरञ्जकगुणश्चतुर्विधातोद्यवर्जितोऽतिसुकुमारकाकलीप्रायप्रमदागीतमात्रावशेषो यश्चित्तग्राही (स लौकिकः) लौकिकादपि च तत्र हि साम्यमात्रार्थस्य तस्याश्रयमाणा च स्थितिः, तदासीनन्नामाङ्गं, आसीनपाठ्यादुपजीवितेनासनांशेन योगतश्च सर्वत्र करुणादौ रञ्जनोपयोगि। तदाह चिन्ताशोकसमन्वितमिति। अधःशय(नध्यानाधोमुखाद्यनुभावयुतम्। सर्वेति ध्यानविलापादिचिन्ताशोकानुभावेषु ततादेरप्रयोज्यतया तद्राहित्यमुक्तम्,) निःशब्दमिति भावः। तदनु अप्रसारितगात्रमित्यभिनयशून्यमित्यर्थः। सुप्रसारितगात्रमित्यन्ये पठन्ति, तत्रापि (सौष्ठवाङ्गप्रदर्शनपृथग्यत्नराहित्येन)स्रस्तगात्रतयाभिनयशून्यतैव।

पुष्पगडिकाख्यलास्याङ्गादुपजीव्यांशमाह वृत्तानीति। गान इति) ततेन

---

1 न - भूमि 2 न - आसीनमासनस्थस्य 3 ढ - अपसारित, फ - अवसारित, न - अप्रसाधितगात्रं तु प - संप्रसारित (ड सु) 4 ड - जिह्मदृष्टिनिरीक्षितम्, य - चिन्ताशोकान्वितं च यत् 5 प - नृत्तानि, 6 प - त्वातोद्य प - गानैश्च संस्मृतम् 7 प - चेष्टा च विविधा 8 च - पुंसा 9 पुष्पगन्धिकेति च बहुष्वादर्शेषु दृश्यते

[1][यत्र स्त्री नरवेषेण ललितं संस्कृतं पठेत् ।
सखीनां तु विनोदाय सा ज्ञेया पुष्पगण्डिका ॥
[2]नृत्तं तु विविधं यत्र गीतं चातोद्यसंयुतम् ।
स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका ॥]
प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहताः[3] ।
स्त्रियः प्रियेषु [4]सज्जन्ते ह्यपि विप्रियकारिषु ॥

---

मध्ये सुषिरेण मध्येऽवनद्धेन मिश्रणाकृतो विचित्रभावः पात्राणां सुकुमारप्रयोगोऽभिनेयेऽपि रञ्जक एव यद्यप्यलौकिकं यद्वैचित्र्यम् । मालासादृश्यात्पुष्पगण्डिका गाननृत्तगीतगतवैचित्र्ययोगात् (स्त्रीलिङ्गविवक्षया च स्त्रीपात्राणं पुष्पगण्डिकोक्ता । पुंसामिति) सा च चेष्टाश्रयशब्दाभ्यां पर्यायेण योज्या ।

अथ प्रच्छेदकाङ्गकृतं वैचित्र्यं योजयितुमाह (प्रच्छेदक इति लास्यविधाने-(अ ३१) वक्ष्यते "ज्योत्स्नायां मदिरायां वा दर्पणे सलिलेऽथवा ।) छायासादृश्यकान्तस्य प्रहर्षार्थविभूषित"मिति (३१-अ) त्रिधाप्रच्छेदकस्य लक्षण (मुक्तम् । तत्र जलक्रीडायां जले प्रसाधने दर्पणे पानगोष्ठ्यां पान) ईषत्प्रतिफलिततत्तदाकृतिदर्शने सति कान्तायाः प्रहर्ष इति त्रिधा प्रच्छेदं प्रति विमल(फलन ?)मिति पर्यायात् (काव्येषु कविभिः प्रतिबिम्बदर्शनजातहर्षस्य स्त्रीणां प्रणयकोपप्रसादनसामर्थ्यं वर्णितम् ।) यथा—

पणमह पणयप्पकुविअगोरीचलणग्गलग्गपडिबिंबं ।
तंसु णहदप्पणेसु अ एआअअ तनुअरं रुद्दं ॥
(पणमत पणअप्पकुपिअकोरीचळणक्कलक्कपटिपिंपम् ।
तंसु नखतप्पनेसुं एकातस तनुतरं रुत्तम् ॥*)

---

1 डजशादिषु - अयं पाठः 2 नयमादिष्वयं पाठः 3 ठ - चन्द्राहतातपाः
4 न - रज्यन्त अपि

---

* इयं गुणाढ्यकृतबृहत्कथायां प्रथमा गाथा—प्रणमत प्रणयप्रकुपितगौरीचरणाग्रलग्नप्रतिबिम्बम् । तेषु नखदर्पणेषु एकादशतनुतरं रुद्रम् ॥ इति छाया

अनिष्ठुर[1]श्लक्ष्णपदं समवृत्तैरलङ्कृतम्।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमिति स्मृतम्[2] ॥

इत्यादि। तत्र च त्रिविधेऽपि ज्योत्स्नैवोपयोगिनी, ............धानलीलानि स्वाधीनभर्तृकोचितसंभोगविशेषोपलम्भेन। एतदुक्तं भवति—लोकवृत्ते तावन्न सर्वदा संपूर्णचन्द्रोदयो भवति प्रयोगे तु संभावनागर्भतया रसोपयोगी तथाविधः कालविशेषो गृहीतव्यः। तथा च रत्नावल्यां भूयसा चन्द्रोदयो वर्णितः, "संप्रत्येष सरोरुहद्युतिमुष" (१-२३) इति, "उदयतटान्तरित"मिति (१-२४), "वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गत" (३-१३) इति। एवं रसोपयोग्यलौकिककालविशेषग्रहणं प्रच्छेदकादुपजीवितम्। यदाहुरुपाध्यायपादाः—

यद्यत्रास्ति न तत्रास्य कविर्वर्णनमर्हति।
यन्नासंभवि तत्रास्य तद्वर्ण्यं सौमनस्यदम् ॥
देशोऽद्रिदन्तुरो द्यौर्वा तटित्कुण्डलमण्डिता।
ईदृक्स्यादथवा न स्यात् किं कदाचन कुत्रचित् ॥ इत्यादि।

अथ त्रिमूढलक्षणादुपयोगिनं भागं निरूपयितुमाह अनिष्ठुरश्लक्ष्णपदमित्यादि। त्रिमूढके तावल्लास्याङ्गे नायकस्य व्यलीकवशादेकस्या द्वेष्यतोऽभिनवायाः प्रथमप्रणयबद्धलज्जादिनेति मोहस्त्रयाणाम्। तत्र नायकस्यावश्यमनिष्ठुराण्येवोद्यनविषयाणीव वचांसि भवन्ति। तत इह वचसि रसोपयोगी गुणालङ्कारांशः स्वीकर्तव्यः। न हि लोके यद्यते माधुर्यौजःप्रभृतिगुणगणोऽस्ति सर्वो ह्येवमाविष्टो यत् किंचिद्वदति तत्काव्यमेव स्यात्। छायामात्रेण त्वंशतः स एवापूर्णत्वादनुपयोग्येव। तस्मादलौकिकमेवैतद्वैचित्र्यं रसोपयोगे सर्वं तद्गुणग्रामकृतम्। समवृत्तैरित्यनेन वृत्तकृतवैचित्र्यं, पुरुषभावाढ्यमित्यनेन पात्रकृतमपि हेलाभावादि, एवं विशेषकृतं वैचित्र्यं यत्र नाट्ये सौन्दर्यमस्तीति दर्शयन् गुणानामेवान्वयव्यतिरेकाभ्यां तत्र प्रभावं दर्शयति।

1 ड - स्वल्प 2 प - उदाहृतम्

[1]पात्रं विभ्रष्टसङ्केतं सुव्यक्तकरणान्वितम्[2]।
[3]प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः ॥ १३९
[4][रूपवाद्यादिसंयुक्तं पाठ्येन च विवर्जितम्।
नाट्यं हि तत्तु विज्ञेयं सैन्धवं नाट्यकोविदैः ॥]

अथ सैन्धवकादुपजीव्यमंशं स्वीकर्तुमाह पात्रं विभ्रष्टसंकेतमिति

"सैन्धवीमाश्रिता भाषा ज्ञेयं तत्सैन्धवं बुधैः।
रूपवाद्यादिसंयुक्तं"

इति च लास्याङ्गविधाने (अ-३१) वक्ष्यते। तत्र यदा नान्यप्राकृतादिभाषोपकरणत्वेन सैन्धवीप्राया आश्रीयते तद्रसोपयोगि रञ्जनाधिक्यात्, अलौकिकोऽयमर्थो रञ्जनोपयोगी लास्याङ्गात् स्वीकृतो भवति। तथा हि शृङ्गाररसे सातिशयोपयोगिनी प्राकृतभाषेति सट्टकः कर्पूरमञ्जर्याख्यो राजशेखरेण तन्मय एव निबद्धः, भेज्जलेन राधाविप्रलम्भाख्यो रासकाङ्कः सैन्धवभाषाबाहुल्येन, चन्द्रकेन स्वानि रूपकाणि वीररौद्राधिकोपयोगीनि संस्कृतभाषयैव*। अत एव च तत्तद्रसोपयोगतारतम्यादेवैकतमस्यातोऽन्यस्यात्र प्राधान्यं कल्प्यते।

तदेतदाह पात्रमित्यादिना। जातावेकवचनं, तेन यत्र पात्राणि प्राकृतैर्वचनैर्युक्तानि,अत एव विभ्रष्टः संकेतविशेषः रसोचितः काकध्याये कथितपूर्वः, स एष भ्रष्टात्मा भ्रंशं नीतः संकेतो यत्र†, सुष्ठु व्यक्तिर्यतो रसस्य तेनैव करणेन वीणावाद्यादिक्रिययान्वितं पात्रं सैन्धवकमिति विषयतद्वतोरभेदोपचारात्। तेन दशरूपकस्य यद् भाषाकृतं वैचित्र्यं कोहलादिभिरुक्तं तदिह मुनिना सैन्धवाङ्गनिरूपणे स्वीकृतमेव।

1 ड - पात्रं विस्मृत, न - रूपवाद्यादिसंयुक्तं 2 न - आश्रयम् 3 य - पाठ्यहीनं स्वभावोक्त्या 4 पा दि मातृकासु पाठः

* भासकृतमिति मुद्रापितं भारतकथावस्तुकं पञ्चरात्रादिनाटकषट्कं चन्द्रकस्यैवेति मन्यामहे।

† हशानितसौबकचक्र इति तालपत्रादर्शयोः।

[1]मुखप्रतिमुखोपेतं चतुरश्रपदक्रमम् ।
[2]श्लिष्टभावरसोपेतं [3]वैचित्र्यार्थं द्विमूढके ॥ १३३

करुणान्वितमिति त्वपपाठः । एवं 'पाठ्यविहीनं सैन्धवक' मिति, 'यथा रत्नावल्यां विदूषको नृत्यतीति प्रियाप्रतिनिधिप्रभ्रंश[1], इति मुनिमतोपेक्षयैव लक्षण उदाहृतं च कृतं न चोक्तं युक्त्या तेन किंचिदित्यसदेव ।

द्विमूढकाद् वैचित्र्यांशं स्वीकरोति मुखप्रतिमुखमित्यादिना । यत्र काव्ये लास्यमित्याश्रये द्वयोर्नायकस्य नायिकायाश्च नायिकयोर्वा प्रतिमूढक इव मोहो व्यावर्ण्यते तत्र, तालनिरूपणायामेकस्तालश्चतुर्भिः पादैर्युक्तः सन्नावर्तत इति वक्ष्यते (अ-३१)—

मुखप्रतिमुखोपेतं तथा चाचपुटाश्रयम् ।
यथाक्षरैः सन्निपातैस्तथा द्वादशभिर्युतम् ॥ इति ।

तस्मादङ्गाङ्गपरिक्रमे यदेव तालानुसरणं चतुर्षु च मुखेषु गतिपरिसमापनं लोके गत्यादावपरिदृष्टमपि नटसामाजिकवर्गसविधाध्यासनेन[2] साम्याङ्गस्यानन्दस्वभावतया रसांशेतराङ्गत्वादतिशयेन रसोपयोगीति तत् स्वीकृतम् ।

मुखं यदग्रे सामाजिकाः प्रतिमुख्यस्ततोऽन्या दिशो लास्याङ्गं नेतुम्, मुखप्रतिमुखे गीतकाङ्गत्वेन हि । (चतुरश्रेति) चतुरश्रं कृत्वा क्रान्तदिक्चतुष्टयैः पदैः क्रमणं यत्रेति । किमेवं सति भवतीत्याह वैचित्र्यार्थं वैचित्र्यमत्र प्रयोजनमिति । तेनापि किमिति चेत्तत आह (श्लिष्टभावेति) श्लिष्टभावेन सर्वसाम्यलक्षणेन चित्तवृत्तिसंघट्टेन रसानामुपगतं स्फुटत्वं येनेति ।

---

1 ड - शुभार्थगीताभिनयं- 2 ड - स्पष्ट, य - अष्ट 3 न - नानार्थं तु विमूढकम् च - विचित्रार्थं प - चित्रार्थं तद्विमूढकम् ड - व्याजचेष्टं द्विमूढकम्.

---

1 प्रियातिथिप्रभृतिः—इति लेखकदोषः स्यात्
2 सविधाव्यापादनेन.

उत्तमोत्तमकं विद्यादनेकरससंश्रयम्[1] ।
[2]विचित्रैः श्लोकबन्धैश्च [3]हेलाहावविचित्रितम्[4] ॥

गीतकाङ्गाभ्यां मुखप्रतिमुखाभ्यामङ्गसौष्ठवेन रसभावैर्नायिकाद्वयरचनया च युतमिति श्रीशङ्कुकाद्याः, तच्च प्रागेव परीक्षितम् ।

मुखप्रतिमुखौ सन्धी इत्येतदपि न समीचीनं, अनुपयोगादस्यार्थस्येत्युपाध्यायमतमेवानवद्यमावेदितपूर्वं ग्राह्यम् ।

अथोत्तमोत्तमकमङ्गं नाट्य उपयोजयितुमाह उत्तमोत्तमकं विद्यादनेकरससंश्रयमित्यादि । "उत्तमोत्तमके त्वादौ नर्कुटं संप्रयोजयेत्" इत्यादिना "हेलाहावविभूषित" मित्यन्तेन लास्याङ्गं लक्षयिष्यते (३१-अ) । तत्र च चित्तवृत्तिपरिपोषो हेलाहावादिचेष्टालङ्कारमुखेन यः स्थितः सोऽत्र लौकिकः सन्नुपजीव्यते । न हि भगवदवतारस्य रामस्य कुलकलत्रमनुपेक्ष्यं, पराभवखलीकारश्च न सोढव्यः, क्षत्रियेण च लोककण्टकाभ्युद्धरणं कर्तव्यमिति यच्छास्त्रार्थपरिपालनं मुक्त्वा, रावणहृतसीतासमानयनाद्युचितं निमित्तं, परमार्थतो न तु यथा प्रतिरूपं "मुहुर्व्याधूतास्तादृश" मित्यादि वर्ण्यते तथास्य तृतीयत्रेतावतीर्णस्य(रामस्य) संभाव्यते । रामायणेऽपि मुनिना तथा वर्णितमिति चेत् किमतो वेदेऽपि हि तथा वर्ण्यतां, न वयमतो बिभीमः । स हि भागः काव्यं यश्च यश्च रसाभिनिष्यन्दी[1] वर्ण्य इत्युक्तमसकृत् । ततश्चान्यतररञ्जनोपक्रमविनेयहृदयसंवादिवैचित्र्यांशोऽसौ नाट्ये लास्याङ्गप्रसादोपनत एव ।

उत्तमानि तावल्लास्याङ्गानि, तेभ्योऽपीदमुत्तमं, सर्वं हि रसपर्यायीति दर्शितं प्राक् । ततः संज्ञायां कन् ।

अनेकस्यासाधारणस्य रसस्य संश्रयोऽस्मिन्निति, स्थायिनां बहुत्वनूतनत्वाद् घटनाविचित्रत्वमुक्तम् । श्लोके च बध्यत इति श्लोकबन्धः, (बन्धानां) विधास्तैः विविधैः (चित्रैः) परमार्थताभूतैः क्वचित्कदाचित्संभवमात्रं

1 न - करणान्वितम् 2 प - विचित्र 3 न - लीलाभावविभूषितम् 4 प - विभूषितम्.

1. तच्च तच्च तात्त्वनिष्यं

कोपप्रसादजनितं[1] [2]साधिक्षेपपदाश्रयम्[3] ।
उक्तप्रत्युक्तमेवं[4] स्या[5]च्चित्रगीतार्थयोजितम् ॥ १३५

तथा वर्णितैर्युक्तम्, यथा (विक्रमोर्वश्यां)—"आ दुरात्मन् रक्षः, क नु खलु मे प्रियतमामादाय गच्छसि । (विभाव्य) नवजलधरः सन्नद्धोऽयं"* इत्यादि पुरूरवस उक्तिश्चानुरागेणैव व्याख्यातेति किं पुनरुक्त्या ।

हेलाहावैर्विशेषेण दीप्ततागमनरूपेण भूषितमिति सात्त्विकाद्यनुभाववर्गस्य सर्वस्यादीप्ततोपलक्षिता—

तत्राक्षिभ्रूविकाराद्यः शृङ्गाराकारसंयुतः ।
सग्रीवारेचको ज्ञेयो भावस्थितसमुत्थितः ।
स एव हावः सा हेला ललिताभिनयात्मिका । (अ २२)

इति हेलाहावयोर्लक्षणम् ।

अथान्त्यमङ्गं नाट्योपयोगि कर्तुमाह—कोपप्रसादजनितमित्यादि । प्रथमार्धेन भावलक्षणमेकदेशद्वारेणानूद्यते, द्वितीयेन तत आकृष्य वैचित्र्यभागो नाट्योपयोगी कथ्यते । तदयमर्थः—कोपप्रसादजनितं साधिक्षेपपदाश्रयं चेत्यादिरूपं यदुक्तं प्रत्युक्तं तथास्यगाने(अ-३१) वक्ष्यते, नाट्ये एवमिति समनन्तरमेवं वक्ष्यमाणेन पथिना स्यात्, तमाह चित्रेति । चित्रं यद्गीतं ध्रुवागानकाव्यं तस्य योऽर्थस्तेन संयोजनं यस्मिन्नाट्यांशे उक्तप्रत्युक्ते हि

1 न - बहुलं 2 च - सविक्षेप 3 प - अधिक्षेपसमाश्रयम्, य - पराश्रयम् 4 ढ - एव 5 ढ - किंचिद्, न - नृत्त.

* नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥ (४-१)

[1]यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम् ।
मदनानल[2]तप्ताङ्गी तच्चित्रपदमुच्यते ॥ १३६

(वैचित्र्यं) लास्याङ्गात् स्वीकृतम् । यथा "बाले नाथ विमुञ्च मानिनि रुषम्*" इत्यादौ भिन्नानां वाच्यखण्डलकानां समन्वयो रसावेशमहिम्नैव, न तु श्रुतिलिङ्गादिप्रमाणषट्कं तदन्यत्रावकाशं लभते "काकार्यं शशलक्ष्मणः क च कुलं‡" इत्यादावियमेव वार्ता । एवं "णळिनीदळणीसहमुत्तदेहिआ । अइदुल्लहपडिबंधाणुराइआ । (नलिनीदलनिस्सहमुक्तदेहा । अतिदुर्लभप्रतिबन्धानुरागा) ॥"

इत्यादेर्द्विपदिकागीतार्थस्याभिनये काव्यार्थस्य च "हिअअ समास्सस" (शाकु), इत्यादेरसावेशकृत एवाभिनयार्थसमावेशो लोकापरिदृष्ट उपरञ्जनाय सातिशयमुपयोगी रसावेशवैवश्यप्रसादादित्युक्तमत्यक्ताल्लास्याङ्गादुपजीवितः ।

यद्यपि "स्थाने ध्रुवास्वभिनयो यः क्रियते" (३२-४७) इति नाट्यनिरूपणायां वक्ष्यते तथापि कविना तादृक्कार्यं प्रयोक्त्रा च तादृग्गीतं कर्तव्यमिति शिक्षणाय कुतश्चेदमङ्गमुपजीवितमिति शङ्काशमनाय रूपकाङ्गत्वेनेहास्याभिधानं, सामान्याभिनये त्वभिनयत्वेनास्य निरूपणं भविष्यति "षडात्मकस्तु शारीर" (२२-४०) इत्यत्र । कोपप्रसादजनितत्वमित्यनेन चित्तवृत्त्यावेशस्थानमस्याङ्गस्य निवेशविषय इत्युक्तम् । यत उक्तप्रत्युक्तमहिम्ना चाकाशभाषितात्मकमप्यलौकिकरूपं स्वीकुर्वता तत्सहचरं स्वगतजनान्तिकापवारितकाद्युपलक्षितम् । न च सर्वथा तन्नाशो लोके कचित् संभवन्नाट्येऽपीति गीयमानः स्यात्, अनेन श्रोतुः काकतालीयवशात् स्वचित्तवृत्त्यार्थ-

1 एतौ श्लोकौ प्रक्षिप्तावपि न य प ट भ - मातृका विना सर्वास्वन्यासु दृश्येते ड - बदि प्रतिकार्ति 2 ड - तप्तं तु विचित्रपदं

* अयं श्लोकः षोडशोऽध्याये आख्यानलक्षणस्य लक्ष्यतयोदाहृतः (सं २ - पृ ३१०)
‡ अयमपि षोडशोऽध्याय उपपत्तिलक्षण उदाहृतः (सं २-पृ-३१८)

**दृष्ट्वा स्वप्ने प्रियं यत्र[1] मदनानलतापिता।**
**करोति विविधान् भावां[2]स्तद्धि भाविकमुच्यते ॥**

संवादो भवति। यथा हर्षचरिते भगवत्याः सरस्वत्याः *"तरलयसि दृशं समुत्सुका" मित्यपरवक्त्रं शृण्वन्त्याः। तत्सर्वं हि लोके यथा न स्यात् तर्हि प्रत्यक्षकल्पं कथमिव तत्र प्रतीतिरिति नाट्यरूपतैव भ्रंशेत।

अन्ये तु चित्रपदं भाविकं चेत्यङ्गद्वयमाहुः पठन्ति च—

यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम्।
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ॥

दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता।
करोति विविधान् भावांस्तद्धि भाविकमुच्यते ॥ इति।

तच्चेदमसत्, "लास्ये दशविधं" (१९-१२०) इत्यत्रत्येन ग्रन्थेन, "दशाङ्गं लास्य"मिति च तालाध्याये (३१) पठिष्यमाणेन विरोधात्, न चास्योपयोगः कश्चित्। तथा ह्यलौकिककैशिक्युपयोगि रसांशे सर्वथोपकारि यद्वैचित्र्यं तल्लास्याङ्गद्वारेणाह, स्वकार्यं तच्च सर्वं दशभिरेव संगृहीतम्। तथा हि—प्रधाने चित्तवृत्त्यंशे† वा वैचित्र्यं विभावाद्यंशे वा उपरञ्जकभावे वा। तत्र (चित्तवृत्त्यंशे प्रच्छेदकाद्‡) विभावांशगतं तु वैचित्र्यं, सैन्धवकात् काकाद्यंशे, स्थितपाठ्याल्लक्षणगुणाद्यंशे, त्रिमूढकादनुवृत्तांशे, पुष्पगण्डिकात आहार्ये उपरञ्जकगीतातोद्ययोजने च, सात्त्विके आसीनपाठ्यात्, उपरञ्जकभावेऽपि (निः)शब्दाद् ध्रुवागानभागे सर्वातोद्ययोगे च गेयपदात्, गीतार्थस्य पात्रे करुणार्थाभिनये उक्तप्रत्युक्ताद्वाचिकस्य, स्वरतालनुसरणाद्विमूढकात् तत एवाङ्गिकवैचित्र्यमपि, व्यभिचार्यंशे तु वैचित्र्यमुत्त-

1 न-यत्तु 2 च-स्त तु.

* तरलयसि दृशं किमुत्सुकामकलुषमानसवासललिते।
अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥ (उ-१)

† चित्तवृत्त्यनुवृत्त्यंशे" इति स्यात्

‡ तत्राद्युत्तमोत्तमकात्

[1]एतेषां लास्यविधौ [2]विज्ञेयं लक्षणं प्रयोगज्ञैः ।

मोत्तमकात् । एवं तदतिरिक्तो नास्त्येवांश इति च दशैवाङ्गानि । वाग्भागस्तनुत्वेनोपरञ्जकभागः स्वरसात्मनि हि तद्वैचित्र्ये भूयसा मुनिना निरूपणं कृतम् । अतएव चालौकिको वैचित्र्यांशः प्रत्युतरसे सातिशयोपयोग इतिशब्दतो मुनेरनुकारो, रसात्मा नाट्यमिति (इति)नाभिप्रेतमिति लक्ष्यते । अलौकिकवैचित्र्यसारो हि रसः, तथा चोक्तं भट्टतोतेन—

लक्षणालङ्कृतिगुणा दोषाः शब्दप्रवृत्तयः ।
वृत्तिसन्ध्यङ्गसंरम्भः संभारो यः कवेः किल ॥
अन्योन्यस्यानुकूल्येन संभूयैव समुत्थितैः ।
झटित्येव रसा यत्र व्यज्यन्ते ह्लादिभिगुणाः (णैः ?) ॥
वृत्तैः सरलबन्धैर्यत् स्निग्धैश्चूर्णपदैरपि ।
अश्लिष्टहृद्यघटनं भाषया सुप्रसिद्धया ॥
यच्चेदृक्काव्यमात्रं सद्रसभावानुभावकम् ।
सामान्याभिनये प्रोक्तं वाच्याभिनयसंज्ञया (अ २२) ॥
एवंप्रकारं यत्किंचिद्वस्तुजातं (कथार्पितम्) ।
अनूनाधिकसामग्रीपरिणामोन्मिषद्रसम् ॥
*रसपोषाय तज्जाते नाट्यस्वयं स्वरो ... ।
प्रतिभायाः प्रगल्भायाः सर्वमोडुप एष सः ॥

इति संभावनाप्राणनाया हि यल्लोके संभाव्यते परम् अथ (परमार्थं तत् ? ।) वस्तुतो लोकोत्तरत्वेनैव संभारेण युक्ता कविवाणी हठादेव रसमयी भवति साधारणताप्राणत्वादिति तत्र तात्पर्यम् ।

ननु लास्याङ्गेभ्यो यो भागानुपजीवति स तावदिहोक्तः, तेषां तु स्वरूपं वक्तव्यमित्याशंक्याह एतेषां लास्यविधाविति । एतद् दशरूपकलक्षणं

1 ङ - एतद्वै 2 ङ - लक्षणमुक्तं मयात्र विस्तरतः (ढ - सु)

* रसपोषाय तज्जातं लोकान्नाट्यजगत्त्रयम् ।
प्रतिभायाः प्रगल्भायाः सर्वस्वं कविवेधसः ॥
इति भ्रष्टनष्टाक्षरप्रायस्यास्य श्लोकस्यायमभिप्रायः स्यात्

तदिहैव तु यन्नोक्तं प्रसङ्गविनिवृत्तहेतोस्तु[1] ॥ १३८

[2]पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतं गुणालङ्कारभूषितम् ॥ १३९

महारसं महा[3]भोगमुदात्तवचनान्वितम् ।
महापुरुषसंचारं साध्वाचार[4]जनप्रियम् ॥ १४०

सुश्लिष्टसन्धिसंयोगं[5] सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥

अवस्था या तु[6] लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसंचारा नाटकेऽसौ विधीयते[7] ॥ १४२

---

कवीनां सुखग्रहणाय राशीकर्तुमाह पञ्चसन्धीत्यादि । नाटकमित्यभिनेयकाव्यमात्रम् । तत्र पञ्चसन्धीत्यादि संभवमात्रे मन्तव्यम् । महान्तो रसाः पुरुषार्थोपयोगिनः यत्र । महान् भोगो रञ्जनाप्रधानो रसो यत्र, आभोग इत्यन्ये । उदात्तवचनान्वितमिति गुणान् श्लेषप्रसादादीन् स्वीकुरुते । सुश्लिष्टसन्धिसंयोगमिति सन्ध्यन्तराणि (च), सुप्रयोगमिति लास्याङ्गानि, सुखाश्रयमिति छन्दोवृत्तवैचित्र्यं, मृदुशब्दैरभिधानं वर्णना विवक्षितस्यार्थस्य यत्रेति माधुर्यप्रसादार्थव्यक्तिगुणानां प्रकर्षणं सूचयति । एवं नाटकं कुर्यात् । यश्च नाटकं कुर्यात् स एव कविः । किं तेनेत्याह अवस्था यात्विति

---

1 न - हेत्वर्थम् 2 जादिबा न्तेषु सामाद्येकविंशतिसन्ध्यन्तरानन्तरमर्थोपक्षेपकाः तेषामनन्तरं—"वृत्तिवृत्त्यङ्गसंपन्नं पताकार्थप्रतिक्रियम् (य - पदार्थप्रकृति न पञ्चार्थप्रकृति) । पञ्चावस्था समुत्पन्नं (न - विनिष्पन्नं) पञ्चभिः सन्धिभिर्युतम् । षट्त्रिंशल्लक्षणोपेतं......"इति वर्तते । 3 भ - योगमुदात्तवचनोद्भवम् 4 ड - चारं 5 ड - योगं च 6 द - हि 7 ड - संभवेदिह, भ - नाटकेषु क्रिया भवेत्

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत् कर्म न [1]वा योगो नाट्येऽस्मिन्यन्न दृश्यते ॥
योऽयं स्वभावो लोकस्य नानावस्थान्तरात्मकः ।
[2]सोऽङ्गाद्यभिनयैर्युक्तो [3]नाट्यमित्यभिधीयते ॥ १४४
देवतानामृषीणां च राज्ञां चोत्कृष्टमेधसाम्[4] ।
[5]पूर्ववृत्तानुचरितं नाटकं नाम तद्भवेत् ॥ १४५
यस्मात् स्वभावं संत्यज्य[6] साङ्गोपाङ्गगतिक्रमैः ।
[7]प्रयुज्यते ज्ञायते च तस्माद्वै नाटकं स्मृतम् ॥ १४६
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः[8] ।
नानावस्थान्तरोपेतं[9] नाटकं संविधीयते ॥ १४७

---

नानापुरुषेषु सञ्चार एको भावानुप्रवेशो रसात्मना यस्याः सा तादृशी यतो नाटके विधीयते संपाद्यते रसरूपतां नीयत इत्यर्थः । उक्तं चैतद्वितत्य ।

ननु सर्वे चात्र किमवस्थाना इत्याशंक्य प्रथमाध्यायोक्तमेव श्लोकद्वयं पठति न तद्ज्ञानमिति, योऽयं स्वभावो लोकस्येति । एतच्च तत्रैव व्याख्यातमिति किं पुनरुक्तेन । पूर्ववृत्तानुचरितं कथं नाटकशब्दस्यार्थ इत्याह यस्मात्स्वभावं संतज्येति नट नताविति नमनं स्वभावत्यागेन प्रह्वीभावलक्षणं, ये त्वन्ये नट वृत्ताविति पठन्ति तन्मतेऽपीह नमनं, नटशब्दो जनिदाच्युसूत्रेण

---

1 ड - योगोऽसौ  2 ड - सोऽङ्गाभिनयसंयुक्तो  3 न - नाटकं त्वभिधीयते  य - नाटके संविधीयते  4 ड - लोकस्य चैव हि, द - अथ कुटुम्बिनाम्  5 द - वृत्तानुकरणं नाट्यमेष (?) लोकस्य चैव यत्  भ - कृतानुकरणं लोके नाट्यमित्यभिधीयते  6 ड - संहृत्य  7 ड - अभिनीयते गम्यते  भ - अभिनीयते गम्यते  8 द - क्रियास्तु वै  भ - क्रियासु च  9 ड - उपेतैः.

[[1]अनेकशिल्पजातानि [2]नैककर्मक्रियाणि च ।
[3]तान्यशेषाणि रूपाणि कर्तव्यानि प्रयोक्तृभिः ॥]
लोकस्वभावं संप्रेक्ष्य नराणां च बलाबलम् ।
संभोगं चैव युक्तिं च ततः कार्यं तु[4] नाटकम् ॥
[5]भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः ।
ये चापि हि भविष्यन्ति [6]ते यत्नश्रुतबुद्धयः ॥ १५०
[7]कर्मशिल्पानि शास्त्राणि विचक्षणबलानि च ।
[8]सर्वाण्येतानि नश्यन्ति [9]यदा लोकः प्रणश्यति ॥
[10]तदेवं लोकभाषाणां[11] प्रसमीक्ष्य बलाबलम् ।[12]
मृदुशब्दं सुखार्थं च [13]कविः कुर्यात्तु नाटकम् ॥
चेक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये ।
वेश्या इव न [14]ते भान्ति कमण्डलुधरैर्द्विजैः ॥ १५३

---

(उणादि ४-११५)व्युत्पादितो गृहीतव्य इति दर्शयति साङ्गोपाङ्गा ये पदक्रमा गतिवैचित्र्याणि । एतच्च समस्तं नाट्याङ्गोपलक्षणं प्रयुज्यत इति नटैर्ज्ञायते चेति सामाजिकैस्तेनोभयोरपि नमनमुक्तमिति संभावनाकृतमौचित्यम् । मृदुशब्देति

---

1 ड - यान्येव य - यान्येक 2 ड - ह्येककर्मकृतानि च (य - रूप) 3 ड - तानि शेषाणि 4 य - च 5 य - लोके प्रणश्यति, द - लोको ह्रसिष्यति 6 भ - ते यत्नार्जित ड - तेऽल्यल्प द - तेऽप्यल्प 7 ड - बुद्धयः कर्मशिल्पावि वैचक्षण्यं कलासु च य - कर्मशिल्पानि वैलक्ष्यं लक्षणं च बलानि च 8 ड - सर्वाणि पुंसां 9 न - सदा, भ - यथा 10 भ - एवं लोकस्य वै भावमभावं प्रसमीक्ष्य च 11 ड - भावानां 12 य - यथाक्रमम् 13 य - तज्ज्ञैः कार्यं तु 14 ड - शोभन्ते

[1]दशरूपविधानं च मया प्रोक्तं द्विजोत्तमाः ।
अतः परं[2] प्रवक्ष्यामि वृत्तीनामिह[3] लक्षणम् ॥

इति भारतीये नाट्यशास्त्रे [4]सन्धिनिरूपणं
नामाध्याय एकोनविंशः[5] ॥

---

यदुक्तं तस्य प्रयोजनमाह भविष्यति त्रेतायुगापेक्षया द्वापरे कलौ वेत्यर्थः । सुखार्थमित्यर्थव्यक्तिः स्वीकृता । एतदुपसंहरन्नन्यदासूत्रयन्नध्यायमध्यायान्तरेण सङ्गमयति दशरूपविधानं चेति शिवम् ।

द्विजवरतोतनिरूपितसन्ध्यध्यायार्थतत्त्वघटनेयम् ।
अभिनवगुप्तेन कृता शिवचरणाम्भोजमधुपेन ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां
नाट्यवेदविवृतावभिनवभारत्यामेकोनविंशः
सन्ध्यध्यायः समाप्तः ॥*

---

1 ड - इतिवृत्तं ससन्ध्यङ्गं, भ - अङ्गलक्षणमेतत्तु 2 भ - ऊर्ध्वं 3 भ - अपि 4 भ - वागभिनयेऽङ्गविकल्पो नामाध्यायोऽष्टादशः 5 जादि बान्तेषु दटौ विना एकविंशः दट—विंशः

* क - संज्ञक आदर्शे "विवृतिर्भरतस्येयं लिखिता भारती नवा । नारायणेन विदुषः शितिकण्ठद्विजन्मनः ॥" इति लेखकनामोल्लिखितम् ।

•

श्रीः

# नाट्यशास्त्रम्

## विंशोऽध्यायः[1]

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
यथा वस्तूद्भवं चैव काव्यानां च[2] विकल्पनम् ॥ १

अभिनवभारती—विंशोऽध्यायः

वृत्त्यध्यायः

निश्शेषशब्दव्यवहारवृत्ति[1]वैचित्र्यमभ्येति यतः प्रतिष्ठाम् ।
श्रोत्रात्मकं तत्परमेश्वरस्य वन्देतमां रूपमरूपधाम्नः ॥

वृत्तिभेदात्काव्यभेदा भवन्तीत्युक्तं दशरूपकारम्भे (१८-५) । तत्र वृत्तयो न ज्ञाता इति तदवधारणार्थमाह समुत्थानं त्विति ।

यद्यपि कायवाङ्मनसां चेष्टा एव सह वैचित्र्येण वृत्तयः ताश्च समस्तजीवलोकव्यापिन्योऽनिदंप्रथमताप्रवृत्ताः प्रवाहेन वहन्ति, तथापि विशिष्टेन हृदयावेशेन युक्ता वृत्तयो नाट्योपकारिण्यः । आवेशश्च तारतम्यलक्षणो द्विधा लैकिकोऽन्यश्च । तत्र लैकिक आवेशः सुखदुःखतारतम्यकृतो न रसागमास्वाद्यो[2] ह्यसावित्युक्तं रसाध्याये (अ ६) । अलौकिकस्त्वनावेशोऽप्यावेशमयः कवेरिव सामाजिकस्येव । काप्यवसरे हृदयसंवादसरसस्यैव यो भासते स

1 जादिबान्तेषु द्वाविंशोऽध्यायः, चयट - एकविंशोऽध्यायः, भ - एकोनविंशोऽध्यायः 2 ढ - तु

1 वृत्त 2 रसागमनास्वाद्यो

एकार्णवं जगत् कृत्वा भगवानच्युतो यदा[1] ।
शेते स्म [2]नागपर्यङ्के लोकान्[3] संक्षिप्य[4] मायया ॥ २
अथ वीर्य[5]बलोन्मत्तावसुरौ मधुकैटभौ ।
[6]तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षया[7] ॥ ३
[8]निजबाहू विमृद्नन्तौ भूतभावनमक्षयम् ।
जानुभिर्मुष्टिभिश्चैव [9]योधयामासतुः प्रभुम् ॥ ४
[10]बहुभिः परुषैर्वाक्यैरन्योन्यसमभिद्रवम्[11] ।
[12]नानाधिक्षेपवचनैः कम्पयन्ताविवोदधिम्[13] ॥ ५

---

एव साधारणे चमत्कारगोचर[1]व्यापारविशेषो रसस्योपकरणीभवति । तादृशश्च प्रथमतः कृतयुगारम्भे भगवतो वासुदेवस्यैव । तस्य हि स्वफलसिद्धये न किंचित् कर्तव्यमस्ति लोकानुग्रहं मुक्त्वा[2] । यथा हि "न मे पार्थास्ति[3] कर्तव्यं (गीता ३-२२)" इति तेन साधारणस्य भावेन प्रविष्टानावेशेऽप्यावेशमयो, भगवानेव प्रथमतो नान्यः, पूर्वसर्गगामिनो व्यापारस्य प्रलयमहारजनीप्रस्तावेन भ्रष्टसंसारत्वात् । अत एवाह—

एकार्णवं जगत्कृत्वा भगवानच्युतो यदा ।
शेते स्म नागपर्यङ्के लोकान् संक्षिप्य मायया ॥ इति ।

---

1 ढ - यथा 2 च - अस्य (?) 3 ङ - लोकं 4 च - संक्षेप्य 5 ङ - मदोन्मत्तौ 6 ढ - तर्कयामासतुः 7 न - युद्धकांक्षिणौ 8 ङ - बाहू विमर्दमानौ तौ न - निजबाहू विमृश्नन्तौ भ - बाहूनि तर्जयन्तौ तावङ्गहारैस्तथा हरिम् । मुष्टिभिर्जानुभिश्चैव ताडयामासतुः प्रभुम् । च - निजबाहू विवृद्धन्तौ (?) 9 ढ - योजयामासतुः 10 ङ - अभिद्रवन्तावन्योन्यं वाक्यैश्च परुषैस्तथा 11 च - स्पर्धयान्वितौ 12 च - नामविक्षेप भ - नानाविक्षेप भ - नानाविच्छेद 13 भ - अम्बुधिम्

---

1 क - चमत्कारकारी ख - चमत्कार गोचरचारी 2 मत्वा 3 यथा ह्यनृतमेवर्थमास्ति

[1]तयोर्नानाप्रकाराणि वचांसि वदतोस्तदा[2]।
[3]श्रुत्वा त्वभिहतमना द्रुहिणो वाक्यमब्रवीत्॥ ६
[4]किमिदं भारतीवृत्तिर्वाग्भिरेव प्रवर्तते[5]।
उत्तरोत्तरसंबद्धा[6] नन्विमौ निधनं नय॥ ७
पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः।

---

त्रेतायुगे च नान्यं प्रपत्स्यति। यद्यपि चादिकविर्वाल्मीकिरि[1]ति प्रवादस्तथापि प्रलयानन्तरं कृतयुगे भाविनि सन्ध्यवसरप्रतिबन्धदर्पदलनजनितविघ्नापसरण[2]पुरस्सरसृष्टिसम्पत्तौ चिरेण वाल्मीकिमुनेः प्रादुर्भावो भविष्यतीति साधारण्याशयेनैव च भगवानेव वृत्तीनां[3] स्रष्टोक्तः न तौ तु मधुकैटभौ, तयोरावेशेन लौकिकेन व्याप्तत्वात्,[4] उद्रिक्ततमतमस्सन्तानितस्वांतत्वेनाविद्यामयत्वात्। विद्यावकाशवशविकासितहृदयकमलपरिमलरूपत्वाच्च, आनन्दसारस्य रसोपयोगिनो व्यापारानावेशस्य भगवत्येव सम्भावनं न तु दैत्ययोः। अतएवाह किमिदं भारतीवृत्तिर्भगवन् वाग्भिरेव प्रवर्तते इति भगवतेत्यनेन ह्युक्तं, भगवानेव हि वृत्तीनां प्रवर्तयिता नटवदनावेशदर्शनात्, न तु मधुकैटभौ (तयोः) लौकिके चैव स्यादिति। द्रुहिणोऽभिहतमना वाक्यमब्रवीदित्यनेन प्रेक्षकत्वं ब्रह्मणः प्रदर्शयन् सामाजिकहृदये विश्रान्तिप्राधान्यं वृत्तीनामाह। तन्निष्ठत्वाद्रसचर्वणाया वाक्यग्रहणेन कार्यद्वारको वृत्तीनां नाट्योपयोग इति सूचयति वाग्भिरेवेति। वाचिकप्राधान्ये भारतीवृत्तिः। भारतीशब्देन हि वागुच्यत इति कार्यहेतोरित्युक्तं तत्कार्यं दर्शयति

---

1 भ - तयोर्नैक न - तयोरनेकरूपाणि 2 च - श्रुत्वा वाक्यानि तर्जतोः, भ - गदतोस्तदा 3 च - किञ्चिदाकम्पित भ - श्रुत्वा त्वाकम्पित ज - किञ्चिदाकुञ्चित 4 न - किमियं 5 न - प्रवर्तिता न - प्रतिष्ठिता भ - एवं प्रवर्तते 6 न - सम्बन्धा

---

1 लब्ध 2 सरणं 3 क - "वृत्तीनां" इति नास्ति 4 व्यस्तत्वात्

[1]कार्यहेतोर्मया ब्रह्मन् भारतीयं विनिर्मिता ॥ ८
[2]वदतां वाक्यभूयिष्ठा भारतीयं भविष्यति ।
[3]तस्मादेतौ निहन्म्यद्येत्युवाच वचनं हरिः ॥ ९
[4]शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तथा[5] भृशम् ।
योधयामासतुर्दैत्यौ [6]युद्धमार्गविशारदौ ॥ १०
भूमिसंयोगसंस्थानैः [7]पदन्यासैर्हरेस्तदा[8] ।
अतिभारोऽभवद् भूमेर्भारती तत्र[9] निर्मिता ॥ ११
वल्गितैः [10]शार्ङ्गधनुष[11]स्तीव्रैर्दीप्ततैररथ ।
[12]सत्त्वाधिकैरसंभ्रान्तैः सात्त्वती तत्र निर्मिता[13] ॥ १२

---

वदतामिति कवीनामिति यावत् । [1]शुद्धैरिति स्वोत्प्रेक्षितवैचित्र्यशून्यैः । अङ्गानां हारान्नयतामिति भृशं युद्धमार्गे विशारदाविति संबन्धः । भूमिसंयोगेन संस्थान उद्घटि(ट्टि ?)तसङ्कुचितादिरूपं येषां, पदन्यासानां न्यस्यमानानां पदानाम् । अतिभार इत्यक्षरसाम्यादपि निर्वचनं दर्शयन् नटव्यापारयोगेऽपि आन्तरविकल्पात्मकाभिः (वाग्भिः)संजुल्पबाहुल्ये भारत्येव वृत्तिरिति दर्शयति । सत्त्वाधिकैरिति मनोव्यापाराधिक्ये सात्त्वतीवृत्तिरित्याह सत्-सत्त्वरूपं विद्यते येषां तत्त्वं तेषामयमिति । सत्त्वं च तत्र परच्छिद्रान्वेषणोपा-

---

1 भ - बाढं नाट्यक्रियाहेतोः 2 भ - भाषतां, ड - भाषतोः 3 ड - अहमेतौ निहन्म्यद्य इत्युक्त्वा (न - अयमेतौ) 4 शून्यैरिति पाठः स्यात् 5 ड - तदा भ - तथैव च 6 न - बाहुयुद्ध 7 ड - भूतिसंस्थानसंयोगैः (न - भूमि), भ - भूसंस्थानैः प्रयोगैश्च 8 ढ - सदा हरेः च - हरेस्ततः 9 न - तेन 10 भ - शार्ङ्गपाणेस्तु 11 न - तीव्रदीप्ततरैः (ट - करैः, ढ - धरैः) 12 भ - सत्त्वाधिकाततभ्रान्तैः 13 ट - च विनिर्मिता

---

1 शून्यैरिति

[1]विचित्रैरङ्गहारैस्तु देवो [2]लीलासमन्वितैः[3]।
बबन्ध [4]यच्छिखापाशं कैशिकी तत्र निर्मिता ॥
संरम्भावेगबहुलैर्नानाचारी[5]समुत्थितैः ।
नियुद्धकरणैश्चित्रै[6]रुत्पन्नारभटी ततः ॥ १४
यां यां देवः समाचष्ट क्रियां वृत्तिषु संस्थिताम्[7] ।

---

यमप्रतितानवैचित्र्योत्प्रेक्षणप्रकाशलाघवात्मकं, अत एवाह विचित्रैरिति । स्वोत्प्रेक्षितेन हि वैचित्र्येण विना कथं युद्धविशारदौ जय्यौ स्याताम्, द्वयोर्होकागमानुसन्धानेन युध्यमानयोः सम्बुद्धिकयोः[1] कस्य जयः कस्य पराजयो वा भवेदिति, शिखापाशं पट्टबन्धम्, तुर्हेतौ शृङ्गारस्थानलक्ष्मीसम्भोगादिस्मरणात्, लीलया विलासेन अन्वयः शिखापाशमयेन आबध्योदासीनो वर्तत इति । चारीभिः प्रायेण निश्शङ्कं प्रवर्तमानौ दैत्यौ सुखं निपात्येते मय्येव परिश्रमापनयनं सम्पद्यत इति । देव इति लोकवद्नाविष्टः । यां यामिति वीप्सया सर्वत्र क्रिया वृत्तिचतुष्टयव्याप्तेत्याह । न हि[2] वाङ्मनश्चेष्टातोऽतिरिक्तकर्मास्ति[3]। न च क्रियाशून्यः कश्चिदप्यंशोऽस्ति । मूर्छामोहमरणादावपि सूक्ष्मप्राणपरिस्पन्दाद्यनुमेयसञ्चितपरिस्पन्दसम्भावना । मृतस्तु ताम्र-पाषाणप्रख्यो न तस्य वृत्तिकथनेन किंचित्स्वपरम्, अन्यस्य शोकादिविभावनां प्रतिपाद्यमानः काव्याङ्गतामेति स च तदानीं करुणादिरसाक्रान्तः काव्ये व्यावर्णनीयो भवति । रसभावपर्यवसितो हि सर्वः कार्य[4]संदर्भः । रसभावाश्च चेतनेष्वेव, तेषु च न[5] व्यापारत्रयशून्यः[6]कश्चिदपि [7]काव्यांशोऽस्ति ।

---

1 ट - विविधैः 2 न - हेलासमुत्थितैः 3 भ - समुद्भवैः 4 प - यः
5 भ - नानाधार 6 न - अङ्गै भ - स्पष्टैर्निर्मिता 7 न - वृत्तिसमुद्भवाम्, भ - बुद्धिसमुत्थिताम्

---

1 संबन्धिकयोः 2 तर्हि 3 चेष्टातोमुककर्षास्ति 4 काव्य 5 तेषुवचन
6 कश्चिन् श्चित्, 7 कामांशो, कालांशो

तां तदर्थानुगैर्जप्यैर्[1]द्रुहिणः प्रत्यपूजयत् ॥ १५
यदा हतौ तावसुरौ हरिणा मधुकैटभौ ।
[2]ततोऽब्रवीत् पद्मयोनिर्नारायणमरिन्दमम् ॥ १६
अहो[3] विचित्रैर्विषमैः स्फुटैः सललितैरपि ।
अङ्गहारैः कृतं देव [4]त्वया दानवनाशनम् ॥ १७
तस्मादयं[5] हि लोकस्य नियुद्धसमयक्रमः[6] ।
सर्वशस्त्रविमोक्षेषु[7] न्यायसंज्ञो भविष्यति ॥ १८

---

तेन पञ्च वृत्तयो द्वे वृत्ती इत्यादयोऽसंविदितभरताभिप्रायपण्डितसहृदयम्मन्यपरिकल्पितसद्भावाः प्रवादा निरस्ता भवन्ति । एतच्च पूर्वमेवास्माभिः प्रदर्शितम् ।

जप्यैरिति भक्त्यावेशमात्रवृत्तिं च दर्शयन् कवेर्मुख्यं रसाधिष्ठत्वमेव रूपं विस्तारणात्मकवर्णनाप्राधान्यं चेति दर्शयति । (विषमैः)[1] शस्त्रागममार्गात्मनागम्यप्रकारैः (अद्भु)तैरपि, तथा स्फुटैरपि सर्वलक्षणप्रसिद्धैरपि चित्रैः स्वार्थोत्प्रेक्षितवैचित्र्यवद्भिः, सललितैरिति लोचनगोचरवर्तित्वेनातिभ्रम्यैरित्यर्थः । अय[2]मिति भवदुपज्ञातवैचित्र्यबृंहित इत्यर्थः । नियुद्धसमयक्रम इति समयग्रहणेन वैचित्र्ययोगेऽपि शस्त्रागमापरित्यागमाह । क्रमः परिक्रमणं क्रमो वा शत्रुविक्रमणयोगे गतागतस्य निभृतं शस्त्रादिशून्यं युद्धं नियुद्धं मल्लयुद्धं, तद्गतमपि यदेतद्रूपं तदुत्प्रेक्ष्यवैचित्र्ययोगात्सर्वेषु शस्त्रास्त्रयुद्धेष्वप्युपयोगि भविष्यति । विमोक्षग्रहणात् क्षेप्तव्यकुन्तचक्रादिविषयत्वमेव केचिदाहुः ।

---

1 ड - वाक्यैः 2 ड - उक्तवांस्तु तदा ब्रह्मा 3 ड - चित्रैः सललितैः स्फुटैः सुविशदैः न - विचित्रैर्ललितैः भ - अङ्गैः विचित्रालिलितैः 4 भ - दानवानां विनाशनम् 5 ड - सर्वलोके 6 भ - समयः शुभः 7 भ - विमोक्षश्च.

---

1 संविदसौस्त्रागम 2 अहं.

[1]न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ।
यस्माद्युद्धानि वर्तन्ते[2] तस्मान्न्यायाः प्रकीर्तिताः[3] ॥
[4][चारीषु च समुत्पन्नो नानाचारीसमाश्रयः ।
न्यायसंज्ञः कृतो ह्येष द्रुहिणेन महात्मना ॥] २०
[5][ततो वेदेषु निक्षिप्ता द्रुहिणेन महात्मना ।
पुनरिष्वस्त्रजाते च नानाचारीसमाकुले[6] ॥ २१
पुनर्नाट्यप्रयोगेषु[7] नानाभावसमन्विताः[8] ।
वृत्तिसंज्ञाः कृता ह्येताः काव्यबन्धसमाश्रयाः[9] ॥]

---

तच्चासत्, क्षिपेः पातमात्रपर्यवसायिनः खड्गादियुद्धेष्वप्यप्रतिहतार्थयुक्तत्वात् । न्यायशब्दनिर्वचनमाङ्गिकाभिनयनिरूपणायां कृतं स्मारयति न्यायाश्रितैरिति एतच्च तत्रैव व्याख्यातम् ।*

एवं वृत्तीनामुत्पत्तिर्व्याख्याता । आसामेव नाट्यं प्रत्यवतारणं कर्तुमाह चरितैर्यस्येति भगवद्भिश्चरितैर्गर्भाधेयभूतैः उपलक्षितं यत् पूर्वं ब्रह्मणा

---

1 भ - न्यायकृतैः, न - न्यायात् समुत्थितैश्चित्रैरङ्गहारैर्विभूषितम् 2 च - अवर्तन्त, ट - युद्धकृतं त्वेभिः, ढ - युद्धं कृतं ताभ्यां, न - युद्धं कृतं ह्येतत् 3 ड - न्यायः प्रकीर्तितः 4 भ - संज्ञितादर्श एव वर्ततेऽयं श्लोकः 5 चभमयेषु श्लोकद्वयं न विद्यते न - ततो देवेषु 6 ज - समाश्रयं 7 प - प्रयोगे च 8 प - समाश्रया, ढ - रसाश्रया 9 ड - संज्ञा...कृता ह्येषा......समाश्रया.

---

* अध्या - १० - ७५ तत्तत्क्रियोचितानामङ्गानां युगपदेव प्रचारो नृत्तमातृका भवति । द्वे तिस्रश्चतस्रो वा मातृका अत्रुटितत्वेनैकक्रियावत्कृताः करणं भवेयुः, करणानामत्रुटितप्रयोगोऽङ्गहारः । तथैव युद्धादिष्वपि नृत्तमातृकास्थाने स्थानकादिक्रियाविशेषो न्यायसंज्ञः स्यात् । न्यायशब्देनाङ्गोचितक्रियया परभञ्जनात्मरक्षणाख्याविधिना च अभिद्रवतोर्योधयोः मिथःक्रियाविशेषो न्याय इति संज्ञितः ।

[1]चरितैर्यस्य देवस्य जप्यं[2] यद्यादृशं कृतम् ।
ऋषिभिस्तादृशी वृत्तिः कृता पाठ्यादिसंयुता[3] ॥ २३
नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिका ।
मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया ॥ २४
[4]ऋग्वेदाद्भारती क्षिप्ता[5] यजुर्वेदाच्च[6] सात्त्वती ।
[7]कैशिकी सामवेदाच्च शेषा चाथर्वणादपि[8] ॥ २५

---

जप्यं स्तोत्रकाव्यरूपं कृतं, तादृशं भावादिचेष्टाप्रधानं, तादृश्येव वृत्तिः । ऋषिभिः ब्रह्मपुत्रैः पाठ्यादिभिः सम्यग्युक्ता[1] कृता अनुसृता । तद्यथा पाठ्यप्रधाना भारती, अभिनयप्रधाना सात्त्वती, अनुभावाद्यावेश[स]मय-रसप्रधानारभटी, गीतवाद्योपरञ्जकप्रधाना कैशिकीति । अत एव वक्ष्यति ऋग्वेदाद्भारतीत्यादि नाट्यवेदोत्पत्तौ प्रथमाध्याये व्याख्याता या सा । द्रुहिणाज्ञा कैशिकीमपि योजय (१-४२) इत्यादिका या तया । काव्यस्य क्रिया काव्यरूपतापादनं, तदेव हेतुः, ततः । प्रकर्षेण क्षिप्ता येनाभिनेयानभिनेय-काव्यवैलक्षण्यमित्यर्थः ।

ननु भगवता वासुदेवेनाप्यंशावताररूपत्वात्संभाव्य* ..................... व्ययोदयमूर्तिना कुत इमा वृत्तय आनीता इत्याशङ्क्याह ऋग्वेदादित्यादि । छन्दोमयश्च परमेश्वरो नान्यत[2] इति भावः ।

---

1 न - वल्गितैस्तस्य 2 ड - द्रव्यं, भ - दिव्यं 3 च - पाठ्याभिसंयुता प - पाठ्याङ्गसम्भवा 4 प - ऋग्वेदे...यजुर्वेदे च...सामवेदे च...अथर्वण्यारभट्यपि । 5 च - वृत्तिः 6 च - तु 7 ढ - अथर्वणस्त्वारभटी सामवेदाच्च कैशिकी 8 म - अथर्वादारभट्यपि च - तथा

---

1 संयुक्ता 2 नाट्यतः

* 'रूपत्वसंभाविताः काव्यक्रियोदये मुनिना' इति स्यात्

या वाक्प्रधाना [1]पुरुषप्रयोज्या
स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः[2] ॥ २६
भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः ।

अथासां परस्परसङ्कीर्णतया लक्ष्ये (बहुरूपतां) वहन्तीनां यत्र यत्प्राधान्येनान्यतमरूपावभासनं तत्प्रदर्शयितुमुत्तरो ग्रन्थः । (वाङ्मनःकायचेष्टांशेषु) न ह्येकोऽपि कश्चिच्चेष्टांशोऽस्ति । कायचेष्टा अपि हि मानसीभिः सूक्ष्माभिश्च वाचिकीभिश्चेष्टाभिर्व्याप्यन्त एव । “न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते” (वाक्यपदीयं १-१२४) इति न्यायात्, मानस्यपि वाचिक्यपि[1] चेष्टा अवश्यं सूक्ष्मं काल(य?)परिस्पन्दमन्दप्राणव्यापाररूपं नाभि(ति?)वर्तते । तदुक्तम्—

अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः[2] ।
तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुडयवत् ॥ (सङ्ग्रहः*)

[3]न च रसोपयोगिलालित्यभागशून्यः कोऽपि नाट्ये परिस्पन्द इत्यन्योन्यं संवलिता वृत्तयः केवलं क्वचित्किंचिदधिकमिति प्राधान्येन व्यपदेशः परिवर्तते ।

तत्र भारत्याः प्राधान्यं दर्शयति या वाक्प्रधानेति । स्त्रीवर्जितेति कैशिकीप्राधान्यावकाशं गमयति । संस्कृतेति वचसा प्राकृतपाठ्यलालित्यात् कैशिकीमवश्यमाक्षिपेदिति सूचयति । भरतैरिति नटैः स्वतो वंशकरं नामधेयं येषां (तैः), भरतसंतानत्वात्तद्धिते भरताः । भेदा इति [4]अस्यामित्यर्थोऽत्र न तु प्रकाराः, त्रैलोक्यव्यापिन्या हि भारत्याः कश्चिदंशः प्ररोचनारूपः, एवमामुखस्वभाव इत्यादि । अत एवाह अङ्गत्वमिति अंशत्वं प्राप्ता इत्यर्थः,

1 भ - नृवर 2 ट - तां भारतीं वृत्तिमुदाहरन्ति

1 वाचिक्येवापि च, वाचिक्येनापि 2 वेगिनम् । 3 नव 4 आसां
* अयं श्लोको भगवता भर्तृहरिणा वाक्यपदीये स्ववृत्तौ (१-१२७) उदाहृतः, व्याडिसंग्रहात् स्यात् ।

प्ररोचनामुखं चैव वीथी प्रहसनं तथा ॥ २७
जयाभ्युदयिनी चैव मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना ॥ २८
[1][उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥] २९
नटी विदूषको वापि[2] पारिपार्श्विक एव वा[3] ।
सूत्रधारेण सहिताः संलापं [4]यत्तु कुर्वते ॥ ३०
चित्रैर्वाक्यैः स्वकार्योत्थै[5] वीथ्यङ्गैरन्यथापि वा[6] ।

---

अन्यथा यदि रूपकस्याङ्गत्वं प्राप्ता इत्युच्यते तदा वीथी प्रहसनं च रूपकभेदः, न तु रूपकस्याङ्गम् । तथा नाट्यस्याङ्गत्वं प्राप्तं(प्राप्ता?) नाट्यमिति समुदायः । यदि वा ऐकैकमपि काव्यं दशरूपमित्युक्तं प्राक् । पूर्वरङ्ग इति तद्विषये, प्ररोचना पूर्वमुक्ता तत्र च कृते या प्ररोचना सा भारत्यंश इत्यर्थः ।

नटीत्यादिना आमुखं लक्षयति । वा शब्देन व्यस्तानां नटीप्रभृतीनां सूत्रधारेण सङ्घातमाह । अपिशब्देनात्मना समस्तानां, द्वितीयो वा शब्दः समस्तव्यस्ततां विकल्पयति । एवशब्दः सूत्रधारस्यावश्यंभावं दर्शयति । चित्रैरिति भाविरूपकार्थानुकूलविषयानुसारिभिः, स्वं कार्यं नटव्यापारं, वीथ्यङ्गैरिति श्लिष्टवक्रोक्तिप्रत्युक्तिप्रायैरित्यर्थः, यथा "पीताम्बरगुरुशक्त्या[1] हरत्युषां प्रसभमनिरुद्धः"* इत्यादि । अन्यथेति स्पष्टोक्तिप्रत्यु-

---

1 अयं द - मातृकायामेव वर्तते 2 द - चापि 3 द - च 4 द - यत्र
5 न - काव्योत्थैः द - वाक्यैश्च कार्योत्थैः 6 न - च

---

1 शर्मा * प्रतिमानिरुद्धे·

आमुखं तत्तु विज्ञेयं बुधैः[1]प्रस्तावनापि वा ॥ ३१

[2][लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ।
आमुखाङ्गान्यतो वक्ष्ये यथावदनुपूर्वशः] ३२

उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवृत्तकावलगिते पञ्चाङ्गान्यामुखस्य तु[3] ॥ ३३

---

क्तिभिः, यथा नागानन्दे "नाटयितव्ये किमित्यकारणमेव रुद्यते" इत्यादि । आमुखमिति मुखसन्धेर्निवर्तते यतः, आङ्मर्यादायाम्, यदि वाऽऽमुखं प्रारम्भमीषन्मुखं वा प्रस्ताव्यतेऽनयेति(प्रस्तावना) बाहुल्केन तच्छीलसंज्ञयोरिति.................निकारो न भवति । तत्र कदाचित्कार्याभिमुखं नीयते पूर्वरङ्गविधिः, तदभिमुखं वा कार्यारम्भः तत्रीयते, सा द्विधेति (५ - १८०) पूर्वरङ्गाध्याये दर्शितमस्माभिः । एवं च यदा स्थापकोऽपि सूत्रधारतुल्यगुणाकारो रामादिवदेव प्रयुज्यते तदेदं कविकृतमामुखं भवति ।

अन्ये त्वाहुः—पूर्वरङ्गाध्यायेऽपि या प्रस्तावनोक्ता सापि भारतीभेद एवेति, किं द्वैविध्याभिधानप्रयासेन । यत्तु "क्रुद्धो भीम इत एवाभिवर्तते तन्न युक्तमस्य पुरतोऽवस्थातुं" इत्यादि, तत्तदीयसत्त्वावेशादेवास्य प्रकाशनाय सामाजिकानां साक्षात्कारकल्पाध्यवसायसम्पत्त्यर्थं सूत्रधारेणोच्यते, शिशुसन्त्रासाय कयाचिदाकृत्या कश्चिदत्रस्यन्नपि त्राससंरम्भगर्भमाह "अयमागतो राक्षसः" इति, यथोक्तं भावाध्याये (७) "सत्त्वशुद्धा मूर्तव्याः" * इति, एतच्च तत्रैव निर्णीतम् । तस्यामुखस्य पञ्चाङ्गानि भेदा इत्यर्थः ।

---

1 न - तज्ज्ञैः 2 भ - मातृकायामयं न वर्तते, श्लोकार्धमेव टनडमातृकासु न विद्यते 3 च - आमुखाङ्गानि पञ्च वै

---

* सप्तमेऽध्याये १४७ वचनभागे "सत्त्वविशुद्धाः कार्या यथास्वरूपा भवन्ति" इति भागस्य व्याख्यानावसरे । तद्व्याख्याभागो नष्टः ।

उद्घात्यकावलगितलक्षणं कथितं मया[1]।
शेषाणां लक्षणं विप्रा[2] व्याख्यास्याम्यनुपूर्वशः॥
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा।
गृहीत्वा प्रविशेत्पात्रं[3] कथोद्घातः स कीर्तितः[4]॥३५

ननु एवं सति पञ्चानां युगपत्प्रयोगे प्रस्तावना प्रयुक्ता स्यात्, न चैतन्मुनेरभिमतम्। तथा हि वक्ष्यति—

एषामन्यतमं श्लिष्टं योजयित्वार्थयुक्तिभिः।
पात्रग्रन्थैरसम्बाधं प्रकुर्यादामुखं ततः॥ (२०-३७)

इत्युद्देशे। यद्यपि पश्चादवलगितमुक्तं तथा तयोस्तुल्यं, लक्षणस्य पूर्वोक्तत्वमित्याशयेनाह उद्घात्यकावलगितयोर्लक्षणं कथितमिति वीथ्यङ्गव्याख्याने, यद्यपि च प्रस्तावनायामन्यान्यपि वीथ्यङ्गानि भवन्ति, आमुखसामान्यलक्षणेऽप्युक्तं वीथ्यङ्गैरिति, तथाप्युद्घात्यकमवलगितं च भाविकाव्यार्थप्रस्तावनेति बालरङ्गं(प्रस्तावने प्रबलमङ्गं?), तथा तयोर्लक्षणम्—

पदानि त्वगतार्थानि ये नराः पुनरादरात्।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते॥

यत्रान्यस्मिन् समावेश्य कार्यमन्यत्प्रसाध्यते।
तच्चावलगितं॥ इति (१८-११६)।

वाक्यमिति, यथा—(रत्नावल्यां) "द्वीपादन्यस्मात्" इति। वाक्यार्थं यथा प्रतिमानिरुद्धे—"पीताम्बरगुरुशक्त्या[1] हरत्युषां" इति। केवलमत्र वीथ्यङ्गनिबद्धम्। कथा काव्यर्थरूपा, ऊर्ध्वमेव हन्यते गम्यते तत्रेति कथोद्घातः।

---

1 भ - लगिते वीथ्यां संपरिभाषिते (म - कीर्तिते) द - लगिते वीथ्यां चैव प्रकीर्तिते 2 न - अहं 3 भ - यत्र 4 भ - प्रकीर्तितः

---

1 शर्मा

प्रयोगे तु प्रयोगं तु[1] सूत्रधारः प्रयोजयेत्[2] ।
ततश्च प्रविशेत्पात्रं प्रयोगातिशयो हि सः ॥ ३६
[3]कालप्रवृत्तिमाश्रित्य वर्णना या प्रयुज्यते[4] ।
तदाश्रयाच्च[5] पात्रस्य प्रवेशस्तत्प्रवृत्तकम् ॥ ३७
[6]एषामन्यतमं श्लिष्टं[7] योजयित्वार्थयुक्तिभिः[8] ।
[9][तस्मादङ्गद्वयस्यापि सम्भवो न निवार्यते ॥] ३८

---

प्रयोग इति प्रस्तावनात्मके, प्रयोगमिति नाट्यात्मकं भावितम् । एकस्तु-शब्दो भेदान्तरेभ्यो व्यतिरेकमाह, द्वितीयोऽवधारणे । सूत्रधार एव यत्र प्रयोगे प्रयोगं समुद्गककवाटयुगलवद्योजयति स प्रयोगद्वयश्लेषणात्प्रयोगातिशयः । यथा विक्रमोर्वश्याम्—अथ कुररीणामिवाकाशे शब्दः श्रूयते । आः ज्ञातम्—

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमुपनृत्य निवर्तमाना ।
बन्दीकृता विबुधवैरिभिरर्धमार्गे
क्रन्दत्यतः करुणमप्सरसां गणोऽयम् ॥ इति ।

यदा[1] कालप्रवृत्तिं कांचिदवलम्ब्य यथा सूत्रधारेण किञ्चिद्वस्तु वर्ण्यते तदा-[प्र]श्रयेण च पात्रस्य प्रवेशः तत्कालप्रवृत्त्या स्वार्थोक्तत्वात् प्रवृत्तकम्, यथा "अस्यां शरदि—

---

1 न - यत् भ - वा 2 प - सूत्रभृद्यत्र योजयेत् 3 न - कालं प्रवृत्तं, भ - प्रवृत्तकालं, ट - प्रवृत्तं कार्यं 4 ढ - यत्र चैवोपवर्णयेत्, न - सूत्रभृद्यत्र वर्णयेत् 5 ढ - तदाश्रयस्य, म - तदाश्रयश्च 6 भ - कालमेषामन्यतमं 7 न - द्वेधा य - वेधाः 8 न - युक्तितः 9 इदं श्लोकार्धं ढ - मातृकायामेव

---

1 यथा

[1]पात्रग्रन्थैरसंबाधं प्रकुर्यादामुखं ततः[2]।
एवमेतद्बुधैर्ज्ञेयमामुखं विविधाश्रयम्॥ ३९

[3]लक्षणं पूर्वमुक्तं तु वीथ्याः[4] प्रहसनस्य च॥

[5][इत्यष्टार्धविकल्पा वृत्तिरियं भारती मयाभिहिता[6]।
[7]सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि॥]

[8]या [9]सात्त्वतेनेह गुणेन युक्ता
[10]न्यायेन वृत्तेन समन्विता च[11]।
[12]हर्षोत्कटा [13]संहृतशोकभावा
सा सात्त्वती नाम भवेत्तु[14] वृत्तिः॥ ४१

---

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।" (वेणी १)

इत्यादि पात्रग्रन्थैरसम्बाधमिति यत्र न भूयांसि पात्राणि अल्पपात्रेऽपि ग्रन्थबहुलत्वं तथारूपमामुखं कुर्यात्। विविधाश्रयमिति बहुभेदमित्यर्थः। पूर्वमुक्तमिति दशरूपकाध्याये।

यद्यपि अभेदव्यतिरेकेणापि भारती(तो?) (न्यायो) न दृश्यते तथापि न्यायेनेति तत्प्रकारचतुष्कं निरूपितम् (१० - ७२)। सात्त्वतो गुणः मानसो व्यापारः। सत्सत्त्वं प्रकाशः तद्विद्यते यत्र तत्सत्त्वं मनः, तस्मिन् भवः।

---

1 न - अल्पग्रन्थैः 2 च - बुधः 3 इदं श्लोकार्धं केषुचिदादर्शेषु पूर्वमेव पठितम् 4 भमातृकायां वीथ्यङ्गान्यत्रैव पठितानि न तु वीथीलक्षणावसरे 5 अयं श्लोको जादिमान्तेषु दृश्यते 6 भ - प्रोक्ता 7 भ - सात्त्वत्या अपि लक्षणमतः परं संप्रवक्ष्यामि 8 चमातृकायमयमपि न विद्यते 9 भ - सात्त्विकेन 10 न - त्यागेन शौर्येण भ - त्यागेन वृत्तेन च सन्धिता या 11 न - या 12 भ - हर्षोत्तरा 13 द - संभृत 14 प - सत्त्ववतीह

वागङ्गाभिनयवती सत्त्वोत्थान[1]वचनप्रकरणेषु ।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः[2] ॥ ४२
वीराद्भुतरौद्ररसा[3] निरस्तशृङ्गारकरुणनिर्वेदा[4] ।
उद्धतपुरुषप्राया परस्पराधर्षणकृता च ॥ ४३
[5]उत्थापकश्च परिवर्तकश्च सल्लापकश्च संघात्यः ।

---

सत्त्वोत्थानस्य सत्त्वाधारस्य, वचनं येषु प्रकरणेषु काव्यखण्डेषु, तेषु वागङ्गाभिनययुक्ता सती, सत्त्वस्य सात्त्विकाभिनयस्याधिकारे आधिक्यक्रियया सात्त्वतीवृत्तिर्युक्ता भवतीति सम्बन्धः ।

शृङ्गारे विषयानिमग्नं मनः, करुणे कान्दिशीकं, निर्वेदे मूढमिति तद्व्यापारो भवन्नपि क्रोधविस्मयोत्साहेष्विव न सातिशयं परिस्फुरतीति दर्शयति वीराद्भुतरौद्ररसेति । आधर्षणं वाचा न्यक्कारः । उत्थापयति यो मानसः परिस्पन्दः स तावदुत्थापकः तत्सूचको [1]व्यापारक्रम उपचारः, तथोक्तः । तथा वेणीसंहारे भीमः—भो भोः शृण्वन्तु भवन्तः—

स्पृष्टा येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां कुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ इति ।

परिवर्तको यथा तत्रैव भीमः—सहदेव गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामि ।

सहदेवः—आर्य, नेदमायुधागारम्, पाञ्चाल्याश्चतुश्शालमिदम् ।

भीमः—किं नामेदं (इत्यादि यावत्) अथवा मन्त्रयितव्यैव मया पाञ्चाली । इति

---

1 भ - विविधवाक्यकरणेषु च - वचनभ्रु 2 न - नाम 3 ज - प्रायरसा 4 भ - विज्ञेया 5 भ - उत्थापनं च

---

1 व्याप्यक्रमः

चत्वारोऽस्या भेदा विज्ञेया नाट्यतत्त्वज्ञैः ॥ ४४

अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् ।
इति [1]संघर्षसमुत्थस्तज्ज्ञैरुत्थापको ज्ञेयः ॥ ४५

उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात्[2] ।
अन्यानर्थान् भजते स चापि परिवर्तको ज्ञेयः ॥

[[3]निर्दिष्टवस्तुविषयः प्रपञ्चबद्धस्त्रिहास्यसंयुक्तः ।
[4]संघर्षविशेषकृतस्त्रिविधः परिवर्तको ज्ञेयः]॥ ४७

[5]साधर्षजो निराधर्षजोऽपि वा [6]रागवचनसंयुक्तः ।
[7]साधिक्षेपालापो ज्ञेयः सल्लापकः सोऽपि ॥ ४८

---

अस्त्रागारप्रवेशपरित्यागेन पाञ्चालीदर्शनात्मककार्यान्तरसम्पादको मानसो व्यापारः परिवर्तयति कार्यमिति, परिवर्तकवचनं तूपचारारूढम्[1] । एवमुत्तरत्रापि ।

सह (आ)धर्षणेन यद्वाक्यं (साधर्ष) तद्विरहितं निराधर्षं, तेन खलीकारकाद्वचनादन्यतोऽपि वा सत्, अनन्तरमाधिक्षेपं वचनमभिभावकं[2] मानसं कर्म तत्सल्लापकशब्दवाच्यम् । यथा—

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा । (वेणी ३-११)

इत्यत्र सत्यवाचेति ।

---

1 च - संघर्षसमाश्रयमुत्थितं भ - संहरणसमुत्थं तज्ज्ञैरुत्थापनं ज्ञेयम् 2 भ - संयोगात् 3 अयं श्लोको य मढादिष्वेव वर्तते 4 ढ - संहर्षे 5 ढ - सामर्षजो निरमर्षजोऽपि वा विविधवचन 6 च - विविध 7 ढ -साविच्छेदालापः

---

1 रूढः 2 आविर्भाविकं

[[1]धर्माधर्मसमुत्थं यत्र भवेद्रागदोषसंयुक्तम्।
साधिक्षेपं च वचो[2] ज्ञेयः संलापको नाम]॥ ४९
[3]मन्त्रार्थ[4]वाक्यशक्त्या दैववशादात्मदोषयोगाद्वा[5]।
संघातभेदजननस्तज्ज्ञैः संघात्यको[6] ज्ञेयः॥ ५०
[[7]बहुकपटसंश्रयाणां परोपघाताशयप्रयुक्तानाम्।
कूटानां संघातो [8]विज्ञेयः कूटसंघात्य[9]ः॥] ५१
इत्यष्टार्धविकल्पा वृत्तिरियं सात्त्वती मयाभिहिता।
कैशिक्यास्त्वथ[10] लक्षणमतःपरं संप्रवक्ष्यामि॥ ५२

---

(सङ्घातभेदजनन इति) सङ्घातस्य भेदं जनयति यो युधि स सङ्घात्यकः, सम्यक्घात्यः शत्रुवर्गो येन, सङ्घातकाविषयाद्वा सङ्घात्यकः, सङ्घातभेदश्च परेण सामाद्युपायबलेन वा क्रियते। यथा भीमो युधिष्ठिरेण साम्ना भेदितः, अतः शिखण्डिनं पुरस्कृत्य योद्धव्यश्च। दैवात्संपद्यते, यथा द्रोणेनोक्तं सुते हते शस्त्रं त्यक्ष्यामीति। आत्मदोषे वा स्वकटक[1]लक्षणेन, यथा कर्णेन सह कलहायमानोऽश्वत्थामा शस्त्रत्यागं करोतीति। अत्र च सत्त्वाधिक्यमपराध्यति "कथं नामाहमेवंभूत" इति (वेण्यां तृतीयेऽङ्केऽन्ते)।

अथेत्यनन्तरम्। अतःपरमित्येतेभ्यो लक्षणेभ्यः पृथग्भूतमित्यर्थः। श्लक्ष्णः सुकुमारः श्लिष्यति हृदय इति कृत्वा। नैपथ्यविशेषो वस्त्रमाल्यादिः

---

1 अयं चनादिषु न विद्यते 2 द - क्षेपं वचनं 3 भ - यत्र 4 द - कार्य
5 द - योगदोषाद्वा 6 न - संघातकः 7 अयं श्लोकः चादिमातृकासु न दृश्यते
8 द - ज्ञेयः स तु 9 द - संघातः 10 च - इह

---

1 'कपट' स्यात्

या श्लक्ष्णनैपथ्यविशेषचित्रा[1]
स्त्रीसंयुता या[2] बहुनृत्तगीता।
कामोपभोगप्रभवोपचारा
तां कैशिकीं वृत्तिमुदाहरन्ति[3]॥ ५३

[[4]बहुवाद्य[5]नृत्तगीता शृङ्गाराभिनयचित्रनैपथ्या।
माल्यालङ्कारयुता प्रशस्तवेषा च कान्ता च॥ ५४
चित्र[6]पदवाक्यबन्धैरलङ्कृता हसितरुदितरोषाद्यैः[7]।
स्त्रीपुरुषकामयुक्ता[8] विज्ञेया कैशिकीवृत्तिः]॥ ५५

[9]नर्म च नर्मस्फुञ्जो[10] नर्मस्फोटोऽथ नर्मगर्भश्च।
कैशिक्याश्चत्वारो भेदा ह्येते [11]समाख्याताः॥ ५६

[12]आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम्।

---

तेन चित्रा, बहु विपुलं गीतं नृत्तं च यस्याम्, कामोपभोगो रतिः ततः प्रभवो यः स शृङ्गारस्तद्बहुल उपचारो व्यवहारो यस्यां, सा तथोक्ता। (कैशिक्याश्चत्वार्यङ्गानि नर्माख्यं नर्मोपपदानि च तत्र नर्मणः शृङ्गारस्थापकत्वं) हासप्रधा-

---

1 द - विचित्रवेषा 2 ट - स्त्रीपुंसयुक्ता 3 भ - नाम वदन्ति वृत्तिम्
4 श्लोकद्वयं चटडढादिषु न दृश्यते 5 ट - काव्य 6 न - पट 7 भ - रोषयुता ज - घोषाद्यैः 8 ज - कालयुक्ता 9 न - नर्मो 10 न - स्फुटजो द - स्फञ्जो भ - स्पन्दो 11 भ - मया 12 द - स्थापितशृङ्गाररसं

हास्य[1]प्रवचनबहुलं नर्म त्रिविधं विजानीयात्॥ ५७
ईर्ष्याक्रोधप्रायं सोपालम्भकरणानुविद्धं च[2]।
आत्मोपक्षेपकृतं सविप्रलम्भं स्मृतं नर्म॥ ५८
नवसङ्गमसम्भोगो रति[3]समुदयवेषवाक्यसंयुक्तः।
ज्ञेयो नर्मस्फञ्जो[4] ह्यवसानभयात्मकश्चैव[5]॥ ५९

---

नता च तदेति सामान्यलक्षणम्। तत्र हास ईर्ष्या वा सूचयितुं परं वोपालब्धुं परहृदयं वाक्षेप्तुमिति त्रिधा (आत्मेति) आत्मनः परकीयस्य चित्तस्योपक्षेप आत्मसमीपकरणम्। उदाहरणम्—वासवदत्ता (फलकमुद्दिश्य सहासं) *एसा वि अवरा तस्स समीवे जाआ लिहिदा। एदं वि अय्यवसन्तअस्स विण्णाणम्।

द्वितीयस्योदाहरणं—"शीतांशुर्मुख" मित्यादि श्रुतवती वासवदत्ता यदा राज्ञोच्यते, "प्रिये वासवदत्ते" इति तद्वचसोपालम्भं सा सहासमाह—"अय्यउत्त मा एव्वं भण" इत्यादि।

तृतीयस्य सुसङ्गता (विहस्य) "जादिसो तुए कामदेवो आलिहिदो मए वि तारिसी रई आलिहिदा। ता असंभाविणी, कहेहि दाव वुत्तंतं।"

एवं त्रिभेदं नर्माख्यमाख्याय नर्मस्फुञ्जं प्रकाशयितुमाह नवसङ्गमेति नवसङ्गममात्र एव सम्भोगो यत्र। कथं तस्य सङ्गमस्य सम्भोगत्वमित्याह रतिसमुदयेति। रतेरन्योन्यास्थाबन्धरूपायाः समुदयः स्फुटत्वं, यस्तादृशेन वेषेण वाक्येन वा योगो यत्र। अवसाने च भयं पूर्वनायिकाकृतम्। यथा रत्नावल्यामुदयनस्य सागरिकायाश्च नर्मणः स्फुञ्जो विघ्न इत्यर्थः।

---

1 ढ - प्रपञ्च 2 भ - लम्भं च करुणविद्धं च च - वचनाविरुद्धं च (वचनानुविद्धं च?) 3 भ - समुदयवेश, ड - समुदयवाक्यवेष 4 न - स्फुटजो भ - स्पन्दो ढ - स्फञ्जो 5 भ - भयानकश्चैव

* एषाप्यपरा तस्य समीपे जाया लिखिता। एतदप्यार्यवसन्तकस्य विज्ञानम्।

विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषैः[1] ।
[2]असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ॥ ६०

विज्ञानरूप[3]शोभाधनादिभिर्नायको गुणैर्यत्र ।
[4]प्रच्छन्नं व्यवहरते कार्यवशान्नर्मगर्भोऽसौ[5] ॥ ६१

[6][[7]पूर्वस्थितौ विपद्येत नायको यत्र चापरस्तिष्ठेत्[8] ।
तमपीह नर्मगर्भं विद्यान् नाट्यप्रयोगेषु] ॥ ६२

इत्यष्टार्धविकल्पा वृत्तिरियं कैशिकी मयाभिहिता[9] ।
अत ऊर्ध्वमुद्धतरसामारभटीं संप्रवक्ष्यामि ॥ ६३

---

विविधा भावाः भयहासहर्षत्रासरोषाद्याः लवैर्लवैरित्यत एव भयादीनामंशेन भावात् स्थायित्वानुपगमात् भयानकहास्यरौद्रादिरसतापत्तिर्न सम्भवति । शृङ्गारस्तु पूर्व एव "जस्स किदे तुमं एत्थ आअदा से एत्थ एव्व चिठ्ठदि" इति सुसङ्गतोक्तौ* हासलवः, न हास्यो रसः ।

"सहि कस्सकिदे अहं एत्थ आअदा" इत्यत्र सागरिकोक्तौ (रौद्र) लवो न तु रौद्रः । एवमन्यत्र । नर्मण इति तदुपलक्षितस्य शृङ्गारस्य स्फोटो वैचित्र्यं चमत्कारोल्लासकृतस्फुटत्वं यत्रेति ।

शृङ्गारोपयोगिभिर्विज्ञानाद्यैः प्रच्छन्नं यत्र नायक आस्ते नवसमागमसिद्ध्ये स नर्मगर्भः । नर्मोपयोगिनो विज्ञानाद्या गर्भीकृता इव प्रच्छन्नतया यत्रेति, यथा प्रच्छन्नरूपो नायकः सङ्केतस्थानं गच्छति ।

---

1 न - विशेषः 2 ब - असमस्त 3 च - सम्भावनादिभिः भ - ससम्भावितादिभिः 4 च - प्रच्छन्नैः 5 भ - गर्भः सः 6 अयं च मातृकायां न वर्तते 7 भ - पूर्वस्थितोऽभिभूतो यत्र भवेन्नायको विषण्णः सः । तमपि .....प्रयोगज्ञः ॥ ड - पूर्वस्थितो विपद्येत यत्र चान्यतमनायकस्तिष्ठेत् । तमपीह नर्मगर्भं वदन्ति नाट्यप्रयोगेऽस्मिन् ॥ 8 ट - चापरे तिष्ठेत् 9 ट - प्रोक्ता * रत्नावल्याम्

[1]आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता[2] ।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया[3] ॥ ६४

[4][पुस्तावपात[5]प्लुतलङ्घितानि
च्छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च यत्र नित्यं
तां तादृशीमारभटीं वदन्ति ॥ ६५

[6]षाड्गुण्यसमारब्धा हठातिसन्धानविद्रवोपेता ।
लाभालाभार्थकृता विज्ञेया वृत्तिरारभटी] ॥ ६६

संक्षिप्तकावपातौ वस्तूत्थापनमथापि[7] संफेटः ।
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि ॥ ६७

[8]अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः ।

(उद्धतेति) दीप्तरसा रौद्रादयः उद्धताः । (आरभटेति) आरभटानां ये गुणाः क्रोधावेगाद्यास्ते प्रायेण बाहुल्येन यत्र, बहुभिः कपटैः यद्वञ्चनं तेनोपेता । कपटत्रयं च समवकारलक्षणे (१८ - ७१) व्याख्यातम् । यत एवास्यां कपटयोगोऽत एव दम्भप्राधान्यमसत्यवचनसम्भवश्च । (संक्षिप्तकेति) संज्ञया क्षिप्तानि वस्तूनि विषयोऽस्येति संक्षिप्तकः। तानि वस्तूनि दर्शयति (अन्वर्थेति)। अर्थेन प्रयोजनेनानुगताः शिल्पयुक्ताः कुशलशिल्पिविरचिताः, अर्था यत्रेति । अत्रैव दिशं दर्शयति (बहुपुस्तेति) । बहु विपुलं, पुस्तस्योत्थानं प्रकटत्वं

1 भ - आरभटी 2 भ - धर्षणोपेता 3 भ - सा ज्ञेया 4 श्लोकद्वयं प्रक्षिप्तमिति न व्याख्यातम् । तयोः प्रथमः श्लोको भरतस्येति सुप्रसिद्धमुदाहृतः 5 भ - क्रम 6 ड - या षड्गुणसंरब्धा परातिसन्धान ज - या षाड्गुण्यारब्धा पराति. अयं श्लोको भमातृकायामपि न वर्तते 7 भ - अपीह 8 भ - मातृकायां संक्षिप्तकेति स्त्रीलिङ्गशब्दप्रयोगात् ......“युक्ता,......नेपथ्या......विषया......ज्ञेया” इति पाठः स्वीकृतः

संक्षिप्तवस्तुविषयो ज्ञेयः संक्षिप्तको नाम ॥ ६८

भयहर्षसमुत्थानं [1]विद्रवविनिपातसंभ्रमाचरणम् ।
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानीयात् ॥ ६९

[2]सर्वरससमासकृतं सविद्रवाविद्रवाश्रयं वापि ।
[3]नाट्यं विभाव्यते यत्तद्वस्तूत्थापनं ज्ञेयम् ॥ ७०

---

विचित्रं च नेपथ्यं खड्गचर्मवर्मादि यत्र पुस्तयोगे । यथा मायाशिरोनिक्षेपे रामाभ्युदये चित्रं नेपथ्यम्, यथा (वा)श्वत्थाम्नः (वेण्याम्) ।

भयातिशयेन हर्षातिशयेन च क्षिप्रमेव प्रवेशनिर्गमौ यत्र पात्राणां, तथा, विद्रवो वाक्यादिकृतो विनिपातोऽवस्कन्दः ताभ्यां कृतं सम्भ्रमाचरणं आवेगप्रधाना चेष्टा यत्र, सोऽवपातः, अवपतन्त्यस्मिन् पात्राणीति । यथा कृत्यारावणे षष्ठेऽङ्के "प्रविश्य खड्गहस्तः सप्रहारः पुरुष" इत्यतः प्रभृति यावदसौ निष्क्रान्तः ।

(वस्तूत्थापनमिति) वस्तूनां बहूना(मर्थाना)मुत्थापनं प्रसङ्गागतनिबन्धनं यत्र कार्ये तत्तथोक्तम् । कानि वस्तूनीत्याह सर्वरसेति । रसशब्देन स्थायिनो व्यभिचारिणश्च तेषां संक्षेपेण कृतं करणं यत्र, विद्रवैरग्न्याद्युपप्लवैः सह, तैर्विहीनम्(च)। यथा, तत्रैव (कृत्यारावणे) अङ्गदादभिद्रूयमाणाया मन्दोदर्या भयं, अङ्गदस्योत्साहः, रावणं दृष्ट्वा तस्यैव हि "एतेनापि सुरा जिता" इत्यादि वदतो हासः, रावणस्यातिक्रोधः, "यस्तातेन निगृह्य बालक इव प्रक्षिप्य कक्षान्तरे" इति वदतोऽङ्गदस्य जुगुप्साहासविस्मयरसा, विध्वंसनं नाटयतीत्यत्र रावणस्य शोकः—इत्येवं विद्रवाश्रयं वस्तूत्थापनम् । तद्विपरीतं तु तत्रैव (कृत्यारावणे) द्वितीयेऽङ्के "नेपथ्ये कलकलः" इत्यतः प्रभृति यावत्सीतां प्रति रावणस्योक्तिः—"आ लोकपालानाक्रन्दसि" इत्यादि ।

---

1 भ - विद्रुतविभ्रान्तविविधविषयं च, ड - विद्रुतसंभ्रान्तविविधवचनं च
2 य - नैकरसलेशयुक्तं सविद्रवं वाप्यविद्रवं वापि 3 य - पश्चात् प - कार्यं

संरम्भसंप्रयुक्तो[1] बहुयुद्धनियुद्धकपटनिर्भेदः ।
शस्त्रप्रहारबहुलः [2]सम्फेटो नाम विज्ञेयः ॥ ७१
एवमेता बुधैर्ज्ञेया वृत्तयो नाट्यसंश्रयाः[3] ।
रसप्रयोगमासां च [4]कीर्त्यमानं निबोधत ॥ ७२
[5]हास्यशृङ्गारबहुला कैशिकी परिचक्षिता ।
[6]सात्त्वती चापि विज्ञेया वीराद्भुतशमाश्रया[7] ॥ ७३

---

भाविनो वस्तुनः समुत्थापनादपीदं तथोक्तम् । तथा च तत्रैव (कृत्यारावणे द्वितीयेऽङ्के) ऋषीणामुक्तिः—

दुरात्मन्, नेयं सीता स्वनाशाय कृत्येयं ह्रियते त्वया । इति ।

सम्फेटस्योदाहरणं जटायुयुद्धादि सर्वम् (कृत्यारावणे) ।

अथासां वृत्तीनां संक्षिप्य स्वरूपमाह हास्यशृङ्गारबहुला कैशिकीति सात्त्वती चापि विज्ञेया वीराद्भुतशमाश्रया । इति । अत्र शमशब्दः शान्तरसपरिग्रह इति तद्वादिनो मन्यन्ते । समाश्रयेत्यन्ये पठन्ति

---

1 ड - समायुक्तो 2 च - संस्फोटो 3 च - काव्यहेतवे, ट - नाट्यमातरः 4 च - गदतो मे 5 भ - हास्यशृङ्गारकरुणैर्वृत्तिः स्यात्कैशिकी रसैः—* न - शृङ्गारे चैव हास्ये च वृत्तिः स्यात् कैशिकी द्विजाः, ड - शृङ्गारं चैव हास्यं च वृत्तिः स्यात्कैशिकी श्रिता, ट - शृङ्गारे चाङ्गहास्ये च कैशिकी वृत्तिरिष्यते 6 नभ - सात्त्वती चैव विज्ञेया वीररौद्राद्भुताश्रया, ट - वीरे चाप्यद्भुते चैव वृत्तिः स्यात्सात्त्वती मता 7 ढ - समाश्रया ।

---

* भ - मातृकापाठः कोहलानुसारी । यथा—वीराद्भुतप्रहसनैरिह भारती स्यात् सात्त्वत्यपीह गदिताद्भुतवीररौद्रैः । शृङ्गारहास्यकरुणैरपि कैशिकी स्यादिष्टा भयानकयुतारभटी सरौद्रा ॥ इति कोहलः ।

[1]रौद्रे भयानके चैव विज्ञेयारभटी बुधैः।
[2]बीभत्से करुणे चैव भारती संप्रकीर्तिता॥ ७४

[3][न ह्येकरसजं काव्यं किंचिदस्ति प्रयोगतः।
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा॥ ७५

सर्वेषां समवेतानां यस्य रूपं भवेद्बहु।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणः स्मृताः]॥

[4]वृत्त्यन्त एषोऽभिनयो मयोक्तो
वागङ्गसत्त्वप्रभवो यथावत्[5]।

---

अस्याध्यायस्याभिनयशेषभूततां ख्यापयन्नध्यायार्थमुपसंहरति भाविनश्चार्थमासूत्रयति वृत्त्यन्त एष इति। वृत्तिरभिनयस्य दशरूपकात्मा विषयोऽपि अन्त इत्यभिनयस्य वृत्तयोऽन्तरमेकदेश आहार्य इति शरीरव्यतिरिक्तं बाह्यमित्यर्थः। नटस्य हि सत्त्वात्मा वागभिनयो व्याहरणीय एव साक्षात्प्रयत्नकृतत्वात्। अत एव तुशब्देन ततो व्यतिरेकमाहार्यमेव विशिनष्टि। नेपथ्यकृतं त्वाहार्यं वक्ष्यामीति भूयः कृतं विस्तार्येति शिवम्।

---

1 भ - भयानके च बीभत्से रौद्रे चारभटी भवेत्, ट - रौद्रे भयरसे चापि वृत्तिरारभटी स्मृता 2 न - भारती चापि विज्ञेया करुणाद्भुतरूपयोः, (ज - संश्रया) भ - भारती चापि विज्ञेया वीरहास्याद्भुताश्रया ट - सर्वेषु रसभावेषु भारती संप्रकीर्तिता। 3 च - मातृकायां श्लोकद्वयं न विद्यते 4 भ - त्रिधा विभक्तोऽभिनयो मयोक्तो च - प्रभवः समासात् 5 भ - नयप्रयोगं।

आहार्यमेवाभिनयं प्रयोगे[1]
वक्ष्यामि नेपथ्यकृतं तु भूयः[2] ॥ ७७

इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पनं
नामाध्यायो विंशः[3] ।

---

नृसिंहगुप्तायतिनेत्थमत्र वृत्तिस्वरूपं प्रकटं व्यधायि ।
यस्य त्रिणेत्रेण हृदन्तरात्मवृत्तिस्वरूपं प्रकटं व्यधायि ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्ताचार्यविरचितायां
भारतीयनाट्यवेदवृत्तावभिनवभारत्यां विंशो
वृत्त्यध्यायः समाप्तिमगमत्

---

1 न - यथावत् भ - तथैव 2 जादिषान्तेषु द्वाविंशः, भमातृकाया मेकोनविंशः, जट - एकविंशः

•

श्रीः

# नाट्यशास्त्रम्

## एकविंशोऽध्यायः.[1]*

आहार्याभिनयं[2] विप्रा [3]व्याख्यास्याम्यनुपूर्वशः ।
[4]यस्मात् प्रयोगः सर्वोऽयमाहार्याभिनये स्थितः ॥ १
नानावस्थाः प्रकृतयः [5]पूर्वं [6]नैपथ्यसाधिता[7]ः ।
अङ्गादिभिरभि[8]व्यक्तिमुपगच्छन्त्ययत्नतः ॥ २

---

अभिनवभारती - एकविंशोऽध्यायः

आहार्याभिनयः

यस्य सङ्कल्पमात्रेण विश्वमाहार्यमद्भुतम् ।
तं मानसमहामूर्तिं वन्दे गिरिसुतामपि ॥

आहार्यस्य सर्वपश्चादभिधानं वागाद्यभिनयेभ्योऽस्य बहिरङ्गत्वादित्यानुपूर्व्यमिति केचित् । तच्चासत्, आवेदितपूर्वमाहार्यस्य प्राधान्यादेव त्वद्य सर्वानुग्राहकत्वं सर्वोपजीव्यताख्यापनाय पश्चादभिधानम् । तदेवानुपूर्वश इत्यनेनोक्तम् । तथा चाह यस्मात् प्रयोगः सर्वोऽयमिति वागङ्गसत्त्वात्मक इति ।

अत्रैवोपपत्तिमाह नानावस्था इत्यादि । नानाभूता या अवस्था रति-

---

1 जादिबान्तेषु त्रयोविंशोऽध्यायः भ - द्वाविंशोऽध्यायः 2 न - चैव
3 न - प्रवक्ष्यामि 4 भ - प्रयोगो योऽस्य, न - सर्व एवा प्रयोगोऽयं यतस्तस्मिन् प्रतिष्ठितः, च - प्रयोगो यत्र 5 न - पूर्वं 6 च - नेपथ्य 7 ड - सूचिताः
8 भ - व्यक्तिरुपगच्छति

---

* अस्मिन्नध्याये भिन्नमातृकासु पाठक्रमो भिन्नतया दृश्यते । तत्र तत्र वाक्यार्थोऽपि भिद्यते । व्याख्याया विरलत्वात् मयमातृकयोः पाठानुसारी क्रमोऽनुसृतः ।

आहार्याभिनयो नाम ज्ञेयो [1]नेपथ्यजो विधिः ।
तत्र कार्यः प्रयत्नस्तु [2]नाट्यस्य शुभमिच्छता ॥ ३
[तस्मिन्यत्नस्तु कर्तव्यो नैपथ्ये सिद्धिमिच्छता ।
नाट्यस्येह त्वलङ्कारो नैपथ्यं यत्प्रकीर्तितम् ॥] ४
चतुर्विधं तु नेपथ्यं[3] पुस्तोऽलङ्कार एव च ।
[4]तथाङ्गरचना चैव ज्ञेयं [5]सज्जीवमेव च ॥ ५
पुस्तस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।
सन्धिमो व्याजिमश्चैव वेष्टिमश्च प्रकीर्तितः ॥ ६

---

शोकाद्या नानाश्रयभूताश्च याः प्रकृतयो धीरोदात्तादय उत्तमाधमप्रभृतयश्च ताः पूर्वं यत्नतो नैपथ्येन साधिताः प्रकाशिताः पश्चादङ्गादिभिर्विभागं[1] अनुभावविषयविभागं नामोपपत्ति देशकालादिविभागं चार्पयद्भिः स्फुटतमतामानीयन्ते । तेन समस्ताभिनयप्रयोगचित्रस्य भित्तिस्थानीयमाहार्यम् । तथा च समस्ताभिनयव्युपरमेऽपि नैपथ्यविशेषदर्शनाद्विशेषोऽवसीयत एव ।

यत्त्ववस्थान्तरयोगेऽभिनयान्तरवदाहार्यं न परिवर्तते तेन[2] प्रत्युत तथाभूतस्येयमवस्था प्राप्तेति स्थायिसूत्रानुस्मृतिसंपादनप्रावण्याद्रसं प्रत्यन्तरङ्गत्वमाहार्यस्यावेद्यते, तथा चाश्वत्थाम्नो युद्धवीररससम्पदोपेतस्यायं शोक आयात इति तथा येन [यदि] [3]युद्धोचितोज्ज्वलधर्मपरिग्रहाद्युपासनं क्रियेतेत्यलं बहुना ।*

ज्ञेयो लोके । नैपथ्यस्य(विधिः अलङ्कारः)स इहाहार्याभिनयः, नाट्यस्य तु शुभमिति सिद्धिम् । (सन्धिमः) सन्धानं सन्धा तया निर्वृत्तः, सदलादिरूपं क्रियते(इति) सन्धिमः । व्याजः सूत्रस्याकर्षादिरूपः क्षेपस्तेन निर्वृत्तो व्याजिमः।

---

1 भ - नैपथ्यजो 2 न - नाट्यशोभामिहेच्छता 3 ड - नैपथ्यं 4 च - नाट्याङ्ग 5 न - संजीवं

---

1 विभावं 2 केन 3 तथा हि यदि

[1]किलिञ्जचर्मवस्त्राद्यैर्यद्रूपं क्रियते बुधैः ।
सन्धिमो नाम विज्ञेयः पुस्तो नाटकसंश्रयः ॥ ७
व्याजिमो नाम विज्ञेयो यन्त्रेण क्रियते तु यः ।
वेष्ट्यते चैव[2] यद्रूपं वेष्टिमः स तु संज्ञितः[3] ॥ ८
शैलयानविमानानि चर्मवर्मध्वजा नगाः[4] ।
[5]ये क्रियन्ते हि[6] नाट्ये तु स पुस्त इति संज्ञितः ॥ ९
[7]अलङ्कारस्तु विज्ञेयो माल्याभरणवाससाम् ।
नानाविधः समायोगोऽप्यङ्गोपाङ्गविधिः स्मृतः ॥ १०
वेष्टिमं विततं चैव संघात्यं ग्रन्थिमं[8] तथा ।
[9]प्रालम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् ॥ ११

---

उपरि जतुसिक्थकादिना वेष्टस्तेन निर्वृत्तो वेष्टिमः । भावप्रत्ययान्तान्निर्वृत्तार्थे इमपं स्मरन्ति (४-४-१० का)। किलिञ्जं भूर्जवेणुदलादि । रूपं क्रियत इति रूपतां नीयत इति यावत् । यन्त्रेणेति सूत्रादिप्रयोगेण सन्धिमादयः प्रकाराः। कोपयुज्यन्त इत्याह शैलेत्यादि ।

समायोग इति योजना ; स चाङ्गेषु शिरोहस्तादिषु उपाङ्गेषु च ललाटाङ्गुल्यादिषु निर्मितः। वेष्टिमं तृणवेष्टनया निर्मितं बहुमालावेष्टनकृतं वा। विततमित्यावेष्टितान्योन्यश्लिष्टमालासमूहात्मकं वस्त्रधारणभयेनोम्भितं वा । सङ्घात्यं वृत्तं वा आस्यच्छिद्रान्तःप्रक्षिप्तसूत्रं बहुपुष्पगुच्छोम्भितं वा । ग्रन्थिमं ग्रन्थिभिरुम्भितं वा । प्रालम्बितमिति जालादिपर्यन्तव्याप्तिकम् । आवे-

---

1 भ - कैलिञ्जं चर्मजं वास्त्रं, ब कैलिञ्जं चार्मणं वस्त्रं, ड - किलिञ्जं, च - कैलिञ्जं- न - कलञ्ज 2 भ - तेन 3 च - वस्त्राद्यैर्वेष्टिमः स तु, ब - स ज्ञेयो वेष्टिमोद्भवः 4 भ - वस्त्रध्वजाश्च ये 5 च - यानि क्रियेत, भ - यानि क्रियन्ते 6 न - अत्र 7 न - अलंकारास्तु विज्ञेया मालाभरणसंज्ञकाः । नानावस्त्रकृताश्चैव नानावस्त्रान्तरात्मकाः 8 ड - ग्रन्थिमत् 9 च - प्रलम्बितं

चतुर्विधं तु विज्ञेयं [1]नाट्ये ह्याभरणं बुधैः ।
आवेध्यं बन्धनीयं च [2]क्षेप्यमारोप्यमेव च ॥ १२
आवेध्यं [3]कुण्डलादीह यत्स्याच्छ्रवणभूषणम् ।
आरोप्यं हेमसूत्रादि हाराश्च विविधाश्रयाः ॥ १३
श्रोणीसूत्राङ्गदे मुक्ताबन्धनीयानि सर्वदा[4] ।
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च ॥ १४
भूषणानां विकल्पं हि[5] पुरुषस्त्रीसमाश्रयम्[6] ।
नानाविधं प्रवक्ष्यामि देशजातिसमुद्भवम्[7] ॥ १५
चूडामणिः [8]समकुटः शिरसो भूषणं स्मृतम् ।
कुण्डलं [9]मोचकं कीला कर्णाभरणमिष्यते ॥ १६
मुक्तावली [10]हर्षकं च [11]सूत्रकं कण्ठभूषणम् ।
[12]वेतिकाङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम् ॥ १७

---

ध्यादीनि स्वयमेव व्याचष्टे आवेध्यं कुण्डलादीत्यादिना । विविधाश्रया इति लतासंख्यादिभेदेन बहुभेदा इत्यर्थः । चूडामणिः शिरोमध्ये । मकुटो ललाटोर्ध्वे । कुण्डलमधरपाल्याम् । मोचकं कर्णशष्कुल्या मध्यच्छिद्रे कृतम्, कीला ऊर्ध्वच्छिद्रे उत्तरकार्णिकेति प्रसिद्धा । हर्षकमिति समुद्गकं सर्पादिरूपतया प्रसिद्धम् । सूत्रकमिति गुच्छग्रीवासूत्रादितया प्रसिद्धम् । [1]वेतिकेति सूक्ष्मकटकरूपा अङ्गुलिमुद्रा पक्षिपद्माद्याकारेणोपेता ।

---

1 ड - देहस्य 2 ड - प्रक्षेप्यारोप्यके तथा, भ - प्रक्षेप्यसूतुमेवच (?) 3 भ - कुण्डलानीह तथा श्रवणभूषणैः 4 न - निर्दिशेत् 5 न - च 6 भ - पुरुषस्य-स्त्रियोऽथवा 7 भ - संज्ञान्तरसमाश्रयम् 8 ड - सुमकुटं, ड - समकरः 9 भ - मोचकः कीलं 10 भ - परिसरं 11 प - ससूत्रं 12 ड - कटका, ढ - खटका, प - वेटिका, म - केटकोऽङ्गुलि, च - वटिका

1 वेधिका

[1]हस्तली वलयं चैव बाहुनालीविभूषणम् ।
[2]रुचकश्चूलिका कार्या[3] मणिबन्धविभूषणम् ॥ १८
[4]केयूरे अङ्गदे चैव कूर्परोपरिभूषणे[5] ।
[6]त्रिसरश्चैव हारश्च[7] तथा वक्षोविभूषणम् ॥ १९
[8]व्यालम्बमौक्तिको हारो माला चैवाङ्गभूषणम् ।
[9]तलकं सूत्रकं चैव भवेत्कटिविभूषणम् ॥ २०
अयं पुरुषनियोगः कार्यस्त्वाभरणाश्रयः ।
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम्[10] ॥ २१

---

रुचक इति करगोलके विततः तत ऊर्ध्वे चूलिकेति प्रसिद्धो निकुञ्चकोऽग्रबाहुस्थाने—एतन्मणिबन्धविभूषणम् , केयुरः कूर्परस्योर्ध्वतः,तयोरूर्ध्वे त्वङ्गदे । त्रिसरः मुक्तालतात्रयेण । तलकं नाभेरधः, तस्याप्यधः सूत्रकम् । पुरुषनियोगः औचित्यमस्य । आभरणाश्रयः आभरणविधिरित्यर्थः ।

ननु सर्वः पुरुषोऽनेन भूष्यत इत्याशङ्क्याह देवानां पार्थिवानां चेति । शिखाव्यालः नागः ग्रन्थिभिरुपनिबद्धो मध्ये कर्णिकास्थानीयः, तस्यैव दलसन्धानतया चित्ररचनानि वर्तुलानि पत्राणि पिण्डीपत्राणि । चूडामणिः शिरोमध्ये, ततो मकरपत्रं (मकरिका), ततो ललाटान्तमुक्ताजालिका तोरणं जालिकादिरूपेण प्रसिद्धा । सर्पस्यैव वा शिरस एकमेव सुवर्णमुक्तामणि-

---

1 ज - हस्तती, ड - हस्तयी, ढ - हस्तपी 2 म - रुचकोश्चितिके कार्य ढ - रुचिकोश्चिन्तिके कार्ये 3 ड - चैव 4 ड - केयूरमङ्गदं, ढ - केयूरे साङ्गदे, च - केयूरावङ्गदे 5 ड - भूषणम् 6 भ - त्रिसरं 7 ड - भवेत्, न - चित्रं, प - भवेद्वक्षोज 8 ड - व्यालम्बिमौक्तिका हारा माल्याद्या देहभूषणम्, ढ - व्यालम्बमुक्ताहारादिमालादेहविभूषणम् 9 च - तरलं, घ - तदलं, र - तनुकं, ड - तलकं 10 भ - अहं त्रयम्

शिखापाशं शिखाव्याल[1]ः पिण्डीपत्रं[2] तथैव च ।
चूडामणिर्मकरिका[3] मुक्ताजालगवाक्षिकम्[4] ॥ २२
शिरसो भूषणं [5]चैव विचित्रं शीर्षजोलकम्[6] ।
[7]कण्डकं [8]शिखिपत्रं च वेणीपुच्छ[9]ः सदोरकः ॥ २३
ललाटतिलकं[10] चैव नाना[11]शिल्पप्रयोजितम्[12] ।
[13]भ्रूगुच्छोपरिगुच्छश्च कुसुमानुकृतिस्तथा[14] ॥ २४
कर्णिका कर्णवलयं तथा स्यात्पत्रकर्णिका ।
[15]कुण्डलं कर्णमुद्रा च [16]कर्णोत्कीलकमेव च ॥ २५
नानारत्नविचित्राणि दन्तपत्राणि चैव हि[17] ।
कर्णयोर्भूषणं [18]ह्येतत्कर्णपूरस्तथैव च ॥ २६

---

चितितम् । खेला (डोला ?) प्रायं शीर्षतः जोलकं भूषणं शिखिपत्रं मयूरपिच्छाकारो विचित्रवर्णमणिरचितः कर्णावतंसकः । कर्णिकेत्यादिना विकल्पतः कर्णाभरणान्यपि तु स्थानान्तरभेदात्समुच्चयेनेत्याहुः ।

---

1 च - जालं, न व्यालं, भ - शिरोव्यालं 2 भ - पिण्डयन्त्रं, य - खण्डयन्त्रं, प - पिण्डपत्रं, ढ - खण्डपात्रं, 3 भ - मकरको 4 न - गवाक्षिका, भ - गवाक्षिकः 5 भ - वापि चित्रकं शीर्षजालकम् 6 ड - जालकम् 7 ड - कुण्डलं 8 च - खण्डपत्रं, भ - गण्डपत्रं 9 न - गुच्छः, ड - कुञ्जः सरोचकः, ढ - कञ्जः भ - पुच्छमधोकरः 10 च - तिलकः 11 भ - नील, प - नाली, ड - शीर्ष 12 च - प्रयोजितः 13 छ - भ्रूकच्छोपरि, ड - भ्रुवोश्चोपरि 14 ड - भवेत् 15 न - आवेष्टकं कर्णमुद्रा, ड - आवेष्टिकः कर्णमुद्रा 16 च - कर्णोत्पलकं, न - कर्णोत्फलकं ढ - कर्णोत्कीलक एव च, भ - कर्णाक्षिपकः 17 भ - तथा संस्कारणानि च 18 न - कार्यं

[1]तिलकाः पत्रलेखाश्च भवेद्गण्डविभूषणम् ।
त्रिवणी चैव विज्ञेयं भवेद्वक्षोविभूषणम् ॥ २७
नेत्रयोरञ्जनं [2]ज्ञेयमधरस्य च रञ्जनम् ।
दन्तानां [3]विविधो रागश्चतुर्णां शुक्लतापि वा ॥ २८
रागान्तरविकल्पोऽथ[4] शोभनेनाधिकोज्ज्वलः ।
[5]मुग्धानां सुन्दरीणां च मुक्ताभासितशोभनाः[6] ॥ २९
[7]सुरक्ता वापि दन्ताः स्युः पद्मपल्लवरञ्जनाः ।
अश्मरागोद्द्योतितः स्यादधरः पल्लवप्रभः ॥ ३०
विलासश्च भवेत्तासां सविभ्रान्तनिरीक्षितम्[8] ।
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका ॥ ३१
रत्नावली [9]सूत्रकं च ज्ञेयं [10]कण्ठविभूषणम् ।
द्विसरस्त्रिसरश्चैव चतुस्सरकमेवच ॥ ३२
तथा शृङ्खलिका चैव भवेत्कण्ठविभूषणम् ।
अङ्गदं वलयं चैव बाहुमूलविभूषणम् ॥ ३३
नाना[11]शिल्पकृताश्चैव हारा[12]वक्षोविभूषणम् ।

---

विलासः । तेनायमर्थः—एवं भूतेन दन्ताधररागवैचित्र्ये सति, सविभ्रान्त-

---

1 य - कीलकाः न - तिलकः पत्रलेखश्च 2 ड - कार्यं 3 ड - विविधा-रागाः 4 भ - वां यः शोभेन 5 भ - मुख्यानां 6 भ - शोभितशोभिताः ड - मुक्ताभाः सितशोभनाः 7 प - आरक्ता एव दन्ताः स्युस्तथा मालि च रञ्जनम् । स्वरागोज्ज्योतितश्च स्यात् 8 भ - विभ्रान्तं च विलक्षितम् (ब - व) 9 ड - च सूत्रं च 10 भ - कण्ठे 11 भ - शिल्पीकृताः च - रत्न 12 प - वक्षोज

मणिजालावनद्धं[1] च भवेत् स्तनविभूषणम् ॥ ३४

खर्जूरकं सोच्छितिकं[2] बाहुनालीविभूषणम् ।

[3]कलापी कटकं शङ्खो हस्तपत्रं [4]सपूरकम् ॥ ३५

मुद्राङ्गुलीयकं चैव ह्यङ्गुलीनां विभूषणम्[5] ।

[6]मुक्ताजालाढ्यतलकं[7] मेखला [8]काञ्चिकापि वा ॥ ३६

रशना च कलापश्च [9]भवेच्छ्रोणीविभूषणम् ।

एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका ॥ ३७

[10]द्विरष्टयष्टी रशना कलापः पञ्चविंशकः[11] ।

द्वात्रिंशच्च चतुःषष्टिः शतमष्टोत्तरं तथा[12] ॥ ३८

मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् ।

[13]नूपुरः किङ्किणीकाश्च घण्टिका रत्नजालकम् ॥ ३९

---

निरीक्षितं यत् स्मितं तद्भवेदतीवहृद्यं(विलासः)संपाद्यत इति तावत् । तलकमिति कवाटद्वययोजितम् ।

यष्टिरिति लता । नूपुरो जान्वधः । किङ्किणीका घण्टिकालग्ने (शा?) ।

---

1 च - अनुबन्धं 2 भ - सोपवीतं ड - वर्जूरं स्वेच्छितीकं च 3 च - शङ्खः कलापी कटकं तथा स्यात्पत्रपूरकम् ड - कटकं कलकाशाखा (शाखा च - ढ) भ - कलापी शाटकं 4 ढ - सु 5 न - च स्यादङ्गल्याभरणं भवेत् 6 भ - काञ्ची मौक्तिकजालाढ्या तलकं मेखला तथा (ढ - कुलकं मेखलं) 7 म - तिलकं 8 च - काञ्च्यथापि वा 9 च - ज्ञेयं 10 ड - रशना षोडश ज्ञेया 11 ड - विंशतिः 12 च - षोडशाष्टौ च चतुःषष्टिः शतं तथा 13 म - नूपुरं किङ्किणी चैव घण्टिकाजालमेव च (भ - रत्नजालकमेव च) प - नूपुरं किङ्किणी काञ्ची

[1]सघोषे कटके चैव गुल्फोपरिविभूषणम् ।
[2]जङ्घयोः पादपत्रं स्याद[3]ङ्गुलीष्वङ्गुलीयकम् ॥ ४०
[4]अङ्गुष्ठतिलका[5]श्चैव पादयोश्च विभूषणम् ।
[6]तथालक्तकरागश्च नानाभक्तिनिवेशितः[7] ॥ ४१
अशोकपल्लवच्छायः स्यात् स्वाभाविक एव च[8] ।
एतद्विभूषणं नार्या आकेशादानखादपि ॥ ४२
यथाभावरसावस्थं विज्ञेयं द्विजसत्तमाः[9] ।
आगमश्च प्रमाणं च[10] रूपनिर्वर्णनं तथा ॥ ४३
विश्वकर्म[11]मतात्कार्यं[12]सुबुद्ध्यापि प्रयोक्तृभिः
न हि शक्यं सुवर्णेन मुक्ताभिर्मणिभिस्तथा ॥ ४४
[13]स्वाधीनमिति रुच्यैव कर्तुमङ्गस्य भूषणम् ।
[14]विभागतोऽभिप्रयुक्तमङ्गशोभाकरं भवेत् ॥ ४५

---

रत्नजालकं (प्रपदा)च्छादकम् । सघोषे सशब्दे कटके । (अङ्गुष्ठ)तिलका इति विचित्ररचनाकृताः । आकेशादिति शिखापाशः शिखाव्याल इत्यतःप्रभृतीत्यर्थः । आनखादिति अलक्तकरागपर्यन्तमिति यावत् । आगम इत्युपादानकारणमिति यावत् । प्रमाणमिति अङ्गुल्यादिपरिमाण (संमितत्वम् । रूपनिर्वर्णन) मिति शुक्लादि निर्वर्तनं(यथास्वभावम्) । विश्वकर्मणा प्रोच्यते यादृङ्निर्दिष्टं तादृक्कार्यमित्यर्थः । सुबुद्ध्येति लोकप्रसिद्धापीत्यर्थः ।

---

1 न - सघोष कटकं 2 भ - सरलं कार्णिकोद्योतं 3 ज - अङ्गुलौ 4 च - अङ्गुष्ठे च 5 ढ - तलकाः न - तिलकं प - तिलका च 6 ज - तथैवालक्त 7 भ - विभूषितः 8 भ - वा 9 ड - रसावस्थां विज्ञायैव प्रयोजयेत् 10 म - वै 11 भ - मते 12 ड - बुद्ध्यावापि प्रयोजयेत् 13 ड - स्वाधीनं चेप्सया चैव च - स्वाधीनमतिरूढ्यैव 14 ड - विभावतो हि (ढ - अभि) य - विगाहता हि

यथा स्थानान्तरगतं भूषणं रत्नसंयुतम्।
न तु नाट्यप्रयोगे तु[1] कर्तव्यं भूषणं गुरु॥ ४६
खेदं जनयते तद्धि सव्यायतविचेष्टनात्।
गुरुभारावसन्नस्य स्वेदो मूर्छा च जायते[2]॥ ४७
गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः।
[3]तस्मात्तनुत्वचकृतं सौवर्णं भूषणं भवेत्॥ ४८
[4]रत्नवज्जतुबद्धं वा न खेदजननं भवेत्।
स्वेच्छया भूषणविधिर्दिव्यानामुपदिश्यते[5]॥ ४९
[6]यत्नभावविनिष्पन्नं मानुषाणां विभूषणम्।
*[वेष्टितं विततं चैव सङ्घात्यं ग्रन्थिमं तथा॥ ५०
लम्बशोभि तथा चैव माल्यं पञ्चविधं स्मृतम्।
आच्छादनं बहुविधं नानापत्तनसंभवम्॥ ५१
तज्ज्ञेयं त्रिप्रकारं तु शुद्धं रक्तं विचित्रितम्]।
दिव्यानां भूषणविधिर्य एष परिकीर्तितः॥ ५२

---

पत्तनं देशः। शुद्धमिति शुक्लवर्णकम्। रक्तमिति कुसुम्भनील्याद्यन्यतमोपरक्तम्। विचित्रमिति बहुवर्णम्। विभक्तिः विभागः।

---

1 य - प्रयोगेषु 2 ड - प्रजायते 3 ड - तस्मान्न सम्यक् च 4 ड - जतुपूर्णाल्परत्नं तु 5 न - अपदिश्यते 6 ड - यद्भावाद्विनिष्पन्नं

---

* एतौ श्लोकावग्रे श्मश्रुकर्मविधानानन्तरमेव ड ढ - प्रभृतिमातृकासु पठितौ कासुचित्तु वर्जितावेव ड - मातृकायां—वेष्ट्यं तथैव संघात्यं ग्रथनीयं तथैव च। लम्बितं शोभितं चैव माल्यं पञ्चविधं स्मृतम्॥ इति पठितम्

मानुषाणा च कर्तव्यो नानादेशसमाश्रयः ।
भूषणैश्चापि वेषैश्च[1] नानावस्थासमाश्रयैः ॥ ५३

दिव्याङ्गनानां कर्तव्या विभक्तिः स्वस्वभूमिजा[2] ।
विद्याधरीणा यक्षीणामप्सरोनागयोषिताम् ॥ ५४

ऋषिदैवतकन्यानां वेषैर्नानात्वमिष्यते ।
तथा च सिद्धगन्धर्वराक्षसासुरयोषिताम् ॥ ५५

दिव्यानां नरनारीणां तथैव च शिखण्डकम्[3] ।
शिखापुटशिखण्डं तु मुक्ताभूयिष्ठभूषणम् ॥ ५६

विद्याधरीणां कर्तव्यः शुद्धो वेषपरिच्छदः[4] * ।
[5]यक्षिण्योऽप्सरसश्चैव कार्या रत्नविभूषणाः[6] ॥ ५७

[7]समस्तासां भवेद्वेषो यक्षीणां केवलं शिखा ।
[8]दिव्यानामिव कर्तव्यं नागस्त्रीणां विभूषणम् ॥ ५८

मुक्तामणि[9]लताप्रायाः फणास्तासां तु केवलाः[10]

---

तासामिति (श्लो - ५९) नागयोषिताम् ।

---

1 प - अपवेषैश्च 2 भ - स्वनिकायजा 3 ड - मानुषीणां तथैव च 4 च - कर्तव्यं चित्रवेषपरिच्छदम् 5 ड - यक्षिण्यप्सरसां चैव कार्यं रत्नैर्विभूषणम् 6 न - बहुविभूषणाः 7 न - समस्तानां 8 ड - दिव्यवत्संप्रकर्तव्यं नागीनां तु विभूषणम् 9 न - गणप्रायं 10 भ - केवलम्

---

* संग्रहे—शिखाबद्धशिखण्डं च भूषां मौक्तिकभूयसीम् । वेषं शुद्धं प्रकुर्वीत विद्याधरमृगीदृशाम् ॥ इति संवादोऽस्ति

कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः ॥ ५९
न चापि[1] भूषणविधिस्तासां वेषो वनोचितः ।
मुक्तामरकतप्रायं मण्डनं सिद्धयोषिताम् ॥ ६०
तासां चैव तु कर्तव्यं पीतवस्त्रपरिच्छदम् ।
पद्मरागमणिप्रायं गन्धर्वीणां विभूषणम् ॥ ६१
[2]वीणाहस्तश्च कर्तव्यः कौसुम्भवसनस्तथा ।
इन्द्रनीलैस्तु कर्तव्यं राक्षसीनां विभूषणम् ॥ ६२
सितदंष्ट्रा च कर्तव्या कृष्णवस्त्रपरिच्छदम्[3] ।
वैडूर्यमुक्ताभरणाः कर्तव्या सुरयोषिताम् ॥ ६३
शुकपिच्छनिभैर्वस्त्रैः कार्यस्तासां परिच्छदः ।
पुष्यरागैस्तु मणिभिः क्वचिद्वैडूर्यभूषितैः[4] ॥ ६४
दिव्यवानरनारीणां कार्यो नीलपरिच्छदः ।
एवं शृङ्गारिणः कार्या वेषा दिव्याङ्गनाश्रयाः[5] ॥ ६५
अवस्थान्तरमासाद्य शुद्धाः कार्याः पुनस्तथा[6] ।
मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ॥ ६६

---

1 ङ - भूषणं कार्यं तासामत्यर्थतो भवेत् 2 ङ - वीणाहस्ताश्च कर्तव्या कौसुम्भवसनास्तथा 3 न - परिच्छदः म - परिच्छदा 4 ङ - भूषितः 5 च दिव्याङ्गनासु वा 6 भ - तथैव च

[1]वेषाभरणसंयोगान् गदतस्तान्निबोधत ।
[2]आवन्त्ययुवतीनां तु[3] शिरस्सालककुन्तलम् ॥ ६७
गौडीनामलकप्रायं [4]सशिखापाशवेणिकम् ।
आभीरयुवतीनां तु द्विवेणीधर [5]एव तु ॥ ६८
शिरःपरिगमः कार्यो[6] नीलप्रायमथाम्बरम् ।
तथा पूर्वोत्तरस्त्रीणां [7]समुन्नद्धशिखण्डकम् ॥ ६९
[8]आकेशाच्छादनं तासां [9]देशकर्मणि कीर्तितम् ।
[10]तथैव दक्षिणस्त्रीणां कार्यमुल्लेख्यसंश्रयम्[11] ॥ ७०
कुम्भी[12]बन्धकसंयुक्तं तथावर्तललाटिकम्[13] ।
[गणिकानां तु कर्तव्यमिच्छाविच्छित्ति मण्डनम् ॥]
देशजातिविधानेन[14] शेषाणामपि कारयेत् ।
वेषं तथा चाभरणं [15]क्षुरकर्म परिच्छदम् ॥ ७२

---

(सालककुन्तलमिति) अलकाः स्थाने कुन्तलाः कुञ्चिताः केशा यत्र तत्तथोक्तम् । नीलप्रायं वस्त्रमित्याभीरीणामेव ।

हृदयं व्याप्नोति हृद्यत एवेति वेषः केशरचनादिः । आ समन्तात् भ्रियते पोष्यते कान्तिर्येन तदाभरणं शिखाव्यालादि । क्षुरकर्म अलकादियोजना । परिच्छदः विचित्रवस्त्रयोगः । एतद्वेषादि प्रलम्भेन ।

---

1 च - वेषास्त्वाभरणोपेतास्तांश्च सम्यङ्निबोधत 2 ड - अवन्ति 3 प - हि 4 प - शिखाप्रायैकवेणिकम् 5 ढ - धरं 6 ढ - परिगतं कार्यं 7 च - समुद्धत प - समुद्बद्ध 8 प - आकेशधारणं ड - आकेशं छादनं 9 ज - वेष 10 च - तथा च 11 च - संज्ञितम् 12 च - पथक प - पतक य - पताक ज - पथव (?) 13 न - ललाटकम् 14 ड - विशेषेण 15 भ - नानावस्त्रान्तराश्रयम्

[1][आगमं चापि नैपथ्ये नाट्यस्यैवं प्रयोजयेत्] ।
[2]अदेशयुक्तो वेषो हि न शोभां जनयिष्यति ॥ ७३
मेखलोरसि बद्धा तु हास्यं समुपपादयेत्[3] ।
तथा प्रोषित[4]कान्तासु [5]व्यसनाभिहतासु च ॥ ७४
वेषो [6]वै मलिनः कार्य एकवेणीधरं शिरः[7] ।
विप्रलम्भे तु[8] नार्यास्तु शुद्धो वेषो भवेदिह ॥ ७५
[9]नात्याभरणसंयुक्तो न चापि मृजयान्वितः[10] ।
एवं स्त्रीणां [11]भवेद्वेषो देशावस्थासमुद्भवः ॥ ७६
पुरुषाणां पुनश्चैव वेषान्वक्ष्यामि तत्त्वतः[12] ।
तत्राङ्गरचना पूर्वं कर्तव्या नाट्ययोक्तृभिः ॥ ७७
[13]ततःपरं प्रयोक्तव्या वेषा देशसमुद्भवाः ।
सितो नीलश्च पीतश्च चतुर्थो रक्त एव च ॥ ७८
एते स्वभावजा वर्णा यैः कार्यं त्वङ्गवर्तनम् ।
संयोगजाः पुनश्चान्ये[14] उपवर्णा भवन्ति हि ॥ ७९

---

देशोऽवन्त्यादि, अवस्था रतिशोकाद्याः । तत्रेति पुरुषेष्वेव । अङ्गनानां रूपपरिवर्तनसंपादनात्मकवर्णवर्तना कर्तव्या न स्त्रीपात्रेष्विति यावत् । संयोगजा इति वर्णद्वयश्लेषणोत्थापिताः, उपवर्णास्तु बहुवर्णमिश्रणेनेत्यर्थः ।

---

1 ज - मातृकायामेव 2 ड - अदेशजो हि वेषस्तु 3 ड - बन्धे च (तु) हास्यायैवोपजायते (ज - बन्धात्तु हास्याय...) म - बद्धा या हास्यं समुपपादयेत् 4 भ - कान्तानां व्यसनाभिहताश्च याः (ड - या) 5 च मदन 6 ज स्यान्मलिनस्तासां 7 च - शिरश्चाप्येकवेणिकम् 8 ड - हि 9 ड - नाना 10 न - हि मृदायुतः 11 च - प्रयोक्तव्या वेषा देशसमुद्भवाः (न - व्यो ..षो...वः) 12 भ - अतःपरम् 13 च - अतः 14 न - पुनस्त्वन्य

तानहं संप्रवक्ष्यामि यथाकार्यं प्रयोक्तृभिः ।
सितनीलसमायोगे[1] [2]कारण्डव इति स्मृतः ॥ ८०
सितपीतसमायोगात्पाण्डुवर्णः प्रकीर्तितः[3] ।
सितरक्तसमायोगे पद्मवर्णः प्रकीर्तितः[4] ॥ ८१
पीतनीलसमायोगाद्धरितो नाम जायते ।
नीलरक्तसमायोगात्कषायो नाम जायते ॥ ८२
रक्तपीतसमायोगाद्गौरवर्ण इति स्मृतः[5] ।
एते संयोगजा वर्णा ह्युपवर्णास्तथापरे[6] ॥ ८३
त्रिचतुर्वर्णसंयुक्ता वहवः [7]संप्रकीर्तिताः ।
बलस्थो यो भवेद्वर्णस्तस्य [8]भागो भवेत्ततः[9] ॥ ८४
दुर्बलस्य च भागौ द्वौ [10]नीलं मुक्त्वा प्रदापयेत् ।
नीलस्यैको भवेद्भागश्चत्वारोऽन्ये तु वर्णके[11] ॥ ८५
[12]बलवान्सर्ववर्णानां नील एव प्रकीर्तितः ।
एवं वर्णविधिं ज्ञात्वा[13]नानासंयोगसंश्रयम्[14] ॥ ८६

---

बलस्थ इत्यभिभवनकारी, ततोऽन्यो वर्णो द्विगुण इति, अस्यापवादमाह नीलवर्णादृते इति । तत्र तु यो भागविधिस्तं दर्शयति नीलस्यैक इति

---

1 न - योगात् 2 न - कापोत इति संज्ञितः च - कापोतो नाम जायते ग - कापोतक 3 न - इति स्मृतः 4 न - इति स्मृतः भ - प्रकीर्त्यते 5 न - गौर इत्यभिधीयते 6 न - तथैव च 7 न - परि 8 न - भावो 9 भ - भावस्तस्य विधीयते 10 ज - नीलवर्णादृते भवेत् न - नीलयुक्त्या 11 भ - अन्यस्त्वेकश्च निश्चितः च - अन्यस्य तु स्मृताः 12 भ - वर्णस्य तु बलीयस्त्वं नीलस्यैव तु कीर्तितम् (च – हि कीर्त्यते) 13 च - मान 14 भ - संभोगसंभवम्

ततः [1]कुर्याद्यथायोगमङ्गानां वर्तनं बुधः।
वर्तनाच्छादनं रूपं स्ववेषपरिवर्जितम्[2] ॥ ८७
नाट्यधर्मप्रवृत्तं तु[3] ज्ञेयं तत्प्रकृतिस्थितम्।
स्ववर्णमात्मनश्छाद्य[4] वर्णकैर्वेषसंश्रयैः ॥ ८८
[5]आकृतिस्तस्य[6] कर्त्तव्या [7]यस्य प्रकृतिरास्थिता[8]।
यथा [9]जन्तुः स्वभावं [10]स्वं परित्यज्यान्यदैहिकम्[11] ॥
[12]तत्स्वभावं हि भजते देहान्तरमुपाश्रितः।
[13]वेषेण वर्णकैश्चैव च्छादितः पुरुषस्तथा ॥ ९०
परभावं प्रकुरुते[14] यस्य वेषं समाश्रितः[15]।
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥ ९१

---

वर्णके नीलस्य भाग इत्यर्थः। वर्तनाशब्दं पर्यायैर्व्याचष्टे वर्तना च्छादनमिति। प्रकृतिस्थितमिति देवमानुषादिस्वभावविभागेनावस्थितमित्यर्थः। वर्तनस्य प्रयोजनमाह यथा जन्तुः स्वभावं स्वमिति। जन्तुरिति जीवात्मेत्यर्थः स च शुद्धनिर्मलानन्तचिदानन्दप्रकाशः स्वातन्त्र्यरूपं स्वमनपायिनमपि स्वभावं परित्यज्यान्यद् व्यतिरिक्तमपि दैहिकं देहभवं शरीरकरणोचितं तत्स्वभावं भजते, यतो देहान्तरं तद्देहविशेष उपसमीपे आ समन्तात् श्रितः अतिनैकट्येन तदात्मवृत्त्या प्रतिपन्न इत्यर्थः।

---

1 ड - तु वर्तना कार्या नानारूपसमाश्रया (न - वर्ण) 2 च - वार्तितम् 3 ड - धर्मप्रवृत्तेन न - प्रवृत्ते तु 4 ज - वर्णज्ञैः ड - वर्णजैः 5 झ - प्रकृतिर्यस्य 6 ज - यस्य 7 ज - तस्य 8 न - प्रकृतिमाश्रिताः 9 ड - नरः न - जीवः 10 न - स्वं 11 न - देहजम् 12 ज - परभावं प्रकुरुते भूतदेहसमाश्रितम् (न - देहं समाश्रितः) भ - अन्यत्स्वभावं लभते देहान्तरसमाश्रितः 13 ड - वेषैश्च 14 ज - प्रकुर्वीत 15 ज - उपाश्रितः

[1]प्राणिसंज्ञाः स्मृता ह्येते जीवबन्धाश्च येऽपरे।
[स्त्रीभावाः पर्वताः नद्यः समुद्रा वाहनानि च॥ ९२
नानाशस्त्राण्यपि तथा विज्ञेयाः प्राणिसंज्ञया[2]]।
शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा॥ ९३
नानाप्रहरणाद्याश्च तेऽप्राणिन इति स्मृताः।
अथवा कारणोपेता भवन्त्येते शरीरिणः॥ ९४
[3]वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु।
वर्णानां तु विधिं ज्ञात्वा वयः प्रकृतिमेव च॥ ९५
[4]कुर्यादङ्गस्य रचनां देशजातिवयःश्रिताम्[5]।
देवा गौरास्तु विज्ञेया यक्षाश्चाप्सरसस्तथा॥ ९६

---

एतदुक्तं भवति—यथा परमात्मा स्वचैतन्यप्रकाशमत्यजन्नपि देहकञ्चुकोचितचित्तवृत्तिरूषितमिव स्वरूपमादर्शयति, तथा नटोऽपि आत्मावष्टम्भमत्यजन्नेव स्थाने लयतालाद्यनुसरणाद्यायोगाद् देहस्थानीयेन वर्तनादिवेषपरिवर्तने(न) तदुचितस्वभावालिङ्गितमिव स्वात्मानं सामाजिकान् प्रति दर्शयति, प्रेक्षकपक्षे न नटाभिमानस्तत्र हि रामाभिमान इति दर्शयति। एतदाशयेनैवास्माभिस्तत्र तत्र प्रतीतिरेव व्याख्याता रसाध्यायादौ।

सजीवमाहार्यभेदं व्याचष्टे देवदानवगन्धर्वेत्यादिना, शैलप्रासादादीनि निर्जीवत्वे प्रस्तुतत्वेन परिगणितान्यपि अवस्थाविशेषेषु नाट्यधर्मेण सजीवत्वेऽपीत्याह शैलेत्यादिना, अथवा कारणोपेता इत्यादिना च।

अङ्गरचनानि विभजति वर्णानामिति गौरादीनाम्।

---

1 द - ते प्राणिन इति प्रोक्ता (ज्ञेयाः) जीवबन्धाश्च ये त्विह न - ते स्मृताः, (न - बद्धाश्च ते स्मृताः) 2 द - संश्रयाः भ – ज्ञेयानि तु विचक्षणैः 3 भ - देशभाषाश्रयोपेतं 4 न - तस्मात् 5 न - समाश्रिताम्

रुद्रार्कद्रुहिणस्कन्दास्तपनीयप्रभाः स्मृताः[1] ।
सोमो बृहस्पतिः शुक्रो वरुणस्तारकागणाः[2] ॥ ९७
समुद्रहिमवद्गङ्गाः श्वेता हि स्युर्बलस्तथा[3] ।
रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ ॥ ९८
नारायणो नरश्चैव श्यामो नागश्च[4] वासुकिः ।
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः ॥ ९९
पिशाचा [5]जलमाकाशमसितानि[6] तु वर्णतः ।
[7]भवन्ति षट्सु द्वीपेषु [8]पुरुषाश्चैव वर्णतः ॥ १००
कर्तव्या नाट्ययोगेन[9] निष्टप्तकनकप्रभाः ।
जम्बूद्वीपस्य [10]वर्षे तु नानावर्णाश्रया नराः ॥ १०१
[11]उत्तरांस्तु कुरूंस्त्यक्त्वा[12] ते चापि कनकप्रभाः ।
[13]भद्राश्वपुरुषाः श्वेताः कर्तव्या वर्णतस्तथा[14] ॥ १०२

---

नगाः पर्वताः । जलमाकाशमिति तदधिष्ठात्री देवतेह विवक्षिता । जम्बूद्वीपस्य वर्षे इति भारते । ते चापीति उत्तरकुरवः ।

---

1 ड - समप्रभाः 2 ज - वरुणोऽथ शिवस्तथा न - वरुणोऽथैन्द्र एव च. 3 भ - सिताः कार्यास्तु वर्णतः 4 ड - श्यामवर्णोऽथ 5 ड - यम आकाशं 6 ड - श्यामवर्णाः 7 च - वसन्ति 8 च – ये नराः वर्णतस्तु ते 9 न - तत्त्वज्ञैः 10 न - वर्षेषु भ - सर्वस्य ड - वर्षे ये 11 भ - उत्तराः कुरवो ये च 12 भ मुक्त्वा 13 न - भद्राश्वे 14 भ - ज्ञेयाः श्वेतास्ते वर्णतो बुधैः

केतु[1]माले नरा नीला [2]गौराः शेषेषु कीर्तिताः ॥
[3]नानावर्णाः स्मृता भूता [4]गन्धर्वा यक्षपन्नगाः । १०३
विद्याधरास्तथा चैव पितरस्तु समा नराः[5] ॥
पुनश्च भारते वर्षे[6]तांस्तान्वर्णान्निबोधत । १०४
राजानः पद्मवर्णास्तु गौराः श्यामास्तथैव च ।
ये चापि सुखिनो मर्त्या गौराः कार्यास्तु वै बुधैः ॥
कुकर्मिणो ग्रहग्रस्ताः व्याधितास्तपसि स्थिताः ।
आयस्तकर्मिणश्चैव [7]ह्यसिताश्च कुजातयः ॥ १०६
[8]ऋषयश्चैव कर्तव्या नित्यं [9]तु बदरप्रभाः ।
[10]तपःस्थिताश्च ऋषयो नित्यमेवासिता बुधैः ॥ १०७
कारणव्यपदेशेन[11]तथा चात्मेच्छया पुनः ।

---

पितरस्तु समा नरा इति तुः स्वार्थे पितरो नराश्च तुल्या इत्यर्थः । कुकर्मिण इति कुत्सितं निन्दितं कर्म येषाम् । आयस्तं शरीरक्लेशबहुलं कर्म येषामित्यर्थः । कुजातयो धीवरडोम्बाद्याः । बदरप्रभावत्त्वेऽप्यपवादमाह तपः स्थिता असिता इति । अनेन तु ऋषीणामपि तपोनिरतानामसितत्वमित्यपौनरुक्त्यम् ।

व्यापकं लक्षणमाह कारणव्यपदेशेनेति । कारणं यथा क्लेशबहुला क्रिया कृष्णत्वे । आत्मेच्छयेति कविबुद्ध्यनुसारेणेत्यर्थः ।

---

1 ड - मालास्तथा श्वेता भ - मालाः पुनर्नीलाः 2 ढ - श्वेता गौरा भवन्ति-हि (प—वा) 3 भ - नानावर्णा—इति श्लोकस्थाने जादिबान्तेष्वादर्शेषु पठितं— "नानावर्णाः स्मृता भूता वामना विकृताननाः । वराहमेषमहिषमृगवक्त्रास्तथैव च" 4 भ - गन्धर्वाश्च सपन्नगाः 5 च, भ - समानवाः 6 भ - सम्यक् 7 ड - कुजाताश्चासिताः स्मृताः (ढ - स्युः) 8 भ - ओषध्यश्चापि 9 न - बदरवर्णिनः 10 भ - तपस्विनश्च कर्तव्या 11 भ - तथाध्यात्मेच्छयापि च

वर्णस्तत्र प्रकर्तव्यो[1] देशजातिवशानुगः[2] ॥ १०८
देशं [3]कर्म च जातिं च पृथिव्युद्देशसंश्रयम्[4] ।
विज्ञाय वर्तना कार्या पुरुषाणां प्रयोगतः[5] ॥ १०९
किरातबर्बरान्ध्राश्च द्रविडाः[6]काशिकोसलाः[7] ।
पुलिन्दा दाक्षिणात्याश्च प्रायेण त्वसिताः स्मृताः[8] ॥
[9]शकाश्च यवनाश्चैव पह्लवा बाह्लिकाश्च ये[10] ।
प्रायेण गौराः [11]कर्तव्या उत्तरां ये श्रिता दिशम् ॥
पाञ्चालाः [12]शौरसेनाश्च [13]माहिषाश्चौड्रमागधाः ।
अङ्गा वङ्गाः कलिङ्गाश्च श्यामाः कार्यास्तु वर्णतः ॥
ब्राह्मणाः क्षत्रियाश्चैव [14]गौराः कार्यास्तथैव हि[15] ।
वैश्याः शूद्रास्तथा चैव श्यामाः कार्यास्तु वर्णतः ॥
एवं कृत्वा यथान्यायं [16]मुखाङ्गोपाङ्गवर्तनाम् ।
श्मश्रुकर्म प्रयुञ्जीत देश[17]कालवयोऽनुगम् ॥
शुद्धं विचित्रं श्यामं च तथा रोमशमेव च ।

---

तत्रेति भारते । शुद्धमिति क्षुरेण, सर्वथा चासितं, श्यामं पूर्वं क्षुरकर्म योजितमपीदानीं निवारितं तद्योजनाङ्कम् । विचित्रमिति क्षुरकर्त्रिकाकर्मणो-

---

1 ड - त्वन्यः प्रयोक्तव्यो न - त्वन्योऽपि कर्तव्यो 2 च - तपोऽनुगः (!) ज - वयः श्रितः घ - वयोऽनुगः 3 ज - कालं भ - जातिं दिशश्चैव 4 भ - संश्रयान् 5 न - वर्तनां कुर्यात्पुरुषाणां प्रयोगवित् 6 म - काञ्चि 7 न - कोशलाः 8 भ - प्रायशो वर्णतोऽसिताः 9 ढ – शाकाः 10 ढ - बह्लिकादयः ब - बह्लिका वाह्लिकास्तथा 11 भ - विज्ञेया उत्तरां चा श्रिता 12 न - शूरसेनाश्च 13 भ - तथाचैव न - माहिषाश्च ज - सखसाश्च 14 ड - रक्ताः 15 ज - सदैव हि 16 च - अङ्गोपाङ्गेषु 17 ड - कर्मक्रियानुगम् न – जाति

भवेच्चतुर्विधं श्मश्रु नानावस्थान्तरात्मकम्[1] ॥ ११५

शुद्धं [2]तु लिङ्गिनां कार्यं [3]तथामात्यपुरोधसाम्[4] ।

मध्यस्था [5]ये च पुरुषा ये च दीक्षां समाश्रिताः॥ ११६

दिव्या ये पुरुषाः[6]केचित्सिद्धाविद्याधरादयः[7] ।

[8]पार्थिवाश्च कुमाराश्च ये च राजोपजीविनः[9] ॥ ११७

शृङ्गारिणश्च ये मर्त्या यौवनोन्मादिनश्च[10] ये ।

तेषां विचित्रं कर्तव्यं श्मश्रु [11]नाट्यप्रयोक्तृभिः ॥

अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम् ।

व्यसनाभिहतानां च श्यामं श्मश्रु प्रयोजयेत्[12] ॥

---

त्पादनकर्मणा च रचितविचित्रसंनिवेशम् । रोमशमिति यथोत्पन्नम् । लिङ्गिनामपि ब्रह्मचारिवानप्रस्थादीनाम् ।

"मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः"

इत्यर्धे—

"शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम्"

इत्यर्धस्यानन्तरं योज्यम्, लेखकदोषात्तु स्थानान्तरे दृश्यते। मध्यस्थ इति नोत्तमानामधमानामित्यर्थः । यौवनोन्मादिन इति अमात्यपुरोधसोऽपीति भावः ।

---

1 न - आश्रयम् 2 भ - च निखिलं 3 प - महामात्र 4 च – "पुरोधसाम्" इत्यनन्तरं "अनिस्तीर्ण प्रतिज्ञानां" इति श्लोकः पठितः । तत्र "शुद्धं श्यामं विचित्रं" इत्युद्देशे पठितम् । 5 न - चैव पुरुषाः स्थानीयाश्चैव ये पुनः 6 न - चैव 7 न - धराश्च ये 8 न – नृपतीनां कुमाराणां 9 न – सेविनः 10 भ - उन्मादिताश्च 11 भ - कर्म 12 न - भवेदथ

[1]ऋषीणां तापसानां च ये च दीर्घव्रता नराः ।
[2]तथा च चीरबद्धानां रोमशं श्मश्रु कीर्तितम् ॥१२०
एवं नानाप्रकारं तु श्मश्रु कार्यं प्रयोक्तृभिः[3] ।
अत ऊर्ध्वं प्रवक्ष्यामि [4]वेषान्नानाप्रयोगजान्[5] ॥
शुद्धो विचित्रो मलिनस्त्रिविधो वेष उच्यते ।
तेषां [6]नियोगं वक्ष्यामि यथावदनुपूर्वशः ॥ १२२
देवाभिगमने चैव मङ्गले नियमास्थिते ।
तिथिनक्षत्रयोगे च विवाहकरणे तथा ॥ १२३
धर्मप्रवृत्तं यत्कर्म स्त्रियो[7] वा पुरुषस्य वा ।
वेषस्तेषां[8] भवेच्छुद्धो ये च प्रायत्निका नराः[9] ॥ १२४
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
नृपाणां कर्कशानां[10] च चित्रो वेष उदाहृतः[11] ॥१२५
[12]वृद्धानां ब्राह्मणानां च श्रेष्ठ्यमात्यपुरोधसाम् ।
वणिजां काञ्चुकीयानां तथा चैव तपस्विनाम् ॥१२६

---

शुद्ध इति शुक्लवस्त्रादिः प्रायः । प्रायत्निका इति प्रयत्ने भवा विनीता इत्यर्थः ।

---

1 भ - मुनीनां 2 प - तथा च वैर न - सिद्धविद्याधराणां च रोमशं च भवेदतः (ढ - तु...तु विधीयते भ - संप्रयोजयेत्) 3 ड - कर्म प्रयोजयेत् 4 न - वेषं . योगजम् 5 भ - नानाश्रयोद्भवान् ॥ अतः परं माल्याच्छादनविधानश्लोकौ पठितौ केषुचिदादर्शेषु 6 ड - विशेषान् व्याख्यास्ये यथाकार्यं प्रयोक्तृभिः 7 ड - कार्यं स्त्रीणां भ - किंचित् स्त्रियो 8 च - तत्र 9 भ - उदासीनाश्च ये नराः 10 प - कामुकानां 11 भ - विचित्रोऽथ उदाहृतः 12 न - कञ्चुकिनाममात्यानां श्रेष्ठिनां सपुरोधसाम् (प - च) । सिद्धविद्याधराणां च वणिक्छुद्धविदामपि (ढ - शा)

विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः ।
शुद्धो वस्त्रविधिस्तेषां कर्तव्यो नाटकाश्रयः ॥ १२७
उन्मत्तानां प्रमत्तानामध्वगानां तथैव च[1] ।
व्यसनोपहतानां च मलिनो वेष उच्यते[2] ॥ १२८
शुद्धरक्तविचित्राणि वासांस्यूर्ध्वाम्बराणि[3] च ।
योजयेन्नाट्यतत्त्वज्ञो वेषयोः शुद्धचित्रयोः ॥ १२९
कुर्याद्वेषे तु मालिने [4]मलिनं तु विचक्षणः ।
[5]मुनिनिर्ग्रन्थशाक्येषु यतिपाशुपतेषु च[6] ॥ १३०
व्रतानुगस्तु कर्तव्यो वेषो [7]लोकस्वभावतः ।
चीरवल्कलचर्माणि तापसानां तु योजयेत् ॥ १३१
[8]परिव्राण्मुनिशाक्यानां वासः काषायमिष्यते ।
नानाचित्राणि वासांसि कुर्यात्पाशुपतेष्वथ ॥ १३२
कुजातयश्च ये प्रोक्तास्तेषां चैव यथार्हतः ।
[9]अन्तःपुरप्रवेशे च विनियुक्ता हि ये नराः ॥ १३३

---

चीरमिति अवितता स्थूला च वृक्षत्वक्, वल्कलं तु तद्विपरीतम्, यथा भूर्जपत्रत्वक्, मृगादेश्चर्म ।

---

1 भ – छन्नानामध्वगामिनाम् 2 ड - इष्यते 3 च - उच्चावचानि 4 च- मलिनानि 5 भ - मुनिनिर्ग्रन्थशाक्यानां तथैव च तपस्विनाम् । यतिपाशुपतानां च वेषः कार्यो व्रतानुगः 6 ड - त्रिदण्डिश्रोत्रियेषु च 7 ड - लोकानुभावतः 8 न - परिव्राण्मुनिमुख्येषु तापसेषु तथैव च । काषायवसनो वेषः कार्यस्त्वर्थवशेन वा 9 भ - राजान्तःपुरकक्ष्यासु नियुक्ता ये नरा नृपैः

काषायकञ्चुकपटाः कार्यास्तेऽपि यथाविधि[1] ।
[2]अवस्थान्तरतश्चैवं [3]नृणां वेषो भवेदथ[4] ॥ १३४

[5]वेषः सांग्रामिकश्चैव शूराणां संप्रकीर्तितः ।
विचित्रशस्त्रकवचो बद्धतूणो[6] धनुर्धरः ॥ १३५

[7]चित्रो वेषस्तु कर्तव्यो नृपाणां नित्यमेव च[8] ।
केवलस्तु भवेच्छुद्धो नक्षत्रोत्पातमङ्गले[9] ॥ १३६

एवमेष भवेद्वेषो देशजातिवयोऽनुगः[10] ।
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च ॥ १३७

एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये ।
नानावस्थां समासाद्य शुभाशुभ[11]कृतस्तथा ॥ १३८

[12]तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम् ।
दिव्यानां मानुषाणां च देशजातिवयःश्रितम्[13] ॥

[14]पार्श्वागता मस्तकिनस्तथा चैव किरीटिनः ।
[15]त्रिविधो मकुटो ज्ञेयो दिव्यपार्थिवसंश्रितः ॥ १४०

---

(नक्षत्रेति) नक्षत्रोत्पातप्रशमनार्थं यन्मङ्गलं, एतच्च नैमित्तिकस्य श्राद्ध-

---

1 भ - कर्तव्यास्ते प्रयोक्तृभिः । कार्याणि कुशचीराणि वल्कलानि तथैवच । व्रतिनां तापसानां तु ह्यन्यान्येवं विधानितु । 2 ज - अवस्थान्तरमासाद्य स्त्रीणां वेषो भवेत्तथा 3 न - सम्यक् 4 न - तथा 5 भ - सांग्रामिकस्तु वेषः स्याच्छूराणां संप्रकीर्तितः 6 भ - तूण, न - तूण 7 ज - विचित्रवेषः 8 च - हि 9 न - मङ्गलैः 10 न - वयोजातिगुणान्वितः 11 न - कृतं ड - कृतस्त्वथ 12 भ - प्रतिशीर्षाणि च पुनर्नानारूपाणि योजयेत् 13 भ - यथावदनुपूर्वशः 14 भ - पार्श्वगता 15 न - त्रिविधा मकुटा ज्ञेया दिव्याः पार्थिवसंश्रयाः

देवगन्धर्वयक्षाणां पन्नगानां सरक्षसाम् ।
[1]कर्तव्या नैकविहिता मुकुटाः पार्श्वमौलयः[2] ॥ १४१
उत्तमा ये च [3]दिव्यानां ते च कार्याः किरीटिनः ।
मध्यमा मौलिनश्चैव कनिष्ठाः [4]शीर्षमौलिनः ॥ १४२
नराधिपानां कर्तव्या मस्तके मकुटा[5] बुधैः ।
विद्याधराणां सिद्धानां चारणानां तथैव च ॥ १४३
[6]ग्रन्थिमत्केशमकुटाः कर्तव्यास्तु प्रयोक्तृभिः ।
[7]रक्षोदानवदैत्यानां पिङ्गकेशेक्षणानि हि[8] ॥ १४४
[9]हरिच्छमश्रूणि च तथा [10]मकुटाख्यानि कारयेत् ।
[11]उत्तमाश्चापि ये तत्र ते कार्याः पार्श्वमौलिनः ॥ १४५
[12]कस्मात्तु मुकुटाः सृष्टाः प्रयोगे दिव्यपार्थिवे ।
केशानां[13] छेदनं दृष्टं वेदवादे[14] यथाश्रुति ॥ १४६
भद्रीकृतस्य वा यज्ञे शिरसश्छादनेच्छया[15] ।
[16]केशानामप्यदीर्घत्वात्स्मृतं मुकुटधारणम् ॥ १४७

---

देवार्चनादेरप्युपलक्षणम् । मकृतिरूपं शिरः मतिशिरः

---

1 न - कार्या हि तैस्तु विहिता मकुटाः पार्श्ववर्तिनः 2 ड - मालिनः 3 न - दिव्याः स्युस्तेषां 4 प - पार्श्वं 5 भ - तथा मस्तकिनो 6 ड – ग्रन्थितं केशमकुटं कर्तव्यं तु 7 भ - देवदानवयक्षाणां 8 न - कृतानि हि 9 भ - यथा श्मश्रूणि 10 प - नानारूपाणि 11 ड - उदात्ताः 12 ड - तस्मात्तु मकुटाः श्लिष्टाः 13 ड - छेदनं नेष्टं 14 ढ - पादे 15 ड - ईप्सया 16 ड - केशानां चाति

सेनापतेः पुनश्चापि[1] युवराजस्य चैव हि।
[2]योजयेदर्धमकुटं महामात्राश्च ये नराः॥ १४८
[3]अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम्।
[4]वेष्टनाबद्धपट्टानि प्रतिशीर्षाणि कारयेत्॥ १४९
पिशाचोन्मत्तभूतानां [5]साधकानां तपस्विनाम्।
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं भवेच्छिरः[6]॥ १५०
शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राड्दीक्षितेषु[7] च।
शिरोमुण्डं तु कर्तव्यं यज्ञदीक्षान्वितेषु च[8]॥ १५१
तथा [9]व्रतानुगं चैव शेषाणां लिङ्गिनां शिरः।
मुण्डं वा कुञ्चितं वापि लम्बकेशमथापि वा॥ १५२
धूर्तानां [10]चैव कर्तव्यं ये च [11]रात्र्युपजीविनः।
[12]शृङ्गारचित्ताः पुरुषास्तेषां कुञ्चितमूर्धजाः॥ १५३
बालानामपि कर्तव्यं त्रिशिखण्डविभूषितम्[13]।

---

(वेष्टनेति) वेष्टनार्थमाबद्धं पट्टमुष्णीषप्रायं येषु। त्रिखण्डाश्चूलिकाः (त्रिशिखण्डम्)।

---

1 न - अमात्यस्य 2 भ - मस्तकेष्वर्धमकुटं प्रयोगे संप्रयोजयेत् 3 न - अमात्यकञ्चुकिश्रेष्ठिविदूषकपुरोधसाम् 4 ड - वेष्टनं बन्धपट्टादि 5 भ - तापसानां तथैव च 6 भ - केशशिरो भवेत् ढ - केशं तु शीर्षकम् 7 प - भिक्षितेषु 8 न - तु 9 ढ - वृत्तानुषङ्गेण 10 ड - चापि 11 ड - राजोप प - रात्रोप 12 ढ - ये च शृङ्गारिणस्तेषां शिरः कुञ्चितमूर्धजम् 13 च - शिरस्त्रिशिखभूषितम्

जटामकुटबद्धं[1] च मुनीनां तु[2] भवेच्छिरः ॥ १५४

चेटानामपि कर्तव्यं त्रिशिखं मुण्डमेव वा ।

[3]विदूषकस्य खलतिः स्यात्काकपदमेव वा ॥ १५५

शेषाणामर्थयोगेन देशजातिसमाश्रयम्[4] ।

शिरः प्रयोक्तृभिः कार्यं नानावस्थान्तराश्रयम्[5] ॥

[6]भूषणैर्वर्णकैर्वस्त्रैर्माल्यैश्चैव यथाविधि ।

एवं नानाप्रकारैस्तु[7] बुद्ध्या वेषान्प्रकल्पयेत् ॥ १५७

पूर्वं तु प्रकृतिं स्थाप्य प्रयोगगुणसंभवाम् ।

स्त्रीणां वा पुरुषाणां वाप्यवस्थां[8] प्राप्य तादृशीम् ॥

सर्वे भावाश्च दिव्यानां कार्या मानुषसंश्रयाः ।

तेषां चानिमिषत्वादि[9] नैव कार्यं प्रयोक्तृभिः ॥

इह भावरसाश्चैव दृष्टिभिः संप्रतिष्ठिताः ।

दृष्ट्यैव [10]स्थापितो ह्यर्थः पश्चादङ्गैर्विभाव्यते ॥

एवं ज्ञेयाङ्गरचना नानाप्रकृतिसंभवा ।

[11]सजीव इति यः प्रोक्तस्तस्य वक्ष्यामि लक्षणम् ॥ १६१

---

(काकपदमिति) काकपक्षवद्यत्र केशविच्छेदः ।

---

1 ड - लम्बं 2 च - च 3 ड - विदूषकाणां कर्तव्यं खल्ली काकपदं तथा 4 न - वयःश्रितम् 5 ज - प्रयोगस्य वशानुगम् 6 ढ - अतस्तैर्भूषणैश्चित्रैर्वस्त्रैर्माल्यैरथापि च (ड - तथैव च) । अवस्थानुकृतिः स्थाप्या प्रयोगरससंभवा 7 प - प्रकारांस्तु 8 द - व्यवस्थां 9 न - त्वं च 10 ड - आपितो प - प्रापितो 11 ढ - संजीवः प - सञ्जीवः

यः प्राणिनां प्रवेशो वै [1]सजीव इति संज्ञितः ।
चतुष्पदोऽथ द्विपदस्तथा चैवापदः स्मृतः[2] ॥ १६२
[3]उरगानपदान् विद्याद् द्विपदान्खगमानुषान् ।
[4]ग्राम्या आरण्याः पशवो [5]विज्ञेयाः स्युश्चतुष्पदाः ॥
ये ते तु [6]युद्धसंफेटैरुपरोधैस्तथैव च ।
नानाप्रहरणोपेताः प्रयोज्या नाटके बुधैः[7] ॥ १६४
आयुधानि च कार्याणि[8] [9]पुरुषाणां प्रमाणतः ।
तान्यहं [10]वर्तयिष्यामि यथापुस्तप्रमाणतः[11] ॥ १६५
[12]भिण्डिर्द्वादशतालः स्याद्दश कुन्तो भवेदथ[13] ।
अष्टौ शतघ्नी शूलं[14] च तोमरः शक्तिरेव वा ॥ १६६
अष्टौ [15]ताला धनुर्ज्ञेय[16]मायामोऽस्य द्विहस्तकः ।

---

प्रहरणोपेता इति युद्धोपयोगिन इत्यर्थः । तथा च नागास्त्रे दत्ते सर्पाकृतिः प्रदर्शनाया, एवं नृसिंहास्त्रे तदाकृतिरित्यादि । (आयुधानां प्रमाणं) दर्शयति (भिण्डिरिति । वज्रं......चतुस्तालम्) । चक्रमिति खड्गादियुद्धेऽपवारणम् ।

---

1 ढ - स संजीव इति स्मृतः 2 च - स्मृताः 3 ड - उरगाह्यपदो ज्ञेया द्विपदा खगमानुषाः 4 ज - ग्राम्यारण्याश्च च - ग्रामारण्याश्च ढ - ग्राम्य मुण्डाश्च 5 प - ज्ञेयास्ते च चतुष्पदाः 6 भ - युद्धे संफेटे ह्यवरोधे 7 ढ - नाटकाश्रये 8 ढ - वर्माणि 9 ड - तज्ज्ञैः सम्यक् 10 च - संप्रवक्ष्यामि 11 च - यावदनुपूर्वशः ज - यथायुक्तिप्रमाणतः 12 भ - भिण्डी 13 भ - विधीयते 14 ढ - शूलश्च 15 ज - तालं 16 न - आवापो प - आमर्षोऽपि तथैव च

शरो गदा च [1]वज्रा च चतुस्तालं विधीयते[2] ॥ १६७
अङ्गुलानि त्वसिः कार्यश्चत्वारिंशत्प्रमाणतः ।
[3]द्वादशाङ्गुलकं चक्रं ततोऽर्धं प्रास इष्यते ॥ १६८
[4]प्रासवत्पट्टसं विद्या[5]द्दण्डश्चैव तु विंशतिः ।
[6]विंशतिः [7]कणयश्चैव ह्यङ्गुलानि प्रमाणतः ॥ १६९
षोडशाङ्गुलविस्तीर्णं [8]सबलं संप्रघण्टिकम् ।
त्रिंशदङ्गुलमानेन कर्तव्यं खेटकं बुधैः ॥ १७०
जर्जरो दण्डकाष्ठं च तथैव प्रतिशीर्षकम् ।
छत्रं च चामरं चैव [9]ध्वजो भृङ्गार एव च ॥ १७१
यत्किंचिन्मानुषे लोके द्रव्यं पुंसां प्रयोजकम्[10] ।
[11]यच्चोपकरणं सर्वं नाट्ये तत्संप्रकीर्तितम् ॥ १७२
यद्यस्य विषयप्राप्तं [12]तेनोह्यं तस्य लक्षणम् ।
[13]जर्जरे दण्डकाष्ठे च संप्रवक्ष्यामि लक्षणम् ॥ १७३

---

यद्यस्येति । यस्य शास्त्रस्य यद्विषयीभूतं पुरुषस्य वा तदनुसारेण तस्य-वस्तुनो लक्षणमूह्यमिति । ऊह्यशब्दे भेदमाह, परिपूर्णलक्षणमुपजीव्यम्,

---

1 च - चक्रं 2 न - भवेदथ 3 भ - चक्रं च द्वादश ज्ञेयं 4 न - प्रासार्धं 5 न - दण्डकश्चैव विंशकः प - दण्डकस्तस्य विंशकः 6 न - कणयश्च भवेद्विंशत्यङ्गुलैः परिमाणतः 7 प - कम्पणः 8 न - खप्पणं भ - करवालः प्रघट्टितः ढ - चर्मकार्यं द्विहस्तकम् । षोडशाङ्गुलविस्तीर्णं सबलं सप्रघण्टिकम् म - सबलं संप्रकीर्तितम् 9 ढ - भट्टो 10 ड - प्रयोगजम् च - प्रयोजयेत् 11 ढ - तत्सर्वं तूपकरणं नाट्येऽस्मिन्संविधीयते 12 न - तेनोक्तं ढ - तेन प्रोक्तं त 13 ज - जर्जरं

[1]माहेन्द्रा [2]वै ध्वजाः प्रोक्ता लक्षणैर्विश्वकर्मणा।
[3]एषामन्यतमं[4] कुर्याज्जर्जरं दारुकर्मतः[5] ॥ १७४

अथवा [6]वृक्षयोनिः स्यात्प्ररोहो वापि जर्जरः।
वेणुरेव [7]भवेच्छ्रेष्ठस्तस्य वक्ष्यामि लक्षणम् ॥ १७५

श्वेतभूम्यां तु यो जातः पुष्यनक्षत्रजस्तथा।
संग्राह्यो [8]वै भवेद्वेणुर्जर्जरार्थे[9] प्रयत्नतः ॥ १७६

[10]प्रमाणमङ्गुलानां तु शतमष्टोत्तरं भवेत्।
पञ्चपर्वा चतुर्ग्रन्थिस्तालमात्रस्तथैव च ॥ १७७

स्थूलग्रन्थिर्न कर्तव्यो न शाखी न च कीटवान्।
न [11]कृमिक्षतपर्वा च न हीनश्चान्यवेणुभिः ॥ १७८

[12]मधुसर्पिस्सर्षपाक्तं माल्यधूपपुरस्कृतम्।
उपास्य विधिवद्वेणुं [13]गृह्णीयाज्जर्जरं प्रति ॥ १७९

---

(यथा) खड्गलक्षणेऽप्युपजीव्यमाने लोहादिनिर्मितत्वमप्यूह्यते। तच्च तस्मान्नाट्योपयोगरूपमूहापोहाभ्यां कर्तव्यमिति। लक्षणानीति (लक्षणैरिति?) विश्वकर्ममते बहुभेदं महेन्द्रध्वजस्य लक्षणमुक्तमित्यर्थः। न हीनश्चेति अन्यवेणुसंघर्षेऽपूर्णोऽवयवतः स नेष्यत इत्यर्थः।

---

1 ज - माहेन्द्रे वै ध्वजे प्रोक्तं लक्षणं विश्वकर्मणा 2 ढ - ये...लक्षणे 3 ढ - तेषां 4 भ - एकतमं 5 भ - कर्मजम् 6 न - वृक्षजातस्य म - वृक्षजातः स्यात् 7 भ - तु वै श्रेष्ठो वक्ष्यते ह्यस्य 8 ज - विधिना 9 ज - जर्जरार्थे 10 भ - प्रमाणतः 11 भ - क्षतः क्रिमिपार्श्वश्च 12 ज - अक्तं तु मधुसर्पिभ्यां 13 न - प्रकुर्वीत

[1]यो विधिर्यः क्रमश्चैव माहेन्द्रे तु ध्वजे स्मृतः ।
स जर्जरस्य[2] कर्तव्यः [3]पुष्यवेणुसमाश्रयः ॥ १८०
भवेद्यो [4]दीर्घपर्वा तु तनुपत्रस्तथैव च ।
पर्वाग्र[5]तण्डुलश्चैव पुष्यवेणुः [6]स कीर्तितः ॥ १८१
विधिरेष[7] मया प्रोक्तो जर्जरस्य प्रमाणतः[8] ।
अत ऊर्ध्वं[9] प्रवक्ष्यामि दण्डकाष्ठस्य लक्षणम् ॥ १८२
[10]कपित्थबिल्ववंशेभ्यो दण्डकाष्ठं भवेदथ[11] ।
[12]वक्रं चैव हि कर्तव्यं[13] त्रिभागे लक्षणान्वितम् ॥ १८३
कीटैर्नोपहतं यच्च व्याधिना न च[14] पीडितम् ।
मन्दशाखं भवेद्यच्च दण्डकाष्ठं तु तद्भवेत्[15] ॥ १८४
यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम् ।
कारयेत्स त्वपचयं महान्तं प्राप्नुयाद्ध्रुवम्[16] ॥ १८५
[17]अथ शीर्षविभागार्थं [18]घटी कार्या प्रयत्नतः[19] ।

---

पुष्यवेणुं व्याचष्टे भवेद्वेणुर्दीर्घपर्वेति लक्षणेन लेखा शीर्षविभागा इति यत्र द्विशिरास्त्रिशिरा इत्यादि दृश्यते, यत्र वा

---

1 प - विधिः कार्यः क्रमेणैव 2 भ - जर्जरे तु 3 च - पुष्य द - पुण्य 4 म - दीर्घपत्रस्तु न - नित्यं हि पीतपत्रस्तु 5 ज - वर्तुलः न - मण्डलः 6 न - प्र 7 प - एवं 8 च - महात्मनः ज - च लक्षणे 9 भ - परं 10 भ - दण्डकाष्ठं तु बैल्वं स्यात्कापित्थं वांश्यमेव वा 11 द - सदा ज - काष्ठविधिस्तथा 12 च - वक्रत्वेन 13 न - तु तत्कार्यं 14 च - नैव 15 च - तदुच्यते 16 भ - कारयेत्स तु नानन्दं कदाचित्प्राप्नुयान्नरः 17 न - तथा च प्रतिशीर्षस्य न - तथाशीर्षविधानार्थं 18 भ - किटी 19 भ - स्वमानतः द - तु मानतः

स्वप्रमाणविनिर्दिष्टा द्वात्रिंशत्यङ्गुलानि वै[1] ॥ १८६
बिल्वमध्येन[2] कर्तव्या घटी [3]सिरसमाश्रया।
स्विन्नेन बिल्वकल्केन द्रवेण च समन्विता[4] ॥ १८७
भस्मना वा तुषैर्वापि कारयेत्प्रतिशीर्षकम्[5]।
[6]संछाद्य तु ततो वस्त्रैर्बिल्वदिग्धैर्घटाश्रयैः ॥ १८८
बिल्वकल्केन चीरं तु दिग्ध्वा संयोजयेद्घटीम्।
न स्थूलां [7]नानतां तन्वीं दीर्घां चैव न कारयेत्॥
[8]तस्यामातपशुष्कायां सुशुष्कायामथापि वा।
छेद्यं बुधाः प्रकुर्वन्ति विधिदृष्टेन कर्मणा ॥ १९०
सुतीक्ष्णेन तु शस्त्रेण अर्धार्धं प्रविभज्य च।
स्वप्रमाणविनिर्दिष्टं [9]ललाटकृतकोणकम् ॥ १९१
अर्धाङ्गुलं ललाटं तु कार्यं छेद्यं षडङ्गुलम्।

---

निजशिर एवाच्छाद्य शिरोऽन्तरं प्रदर्श्यते। प्रतिपादप्रतिहस्तादेष एव कल्पः। बिल्वस्य मध्यमज्जा सिरश्च वृक्षत्वगादिः। कथं सा कर्तव्येत्याह स्विन्नेनेति भस्मना तुषचूर्णेन वा सुसमाहिता छादितच्छिद्रेत्यर्थः। न स्थूलामिति गुरुत्वभयात्। नानतामिति पेलवात्, छेद्यमित्यवयवच्छिद्रोत्पादनार्थम्।

---

1 ज - वा 2 ज - कल्केन 3 भ - चरि न - शीर्षे ज - चिर 4 भ - समाहिना प - समन्वितम् 5 ज - प्रतिशीर्षाणि कारयेत् 6 भ - संस्राव्य तान् 7 ढ - न तनुं चैव न मृद्वीं चैव कारयेत् न - न च तां तन्वीं मृद्वीं नैव च (च - न) भ - न तनुं चैव दीर्घां 8 भ - सुशुष्कायां ततस्तस्यामनिलातपयोगतः। छेद्यं बुधाः प्रकुर्वीत लक्षणं कृतिनिर्मितम् ढ - शुष्कायां तु ततस्तस्यामनिलातपयोगतः 9 ढ - ललाटाकृतिकोणजम्

अर्धार्धमङ्गुलं छेद्यं [1]कटयोर्द्व्यङ्गुलं[2] भवेत् ॥ १९२

कटान्ते कर्णनालस्य [3]छेद्यं [4]द्व्यधिकमङ्गुलम् ।

[5]त्र्यङ्गुलं कर्णविवरं[6] [7]तथा स्याच्छेद्यमेव हि ॥ १९३

[8]ततश्चैवावटुः कार्या सुसमा द्वादशाङ्गुला ।

[9]घट्यां ह्येतत्सदा च्छेद्ये [10]विधानं विहितं मया ॥ १९४

[11]तस्योपरिगताः[12] कार्या मुकुटा बहुशिल्पजाः[13] ।

नानारत्नप्रतिच्छन्ना [14]बहुरूपोपशोभिताः ॥ १९५

तथोपकरणानीह नाट्ययोगकृतानि वै[15] ।

[16]बहुप्रकारयुक्तानि कुर्वीत प्रकृतिं प्रति ॥ १९६

यत्किंचिदस्मिन् लोके तु[17] [18]चराचरसमन्विते ।

विहितं कर्म शिल्पं वा [19]तत्तूपकरणं स्मृतम् ॥ १९७

यद्यस्य [20]विषयं प्राप्तं तत्तदेवाभिगच्छति ।

नास्त्यन्तः पुरुषाणां हि नाट्योपकरणाश्रये ॥ १९८

---

अवटुरिति कर्णशष्कुली ।

---

1 न - कटे च 2 ज - त्र्यङ्गुलं 3 भ - तालस्य 4 च - च विधिमङ्गुलम् न - त्वधिकं 5 च - अङ्गुलं 6 भ - विस्तारं 7 न - सदैव 8 भ - तस्य चैवावटः कार्यो समा वै द्वादशाङ्गुला 9 भ - घटीच्छेद्यकृतं ह्येतद्विधानं परिकीर्तितम् 10 विधिसंविहितं मया 11 भ - तस्या उपरिगाः 12 ढ - ततः 13 भ - विविधाश्रयाः 14 भ - गुरु 15 न - युक्तिकृतानि च 16 भ - नानाविधान 17 छ - अथ 18 ज - सचराचरसंज्ञिते 19 प - तद्रूपकरणं भवेत् 20 भ - विषयं प्राप्तं तत्तस्मिन् तत्काचिद्भवेत् । ... करणं प्रति ढ - विषयप्राप्यं स तस्मिंस्त्वधिगच्छति । नान्यतः ... करणाश्रयम् ॥ प - विषयं प्राप्तः स

यद्येनोत्पादितं कर्म शिल्पयोग[1]क्रियापि वा।
[2]तस्य तेन कृता सृष्टिः प्रमाणं लक्षणं तथा॥ १९९
या [3]काष्ठयन्त्रभूयिष्ठा कृना सृष्टिर्महात्मना[4]।
[5]न सास्माकं नाट्ययोगे कस्मात्खेदावहा हि सा॥
यद्द्रव्यं जीवलोके तु नानालक्षणलक्षितम्[6]।
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत्॥ २०१
प्रासाद[7]गृहयानानि नानाप्रहरणानि च।
[8]न शक्यं तानि वै कर्तुं यथोक्तानीह लक्षणैः॥ २०२
लोकधर्मी भवेत्त्वन्या नाट्यधर्मी तथापरा[9]।
[10]स्वभावो लोकधर्मी तु [11]विभावो नाट्यमेव हि॥ २०३
[12]आयसं तु न कर्तव्यं [13]न च सारमयं तथा।
नाट्योपकरणं तज्ज्ञैर्गुरुखेदकरं भवेत्[14]॥ २०४
[15]काष्ठचर्मसु वस्त्रेषु [16]जतुवेणुदलेषु च।

---

महात्मनेति विश्वकर्मणा। विभाव इति भावनामात्रमित्यर्थः।

---

1 च - योगः 2 भ - सा तस्यैव क्रिया कार्या 3 प - कार्णायसभूयिष्ठा कृता भूमिः भ - काष्ठा या च भूयिष्ठा कृता भूमिर्महत्तरा 4 ढ - महत्तरा 5 भ - नाट्ययोगे न सास्माकं 6 भ - संयुतम् 7 ढ - कृत 8 भ - किं ढ - न शक्यानि तथा 9 भ - तथापि वा 10 ढ - प्रभावो प - प्रभवो 11 प - विकारो नाट्यमेव हि 12 न - आयसं न च भ - मृण्मयं न च ढ - लोहादिभिर्न 13 ढ - नगसारमयं न च 14 ज - गुरुत्वात् खेदजं हि तत् 15 भ - जतुकाष्ठमयैर्भाण्डैश्चर्मवेणुदलैस्तथा ढ - जतुकाष्ठचर्मवस्त्रभाण्डवेणुदलैस्तथा 16 छ - तन्तु (तनु?)

नाट्योपकरणानीह लघुकर्माणि[1] कारयेत् ॥ २०५

चर्मवर्म[2]ध्वजाः शैलाः प्रासादा [3]देवतागृहाः ।
हयवारणयानानि विमानानि गृहाणि च[4] ॥ २०६

पूर्वं वेणुदलैः कृत्वा [5]कृतीर्भावसमाश्रयाः ।
[6]ततः सुरङ्गैराच्छाद्य वस्त्रैः सारूप्यमानयेत् ॥ २०७

अथवा यदि [7]वस्त्राणामसान्निध्यं भवेदिह[8] ।
[9]तालीयैर्वा किलिञ्जैर्वा श्लक्ष्णै [10]र्वस्त्रक्रिया भवेत् ॥

[11]तथा प्रहरणानि स्युस्तृणवेणुदलादिभिः ।
जतुभाण्डक्रियाभिश्च नानारूपाणि नाटके ॥ २०९

[12]प्रतिपादं प्रतिशिरः प्रतिहस्तं प्रतित्वचम् ।
तृणैः किलिञ्जैर्भाण्डैर्वा [13]सारूप्याणि तु कारयेत् ॥

---

लघुकर्माणीति येषु क्रियमाणेषु लाघवेन क्रिया संपद्येत ।

तालीयैरिति तालपत्रैः । भाण्डैरिति अलाबुदलखङ्गादिभिः ।

---

1 द - कर्माणि 2 भ - विवर्जं च प्रासादशिबिकास्तथा 3 द - शिखरास्तथा 4 भ - वा 5 न - कृति र्भावसमाश्रया प - ह्याकृतिं स्वाङ्गसंश्रयाम् ज - आकृतीर्भावसंश्रयाः भ - वेषाकृति समाश्रयाः 6 च - नानावर्णैस्ततो वस्त्रैश्छाद्येद्रूपकारणान् द - ततः सुरक्तैः 7 ज - वर्णानां 8 द - तद्विधानमसंभवम् 9 ज - तालीमयैः द - तालीयजैः कीलजैर्वा 10 द - वस्त्रैः न - वस्तु 11 भ - चर्मकाष्ठकृतैर्वापि तृणवेणुदलैरपि । जतुभाण्डकृतैश्चैव नानारूपाणि कारयेत् 12 द - प्रतिपादौ प्रतिशिरः प्रतिहस्तौ प्रतित्वचम् । तृणजैः कीलजै र्भाण्डैः सरूपाणि तु (णीह - प) कारयेत् 13 भ - तद्रूपाणीह

[1]यद्यस्य सदृशं रूपं सारूप्यगुणसंभवम् ।
मृण्मयं [2]तत्तु कृत्स्नं तु नानारूपं तु कारयेत् ॥ २११
[3]*भाण्डवस्त्रमधूच्छिष्टैर्लाक्षयाभ्रदलेन च ।
[4]नागास्ते विविधाः कार्या ह्यतसीशाणबिल्वजैः[5] ॥२१२
नानाकुसुमजातीश्च[6] फलानि विविधानि च ।
भाण्डवस्त्रमधूच्छिष्टैर्लाक्षया वापि कारयेत् ॥ २१३
भाण्डवस्त्रमधूच्छिष्टैस्ताम्रपत्रैस्तथैव च ।
[7]सम्यक्च नीलीरागेणाप्यभ्रपत्रेण चैव हि ॥ २१४
रञ्जितेनाभ्रपत्रेण [8]मणींश्चैव प्रकारयेत् ।
[9]उपाश्रयमथाप्येषां शुल्बवङ्गेन[10] कारयेत् ॥ २१५
विविधा मकुटा दिव्या[11] पूर्वं ये गदिता मया ।
[12]तेऽभ्रपत्रोज्ज्वलाः कार्या [13]मणिव्यालोपशोभिताः ॥

---

मधूच्छिष्टं सित्थकम् ।

---

1 भ - यद्यस्य यादृशं कर्म तद्रूपं गुणसंयुतम् । मृणमयं तमुपाकृत्य यद्रूपं तत्प्रकारयेत् 2 ज - तत्र 3 च - भेण्ड 4 ढ - नगाः 5 ढ - चर्मवर्मध्वजास्तथा 6 न - जात्यश्च 7 भ - नीलीरागेण चान्यैश्च सस्यशाकेन चैव हि ढ - तत्सम्यङ्नीलरागेण 8 भ - भित्तयश्चैव कारयेत् 9 भ - अपाश्रयं तथा चैषां शुक्लभेण्डेन चैव हि 10 प - वङ्गैश्च 11 भ - दीर्घाः 12 भ - ताम्र 13 ड - माणिक्यालोक भ - मणिप्रद्योत

---

* भाण्डः असारं लघु दारु, भेण्ड इति साधुशब्दः स्यात् । 'बेण्ड' इति भाषासु प्रयोगः ।

न शास्त्रप्रभवं कर्म [1]तेषां हि समुदाहृतम् ।
[2]आचार्यबुध्या कर्तव्यमूहापोहप्रयोजितम्[3] ॥ २१७
[4]एष मर्त्यक्रिया[5]योगो [6]भविष्यत्कल्पितो[7] मया ।
[8]कस्मादल्पबलत्वं हि [9]मनुष्येषु भविष्यति ॥ २१८
[10]मर्त्यानामपि नो शक्या विभावाः[11] सर्वकाञ्चनाः ।
नेष्टाः सुवर्णरत्नैस्तु[12] मुकुटा भूषणानि वा[13] ॥ २१९
युद्धे नियुद्धे नृत्ते वा वृष्टिव्यापारकर्मणि ।
गुरुभावावसन्नस्य [14]स्वेदो मूर्छा च जायते ॥ २२०
[15]स्वेदमूर्छाक्लमार्तस्य प्रयोगस्तु विनश्यति ।
प्राणात्ययः कदाचिच्च भवेद्व्यायतचेष्टया[16] ॥ २२१
[17]तस्मात्ताम्रमयैः पत्रै[18]रभ्रकै रञ्जितैरपि ।
भेण्डैरपि मधूच्छिष्टैः कार्याण्याभरणानि तु[19] ॥
एवं लोकोपचारेण स्वबुद्धिविभवेन च ।
नाट्योपकरणानीह बुधः सम्यक् प्रयोजयेत् ॥ २२३

---

1 भ - प्रोक्तमेषां विधानतः 2 ड - विचार्य 3 भ - साधितम् 4 न - एवं च - एवमल्प 5 भ - कृतो 6 भ - भविष्यो यो मयोदितः 7 न - कथितो 8 ढ - यस्मात् ज - तस्मात् 9 भ - मानुषेषु 10 भ - मर्त्यानामल्पशक्तित्वान्न च वागङ्गचेष्टितम् ज - मर्त्यानामपशक्तीनां न चातीवाङ्गचेष्टितम् (ड - भवेद्) 11 न - विभवाः 12 भ - रत्नानि प - रत्नेषु 13 न - च 14 ज - न व्यायतविचेष्टना 15 च मूर्छयाभिहते जन्तौ प्रयोगो न भविष्यति ज - मूर्छास्वेदश्रमार्तस्य 16 ज - चेष्टनात् च - चेष्टिते 17 भ - तस्माद्धि ताम्रपत्रेण मुकुटादि प्रकारयेत् । स्वच्छन्दनीलरागेण अभ्रपत्रेण चित्रितम् 18 न - अभ्रकैः 19 भ - च

[1]न भेद्यं नैव च च्छेद्यं न प्रहर्तव्यमेव च।
रङ्गे प्रहरणैः कार्यं संज्ञामात्रं तु कारयेत्॥ २२४
[2]अथवा योगशिक्षाभिर्विद्यामायाकृतेन वा।
शस्त्रमोक्षः प्रकर्तव्यो रङ्गमध्ये प्रयोक्तृभिः॥
[3]एवं नानाप्रकारैस्तु आयुधाभरणानि च।
नोक्तानि यानि च मया लोकाद्[4] ग्राह्याणि तान्यपि॥
आहार्याभिनयो ह्येष मया प्रोक्तः समासतः।
अत ऊर्ध्वं[5] प्रवक्ष्यामि सामान्याभिनयं प्रति॥२२७

इति भारतीये नाट्यशास्त्रे आहार्याभिनयो
नामैकविंशोऽध्यायः[6]।

सुधामकोक्ता विद्या हस्तलाघवादि माया चक्षुर्बन्धादिका। एनमध्याय-मुपसंहर(न्नभिनये वक्तव्यशेषमा)सूत्रयति आहार्याभिनयो ह्येष इति शिवम्।

आहार्याभिनयाध्याये वृत्तिरेषा यथाक्रमम्।
कृताभिनवगुप्तेन ग्रन्थिस्थानेषु तत्त्वतः॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां
नाट्यवेदविवृतावभिनवभारत्यामाहार्या-
भिनयाध्याय एकविंशः॥

---

1 भ - मोक्तव्यं नायुधं रङ्गे न छेद्यं न च ताडनम्। प्रादेशमात्रं गृहीत्वास्त्रं-स्त्रार्थं शस्त्रमेव च 2 भ - शिक्षायोगेन नाट्येऽस्मिन् विद्यायोग 3 भ - आयुधा-न्येवमेतानि प्रयोज्यानि प्रयोक्तृभिः 4 भ - लोके 5 भ - परं 6 भ - अध्यायो विंशः ज - त्रयोविंशोऽध्यायः य - द्वाविंशोऽध्यायः

श्रीः

# नाट्यशास्त्रम्

## द्वाविंशोऽध्यायः[1]

सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः ।

अभिनवभारती - द्वाविंशोऽध्यायः

भेदेनात्माभिमुखतां नयन्तं भेदकारणम् ।
सामान्याभिनयाकारगर्वमूर्ति शिवं नुमः ॥

इहान्यदित्युपरञ्जकं च अभिनयं चान्याभिनयं समं च तदिति तत्र भवः सामान्याभिनय इति परमार्थः । कोहलमतानुसारिभिर्वृद्धैः सामान्याभिनयस्तु षोढा भण्यते । तथा हि कोहलः—

शिष्टं कामं मिश्रं वक्रं संभूनमेकयुक्तत्वम् ।
सामान्याभिनये यत् षोढा विदुरेतदेव बुधाः ॥ इति ।

तत्र सामान्यमिति साधारणमुच्यते तेन सर्वेष्वभिनयेषु यद्रूपमवशिष्टं पूर्वं नोक्तमवश्यं वक्तव्यं च कविनटशिक्षार्थं तद्येनाध्यायेनाभिधीयते स सामान्याभिनयः, सोऽभिनयेषु सामान्यभूतः साधारणभूतोऽभिनयविषयत्वात् स्ववाच्याभिमुख्यनयनाद्वाभिनय इति व्युत्पत्त्या । तथा हि सात्त्विकस्य हावभावहेलादिना विशेषः पूर्वमनुक्तोऽभिधीयते । विषयश्चैवं 'षडात्मकः शारीरः' (२२-४१) इत्यादिना 'आलापश्च प्रलापश्च' (२२-४९) इत्यादिनाङ्गिकवाचिकयोः ।

ननु 'अङ्गाद्यभिनयस्यैव यो विशेषः' (२५-१) इत्यतः चित्राभिनयात् कोऽस्य विशेषः, उच्यते—तत्र वागङ्गसत्त्वव्यामिश्रत्वेन चित्रता । इह तु

1 भ - एकविंशः जादिषु चतुर्विंशः चय - त्रयोविंशः

प्रत्येकनियतस्यानुक्तस्य विशेषान्तरस्याभिधानमिति। तथा हि तत्र चित्र-शब्दं पठिष्यति 'अनुक्त उच्यते चित्रः' इति (२५-२) तथा (चेह तु) सामान्याभिनयः कामोपचारः, स हि सकलप्राणिवर्गसाधारण आभिमुख्यं नयति च सर्वं जन्तुवर्गमिति वागङ्गसत्त्वलक्षणेन सकलेन सामान्यात्मना चाभि-नयेन अभिनीयत इति। तत्कामोपचारः स्त्रीपुरुषस्वभावः तदवस्थाभेदेनेहाभि-नीयत इति सामान्यभिनयोऽयमध्यायः। अत एवैतदध्यायशेषभूतकामोप-चारप्रतिपादकमेवाध्यायं वैशिकोपचाराख्यं मन्तव्यम्। तथा सामान्यमिति समानानां कर्म सामान्यं च तदभिनयनं च। तत्तेनैकमेवाभिनयं गमयितुं यथासम्भवं बहूनामभिनयानां याभिनयक्रिया एकं तदेवाभिनयक्रिया-रूपं कर्म समानानां सताम्।

नन्वेवमेकत्राभिनये किं बहुभिरभिनयैः। तत्र केचिदाहुः—स्वोपस्थानेषु साध्येषूपस्कारांशो व्यापार इति। तच्चासत्, नहि नाटकादौ सूत्रेष्विवोप-स्कारो युक्तः। स ह्यत्र प्रत्युत दोषाय, यथाह—"काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्"* इत्यादिना। प्रविस्पष्टपराकरणं तत्र निमित्तं स्पष्टार्थेन वाक्यमात्रेण तत्सिद्धेः।

तत्रोक्तं श्रीशङ्कुकादिभिः—इह लोकानुसारिनाट्यात् लोके सुखदुःखाद्या-वेशविवशो वक्ता, तत एव स्तम्भस्वेदादिभिर्बृंहितं अवधानबन्धोऽपि गुण-क्रियादिस्वरूपसाहचर्याभ्याससंस्कृतः(तं ?) शब्दप्रयोगः(गं ?) तदुपचिताङ्गो-पाङ्गविकारसंकीर्णमेव कुर्वाणो दृश्यते—इति।

(१) यत्र त्वसत्यतो वक्तव्यं तदस्य निरुक्तमष्टमेऽध्याये—

विभावयति यस्माद्धि नानार्थार्थप्रयोगतः।
शाखाङ्गोपाङ्गसंयुक्तं तस्मादभिनयः स्मृतः॥

इत्येवमन्तं श्लोकं व्याचक्षाणैः। [न तथा] सामान्यस्य समानीकृत-सकलाङ्गोपाङ्गकर्मणा सतोऽभिनयनं येनालातचक्रप्रतिमता प्रयोगस्य जायते। यथोक्तं 'प्रयोगश्चास्य कीदृश' इति, यद्वक्ष्यते

---

* भामहालङ्कारे, भट्टिकाव्ये च

'शिरोहस्तकटीवक्षोजङ्घोरुकरणेषु तु ।
समः कर्मविभागो यः सामान्याभिनयस्तु सः ॥ (अ २२) इति

(२) सामान्य इत्यनेनाशेषाभिनयविशेषा आङ्गिकादिगना उपलक्षिताः तत्कृतोऽभिनयः । यद्वक्ष्यति—

कृत्वा साचीकृतां दृष्टिं शिरः पार्श्वे नतं तथा ।
तर्जनीं कर्णदेशे च बुधः शब्दं विनिर्दिशेत् ॥ इति (२२-७६)

(३) अत्र हि दृष्टिविशेषः शिरोविशेषो हस्तविशेषश्च संभूयैकमभिनयं प्रत्येकोऽभिनयः संपद्यते। (४) एकैकेन तु शब्दाभिनयस्य कापि मात्रा निष्पद्येत, एवमेव तृतीयपक्षादस्य विशेषः । तत्र हि एकैकस्याप्यभिनयनेऽस्य (संभूतत्वेन) सामर्थ्यम् । (५) तथा विघ्नसंभावना*विहीनसकलसाधारणस्पष्टभावसाक्षात्कारकल्पाध्यवसायसंपत्तये सर्वेषां प्रयोग इत्युक्तम् । (६) तथाभिनय इति तद्विशेषो यत्र उच्यते, स च साधारणरूपः सामान्याभिनयः । तथा हि— प्रकटाक्षप्रेक्षणाद्यं यं यत्नं कुशलं प्रयोक्ता गृह्णाति तेनैव तदुचितशिरःकर्मान्तमस्य संपाद्यम् † इति षोढा गुरुभिर्निदर्शितः ।

वयं तु [न] मन्महे — रसभावाध्याययोर्वागङ्गसत्त्वजास्त(त्त)द्रसभावेषु दर्शितास्ते कथं प्रयोज्या इत्ययमध्यायः। यथा हि किराटगृहाद् गन्धद्रव्याण्यानीय गान्धिकेन समानीक्रियते अस्येयान् भाग इदं पूर्वमिति, एवमत्राध्यायेऽभिनयाः । तत्र शृङ्गारस्य प्राधान्यात् तत्रैवाभिनयानां भागयोगेन पौर्वापर्ययुक्त्या च समीकरणं सत्त्वातिरिक्त इति । तेन सामान्यानां कर्म समानीकरणं भावनप्रायमभिनयविषयं स्वयं चाभिनयरूपं सामान्याभिनयं शृङ्गारमुखेन चान्यदुपनेयमिति । तदेतत्सर्वं हृदये कृत्वा मुनिराह सामान्याभिनयो नाम ज्ञेय इति । नाम्नैव ज्ञातुं शक्योऽन्वर्थत्वादस्येति भावः । तत्तु व्याख्यातम् ।

नन्वेवं तत्र न किंचिदवशिष्यते वक्तव्यमित्याशङ्क्याह्वत्याह सामान्याभिनयो नाम ज्ञेय इति। नामशब्दः प्रसिद्धिद्योतकः । तदयमर्थः—यद्यपि

---

* षष्ठेऽध्याये रससूत्रव्याख्याने सप्तविघ्ना उक्ताः ।

† इदमार्याया विकाररूपं स्यात्—

प्रकटाक्षवीक्षणाद्यं यत्नं कुशलप्रयोगयोक्ता यम् ।
गृह्णाति तेन तु तदुचितशिरःकर्मान्तमस्य संपाद्यम् ॥ इति स्यात् ।

[1]तत्र कार्यः प्रयत्नस्तु नाट्यं सत्त्वे प्रतिष्ठितम् ॥ १

ज्ञेयः [स्थिर]विषये सामान्याभिनयः प्रसिद्धोऽपि वाक्यार्थबलात्, तथापि यो वागङ्गसत्त्वेभ्यो जातः तद्विषयः सामान्याभिनयो व्याख्यातः। तत्रेति विषये तन्निरूपणायामस्माकं प्रयासः कार्य एव। आहार्यो हि यद्यप्यभिनयान्तरेभ्यो न्यूनस्तथापि तस्य सिद्धस्वरूपत्वान्नात्रोपादानम्। आङ्गिकादिक्रियाणां हि पूर्वापरीभूतरूपतया सम्भावनीयवि(शेष)भावनादेकीकारात्मा सामान्याभिनयो यत्नसंपाद्य एव। आहार्यस्य तु तन्मध्ये स्थिरत्वेनावस्थानाद्यत्नसिद्ध एवासौ। अत एवाहार्येऽपि भविष्यति सामान्याभिनयचिन्ता। न तु सर्वथैवास्य तत्र त्यागः। तथा हि "वागङ्गालङ्कारैः" (२२-१४) इति लीलायां, "माल्याच्छादनविलेपनभूषणानां" (२२-१७) इति विच्छित्तौ, "वागङ्गाहार्यसत्त्ववेगेन" (२२-१७) इति विभ्रमे, तस्य सातिशयनिरूपणं भविष्यति।

अन्ये त्वाहुः—आन्तरभावानपेक्ष एवाहार्यो दण्डकमण्डलुवक्षसूत्रादिर्व्रतविशेषादिमात्रं गमयति, न तु भावं कंचित्। उज्ज्वलो हि वेषो न रतिं गमयति नापि मलिनः शुचम्। तदभावेऽपि हि ते भवत एव। औचित्यमात्रं ह्येतद्रतावुज्ज्वलो वेषः, शुचि मलिन इति। ये त्वेते गुणद्रव्यादिबाह्याभिनयाः सुखदुःखादिभावानिश्चयाश्च ते चित्तवृत्तीनां बाह्यार्थानां च कार्यकारणभावस्य नियतव्यक्तित्वाद् भावापेक्षा इति। वागङ्गसत्त्वाभिनया अन्योन्य सहचर्यमाणाः, नत्वेवं तेष्वाहार्य इत्यस्यानुपादानक्रिया। एतच्च न मुनेर्मतमित्यावेदितमस्माभिरुपाङ्गाभिनयाहार्याभिनयाध्याययो (८,२२) रित्यास्ताम्।

नन्वेवं त्रितयनिष्ठो यद्यपि यत्नस्तथाप्यभिहितत्वेन किमिह वक्तव्यमित्याह नाट्यं सत्त्व इति। तुशब्दः सत्त्वशब्दानन्तरं द्रष्टव्यः। सात्त्विके त्वभिनये नाट्यं प्रतिष्ठितम्। रसमयं हि नाट्यं रसे चान्तरङ्गः सात्त्विकस्तस्मात् स एवाभ्यर्हित इति तद्गतमेव वक्तव्यं पूर्वमभिधेयमित्याशयमशेषचिरन्तना आक्षेपपूर्वकं समादधति—त्रिषूद्दिष्टेषु वक्तव्यं वागङ्गसत्त्वेषु नाट्यं प्रतिष्ठितमिति सोऽयमाक्षेपः। प्रतिसमाधानं तु यदि वागङ्गजमेव स्यात् प्रयत्नं विनापि

1 ह - सत्त्वे

सत्त्वातिरिक्तोऽभिनयो ज्येष्ठ इत्यभिधीयते।
समसत्त्वो भवेन्मध्यः सत्त्वहीनोऽधमः स्मृतः॥ २
अव्यक्तरूपं सत्त्वं हि विज्ञेयं भावसंश्रयम्[1]।
यथास्थानरसोपेतं रोमाञ्चास्रादिभिर्गुणैः॥ ३

---

सिद्धिः स्यात्, वागङ्गसत्त्वजोऽसौ सत्त्वे च नाट्यं प्रतिष्ठितम्, सत्त्वं च मनस्समाधानजम्। तस्माद्भूयसा प्रयत्नेन विना (न) सिध्यतीति। एतत्तु चोद्यसममेवोत्तरं सत्त्वस्य हि प्रयत्नाधिक्यमुपयोगीति वागङ्गयोरुपादानमफलमेवेति—अलमनेन।

ननु कोऽत्र हेतुः सत्त्वे नाट्यं प्रतिष्ठितमित्याशङ्क्याह सत्त्वातिरिक्तोऽभिनय इति। सत्त्वमिति सात्त्विकोऽभिनयः, तेन वागङ्ग[सत्त्वा]भिनययोर्यत्रैकत्रैवाभिनये क्रमेण युगपद्वा प्रयुज्यते तत्र परे(रं?) सात्त्विकस्या(न्य)द्वयापेक्षयाधिक्यं भवति। तत्प्रशस्यतमाभिनयक्रिया (ज्येष्ठा) भवति। सुष्ठु सम्यगभिमुखीभावं सौष्ठवं नीतो भवति रसपर्यन्तत्वात्प्रीतेरिति भावः।

अथ सात्त्विकोऽन्यतुल्य एव, तदभिनयनं प्रशस्यं संपद्यते परमिति यावत्। यदि त्वितरापेक्षया सात्त्विको न्यूनस्तर्हि अभिनयक्रिया स्वरूपेणापूर्णा संपद्यत इत्यर्थः। सात्त्विकाभावे ह्यभिनयक्रियानामापि नोन्मीलति। अभिनयनं हि चित्तवृत्तिसाधारणतापत्तिप्राणसाक्षात्कारकल्पाध्यवसायसंपादनमिति, अत एवोक्तं सत्त्वे नाट्यं प्रतिष्ठितमिति।

अव्यक्तरूपमित्यादिकं प्रबन्धं श्रीशङ्कुकादय इत्थं नयन्ति—कस्मात् पुनः सत्त्वं प्रयत्नातिशयमपेक्षते। उच्यते—रामाद्यनुकार्यगतं भावसंश्रयं तद्भावनाप्रकर्षजं रोमाञ्चादिसंपादकं यदान्तरं नाट्यस्य सत्त्वं तदव्यक्तं अस्फुटं केवलं रोमाञ्चादिभिर्गमकत्वाद्गुणभूतैर्विज्ञेयं, अन्यथा हि सुखाद्यभावे कुत एषामुद्भव इत्यहेतुकं स्यात्। तत्र सत्त्वं भावस्य स्थाने प्रसङ्गतो यो मुख्यो रसस्तेनोपेतं, रसेनानुकार्ये च प्रकृष्टेन यत्नेन ज्ञेयं सुखादि तस्य ये रोमाञ्चादयः कार्यास्तत्र-

---

1 च - ज्ञेयं भावरसाश्रयम् भ - भावनाश्रयम्

त्साध्यभावे यतः सत्त्वात्प्रवर्त्यन्ते तन्मयः प्रयोगः कथं प्रकृष्टयत्नमन्तरेण सिध्येदिति तात्पर्यम् । न केवलं [प्रकृत]रोमाञ्चादावभिनये संपाद्ये नटस्य सत्त्वमुपयुज्यते यावदङ्गनानां येऽलङ्कारास्तेष्वपि । तथा हि ते तावत् कटककेयूरादिभ्योऽप्यभि विकारानयनेऽभिनयं (?) रूपलावण्यादिवत् स्तनकेशादिवच्च युवतिरिचमिति प्रतीयते, न त्वभिनेयं तेषां किंचिदस्ति केवलमलङ्कारत्वमेषाम् । न च प्रयोगाभिनिविष्टत्वाद्युवतेरपि प्रयोज्यास्ते प्रयोक्तुं शक्या मनस्समाधानमन्तरेण। तत्र मनसो देहवृत्तित्वात् समाधानं सत्त्वमुपचाराद्देहात्मकम् । देहे हि मनस्समाधातव्यम्, तत ईषद्विकारो भावः स एव प्रौढतायां तदतिशये च हावो हेला च । तथा च भावः तत्र कटकादाविव हेमः स्थितः । तत्र तु मदनानपेक्षी विकारो भावः येनाकामयमानापि तरुणी कामयमानेव लक्ष्यते, तस्यैव तु मदनापेक्षत्वेन प्रौढतायां हेलात्वमेव, यौवने क्रमादुपचीयमाने स्वात्मेन्द्रियमनःस्वास्थ्ये हावः हेला शरीरविकारः धात्वादिवैषम्यात्तु तदवसादे प्रविलय इति हेलातो भावयुक्तो भावते(हावते ?)वेति नानपेक्षितहेत्वन्तरा यौवनकृताः शरीरविकारा अपि प्राधान्येन वक्त्रगात्रगता गुणा इव भावा इव नाभिनयाः । किं त्वीषद्भिद्यमानैर्वागाद्यभिनयैर्मुखरागेण च संभवत्तया प्रतीता अप्रतीता अलङ्कारा उच्यन्ते । तदेतदुक्तमव्यक्तरूपमित्यादिना समाख्याता बुधैर्हेला ललिताभिनयात्मिका (२२-११) इत्यन्तेन । एतेभ्यस्त्वङ्गजेभ्योऽन्ये शीलकृता इति स्वाभाविका दश लीलाद्याः सत्त्वबलेनैव प्रयोज्याः । अन्ये तु निसर्गजत्वेनायत्नजाः सप्त शोभाद्या उक्ताः (२२-३२) । तत्रैते शोभाद्याः स्त्रीगताः पुरुषगताश्चान्ये । सर्वे चैते अतत्स्वभावेनापि नटेन सत्त्वबलात्प्रयोक्तव्या इति बहुप्रद(र्शनविलसितं) व्याख्यानं न ग्रन्थज्ञेभ्यो रोचते ।

तथा हि—किमिदमनुकार्य (र्यगतं ?) कवेः शिक्षार्थमुपदिश्यते, तथानुकर्तृगतं नटस्य (वा) । प्रथमस्तावद्यदि पक्षस्तदव्यक्तरूपं सत्त्वमिति सत्त्वस्य कथं प्रयोक्तरि स्थितिः, सत्त्वाद्भावः समुत्थित इति ह्युक्तम् । नटे च सत्त्वं, अनुकार्ये च भाव इति किं केन संगच्छेत । स्वनुकार्ये च प्रस्तुते प्रागल्भ्य-

माधुर्ये परत्र (पात्र?) गते उच्येते इति किमेतच्च, प्रतिलव(विलय?) क्रमेण भावहावहेलानां परस्परकार्यकरत्वं प्रथमं तावद्व्याख्यानम्, तदप्यसत्। न हि प्रतिसंहारे कारणता कार्यस्य व्यपदिश्यते। न हि पृथिव्यादिभूतानि प्रविल-यतन्मात्राणां कारणानि, तानि चाहंकारस्य, सोऽपि च बुद्धेः, सा च प्रकृतेः, प्रकारो वा तदहङ्करणमिति व्यवहारः। प्रति (संहार इव) प्रकृतेः कार्यदशा-यामपि संभवान्न पूर्वः प्रादुर्भावः तत्कथं कार्यता तदहंकारादेः कारणत्वमेत-दिति चेत् सामानमेतदिहापि। यदि हि भावो हावतां प्राप्तः सोऽपि हेलात्वं च ततो हेला विलीयते। आख्यास्था दोषात् तदा हावः स्थित एव, न हेलया हेला परं कार्यकारणभावव्यवहारस्यावकाशः। किं चेते देहविकाराः प्रयत्नेन निर्वर्त्या इति [साक्षिण इति] यदुच्यते तास्मिन्नाट्यस्य संसारे नाम तदस्ति यत्प्रयत्नेन निर्वर्त्या इति सात्त्विकाद्वैतम्। किं च विभावानुभावव्यभि-चारिव्यतिरिक्तमपि यद्यत्रोपयोगि संभवति तद्वृथैव प्रतिज्ञातं तत्संयोगाद्रस-निष्पत्तिरिति, गीतातोद्यरङ्गादिबलेनेदं व्यवस्थितं सामान्याभिनय इत्याभि-धानात् अनभिनयवत्त्वे चास्य सत्त्वनिर्वर्त्यस्यापि को नाट्ये उपयोगः, कथं च सामान्याभिनयेनेत्यपरामृष्टाभिधानम्। एतत्सर्वं मुनिमताननुप्रविष्टैः परं श्रद्धी-यते नामेत्यास्तां तावत्।

प्रकृतव्याख्यानमुच्यते—इहोक्तं सत्त्वे नाट्यं प्रतिष्ठितं तेन सात्त्विक-भावानुनयो वक्तव्यः तस्य च किंचिदुक्तमिति दर्शयति अव्यक्तरूपं सत्त्वं हि विज्ञेयमिति। इह चित्तवृत्तिरेव संवेदनभूमौ संक्रान्ता देहमपि व्याप्नोति। सैव च सत्त्वमित्युच्यते। तत्र चाव्यक्तं संवित्प्राणभूमिद्वयानिपतितं यत्सत्त्वं तद्भावाध्यायसंश्रयत्वेनैव विज्ञेयम्। तस्य च ये गुणा देहपर्यन्ततां प्राप्ता घर्मरोमाश्र्वादयः तेऽपि तत्रैवोक्ताः किंचित्। यथास्थानमिति यस्य रसस्य यत् स्थानं, तद्यथा शृङ्गारस्य (उत्तमौ) स्त्रीपुंसौ, रौद्रस्य रक्षो-दानवादिः, भयानकस्याधमप्रकृतिः, तदनतिक्रमेण रसेषूपेतं सम्बद्धं तत्सत्त्वम्। भावशब्देनात्र भावाध्यायः(उक्तः)।

अलङ्कारास्तु[1] [2]नाट्यज्ञैर्ज्ञेया भावरसाश्रया[3]:।

एतदुक्तं भवति—चित्तवृत्तिरूपं यत्सत्त्वं तन्मूकायसंक्रान्तप्राणदेहधर्म - तावशाद् भवदपि भावाध्याये रसाध्याये च वितत्य निरूपितमिति पुनः किं तदभिधानेन।

किं तस्य भूसत्त्वस्य रूपं वक्तव्यमित्याह अलङ्कारास्तु नाट्यज्ञैरित्यादि। अयमभिप्रायः—संवेदनरूपात्प्रसृतं यत्सत्त्वं तद्विचारितम्। अन्यत्तु देहधर्मत्वेनैव स्थितं सात्त्विकं, यतः सात्त्विकेष्वेवोत्तमेषु दृश्यते, तत्र स्त्रीणामुत्तमत्वं शृङ्गाररसपर्यन्तमेव, पुरुषाणां तु वीररसविश्रान्तम्। शान्तस्तु प्रधानत्वेन न प्रयोगार्ह इत्युक्तप्रायः। स्त्रीगतेन शृङ्गारेण पुरुषनिष्ठेन वीरेण च सार्वलौकिकः पुमर्थो व्याप्तः। न च सत्त्वमयमुत्तमस्त्रीरूपं विमुच्यान्यत्रामी- चेष्टालङ्कारा विनिवेशं लभन्ते [न] सात्त्विकास्तावद्राजसतामसशरीरेष्वसंभवात्। चण्डालीनामपि रूपलावण्यसंपदो दृश्यन्ते, ननु चेष्टालङ्कारास्तासामपि भवन्त उत्तमतामेव सूचयन्ति स्ववर्गापेक्षया वा संपर्क्लेशादिना। एतदुक्तं भट्टतोतेन—न चालङ्कृतीनामत्र* लक्षणं महदाश्रयमिति—ते च दृष्टाः सन्तः उत्तमेयं शृङ्गारसमुचितेति विभावादिसुविवेकविहीनं व्यभिचारिरूपदशान्तरसंस्पर्शशून्यं विशेषविरहितमेव सामान्यरूपं शृङ्गारमभिनयति(न्ति?), सामान्याभिनया न तु लावण्यादिवदनभिनेया एव(वं?) शरीरविकारा अनुभावा एव तेन विभावानुभावव्यभिचारिसंयोगादित्येवमेवैतत्। एवं पुरुषगता अपि शोभादय उत्साहप्रकृतिरयमित्येतावन्मात्रं गमयन्तः सामान्याभिनया एव। किं च यत्किंचिदङ्गनानां शृङ्गारोचितं चेष्टितमभिनीयते तत्रैव चेष्टालङ्कारा अवश्यमभिनेया इति सामान्यवत्सर्वावस्थानुयायित्वेनाभिनीयत इति (च) सामान्याभिनया एव प्रधानपुरुषस्य शोभादयः, तथैते वागङ्गसत्त्वाहार्याणि स्वभेदसहितानि यथासंभवं संभूयाभिप्रविष्टानि यथा किलिकिञ्चिते विच्छित्तौ विभ्रमे चेति सामान्याभिनया वागङ्गाहार्ययोगेऽपि च सत्त्वप्रधानतया सात्त्विका इत्युक्ताः।

---

1 च - च 2 च - सत्त्वस्था भ - वृत्तज्ञैः 3 क - समाश्रयाः

* न चेष्टालङ्कृतीनां तु—इति स्यात्

यौवनेऽभ्यधिका[1]ः स्त्रीणा विकारा वक्त्रगात्रजाः ॥
आदौ त्रयोऽङ्गजास्तेषां[2] दश स्वाभाविकाः परे[3] ।
अयत्नजाः [4]पुनः सप्त [5]रसभावोपबृंहिताः ॥ ५

एवं तैरेव सामान्याभिनयैः प्रधानप्रमदापुरुषद्वारेण विश्वमेव व्याप्तम् । ते चात्राध्याये वक्तव्याः, तदाह—अलङ्कारास्त्विति तुर्व्यतिरेके, अन्ये भावाध्यय एवोक्ताः, एते तु वक्तव्याः ते तु तत्र नोक्ताः । यत एते केवलमलंकारा देहमात्रनिष्ठाः, न तु चित्तवृत्तिरूपाः । भावसंश्रया इति रतिभावमात्रमभिनयन्तीत्यर्थः । ते हि यौवने उद्रिक्ता दृश्यन्ते बाल्ये त्वनुद्भिन्ना वार्धके तिरोभूताः । यदाह—

यावन्त एते तरुणीजनस्य भावाः समं कुट्टमितादयोऽपि ।
रात्रावदृश्यानिव तान्घटादीन्कामप्रदीपः प्रकटीकरोति ॥ इति ।

वक्त्रगात्रजा इति देहविकारमात्ररूपा एव परं न हि यथा बाष्पादीनामन्तःप्राणभुवि कण्ठरोधादिरूपं लक्ष्यते, तथा चेष्टालङ्काराणाम् गात्राणि(वक्षोनितम्बा)दीनि, वक्त्रं प्राधान्यात् पुनरुपात्तम् । तत्र देहविकाराः केचन क्रियात्मका अपि ते च प्राग्जन्माभ्यन्तरिता भावसंस्कारमात्रेण सत्त्वोद्बुद्धेन देहमात्रे सति भवन्ति, त एवाङ्गजा उच्यन्ते, तथा भावो हावो हेला च । अन्ये त्वद्यतनजन्मसमुचितविशिष्टविभावानुप्रवेशस्फुटीभवद्रतिभावानुविद्धे देहे परिस्फुरन्ति । ते स्वाभाविकाः स्वस्माद्रतिभावात् हृदयगोचरीभूताद् भवन्तीति । तथा कस्याश्चित् कश्चिदेव स्वभावबलाद् भवति, अन्यस्या अन्यः, कस्याश्चित् द्वौ त्रय इत्यादि, अतोऽपि स्वाभाविकाः ।

भावहावहेलास्तु सर्वा एव सर्वास्वेव सत्त्वाधिकासूत्तमाङ्गनासु भवन्ति । तथा शोभादयः सप्त । एवमङ्गजाः स्वाभाविकाश्च क्रियाजन्मानः, अन्ये तु गुणस्वभावाः शोभादयः ते चायत्नजाः । यत्नजाताः क्रियात्मका उच्यन्ते, (इच्छातो) यत्नस्ततो देहक्रियेति हि पदार्थविदः । ततोऽन्येऽयत्न-जाताः । तदेतदाह—आदौ त्रयोऽङ्गजा इति । तेषामलङ्काराणां मध्ये । आदा-

1 भ - ह्यधिकाः न - अभ्यधिकं 2 भ - प्रोक्ताः 3 न - तथा 4 ङ - तथा 5 न - प्रोक्ताभावोप

[1]देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः ।
भावात्समुत्थितो हावो हावाद्धेला समुत्थिता ॥ ६
[2]हेला हावश्च भावश्च परस्परसमुत्थिताः[3] ।
सत्त्वभेदे[4] भवन्त्येते शरीरे प्रकृतिस्थिताः[5] ॥ ७
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन्भाव उच्यते ॥ ८

---

विति प्राच्यवासनानुविद्धदेहमात्रप्रभवित्वात् पूर्वमेव भवन्तीति यावत् । भावोपबृंहिता इत्युभयशेषः । स्वाभाविका अयत्नजा स्वरतिभावेन प्राणिता भवन्ति ।[अनुमति] पुनरिति सत्त्वानां, पुस्तचित्रालेख्यलिखितानामेव नैते भवन्ति । तत्र त्रयाणां तावदुपक्षेपकर्तृ पीठबन्धमाह देहात्मकं भवेत्सत्त्वमिति । शरीरस्वभावं तावत्सत्त्वं संभाव्यते उत्तमशरीरतां प्राप्तमित्यर्थः । ततो भावः ततोऽपि हावः तस्मादपि हेला । एवं तीव्रतरसत्त्वे देह एव । यदा तु तथाविद्धं सत्त्वं न भवति तदा प्राक्तनरतिवासनोत्थं अत्र सहकार्यन्तरमपेक्षणीयं वर्तत इति दर्शयति—

हेला हावश्च भावश्च परस्परसमुत्थिताः ।
सत्त्वभेदे भवन्त्येते शरीरे प्रकृतिस्थिताः ॥ इति

एकश्चशब्दोऽपिशब्दार्थे, अपरः समुच्चये । प्रत्येकं हि समुच्चये द्योत्ये तृतीयोऽपि चः पठितव्यः स्यात् । तदयमर्थः—प्र(कृ)तिस्थिताः देहस्वभावमात्रापेक्षा अप्येते परस्परसमुत्थिता भवन्ति । तथा हि—कुमारीशरीरे प्रौढतमकुमार्यन्तरगतहेलावलोकने सति हावोद्भवो भावश्चेदुल्लासितपूर्वः, अन्यथा हि भावस्यैवोद्भवः । एवं हावेऽपि दृष्टे भावो हेला वा । यदा तु हावावस्थोद्भिन्ना पूर्वं परत्र च हेला दृश्यते तदा हेलातोऽपि हेला । एवं हावाद्धावो भावाद्भाव इति च वाच्यम् । एवं परकीयभावादिश्रवणात् तथाविधे-

---

1 अतः प्रभृति श्लोकपञ्चकस्य पाठक्रमो भिन्नमातृकासु भिन्नतया दृश्यते
2 च - भावो हावश्च हेला च प - हावो भावश्च हेला च 3 भ - समुत्थितः
4 भ - सत्त्वभेदा 5 भ - प्रकृतिर्हि ताः

[[1]भावस्यातिकृतं सत्त्वं व्यतिरिक्तं [2]स्वयोनिषु ।
नैकावस्थान्तरकृतं भावं तमिह निर्दिशेत्[3] ॥] ९
तत्राक्षिभ्रूविकाराढ्यः[4] शृङ्गाराकारसूचकः[5] ।
सग्रीवारेचको ज्ञेयो हावः[6] [7]स्थितसमुत्थितः ॥ १०

याभिधेयरमणीयकाव्याकर्णनादेरपि हेलादीनां भवोधो भवतीति मन्तव्यम् । एतदन्योन्यसमुत्थितत्वम् ।

ननु यद्येते प्रकृतिस्थितास्तत एवाङ्गजास्तत्किमन्यापेक्षणेनेत्याह (वागङ्गेत्यादिना) । वागङ्गमुखरागेणेत्यादिपाठः परं भावाध्यायश्लोको नास्य तुल्योऽर्थस्त्वन्य एव, न तु श्रीशङ्कुकेनार्थ(र्थं ?) एकार्थं मन्तव्यम् । एवं चित्तवृत्तिलक्षणं देहधर्मस्येति सर्वसंमतम् । तस्मादयमर्थः—वागङ्गमुखरागैः सत्त्वेन च लक्षितो भावः वागङ्गसत्त्वविशेष एव बालिकाया भाव इत्युच्यत इत्यर्थः । किमपि विशेषो नेत्याह । किं त्वन्तर्गतं वासनात्मतया वर्तमानं रसाख्यं भावं भावयन्सूययन् किं सर्वस्य नेत्याह कवेः सूक्ष्मसूक्ष्मानपि योऽर्थान् पश्यति तस्य सहृदयस्येत्यर्थः ।

एतदुक्तं भवति—उत्तमाधमरूपे कुमारीद्वितये व्यवहरति (एकायाः) वाक् स्पन्दते चक्षुरादिव्यापारः क्रीडनकावहारखेदजनितमुखवैवर्ण्यं बाष्पादि च पश्यतः हृदयस्य भवति तावद्विशेषोल्लासिनी अभिनयजनितेवानुमातृरूपा अपि तु विशेषाध्यवसायिनी मतिः, महतीयं काचिन्नायिकाभविष्यतीति । तथाविधं यद्वागादेरान्तररतिवासनासद्भावसमुपनतं किंचिद्विशिष्टरूपत्वं स देहविकारविशेषो भावः । चशब्द एक इवशब्दार्थे, अभिनयतुल्यो वागादिभिर्लक्षितो भाव इत्यर्थः ।

तत्रेति तत्पुरुष एव (उत्तमाङ्गना)पात्रलक्षणेन चोद्भूतारकचिबुकग्रीवादेः सातिशयो विकाररूपो धर्मः, अत एव शृङ्गारोचितमाकारं सहृदयासहृदयसर्वजनहृदयं सूचयतीति । हावः—एष हि स्वचित्तवृत्तिं परत्र जुह्वतीं ददतीं तां कुमारीं हावयति । स्थितसमुत्थित इति स्थितः स्वयं समुत्थितः स्वेत्यु(स्वतः?)

1 भ - मातृकायामयं श्लोको न लभ्यते 2 च - च 3 य - निर्विशेत्
4 भ - विकाराभ्यां 5 ड - रससूचकः म - संयुतः 6 न - भावः 7 भ - स्वस्थ

[1]यो वै हावः स एवैषा शृङ्गाररससंभवा ।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥ ११

द्भिद्योद्भिद्य विश्राम्यन् हावः, स तु प्रसरणैकधर्मकः, तथा हि हेला स्यात् , अत एवायं सुकुमारपरिकरसब्रह्मचारीति दर्शितम् । हावावस्थायां यत्स्वयं रतेः प्रबोधनं न मन्यते केवलं तत्संस्कारवशात्तथाविकारान् करोति । यैर्दृष्टा तथा कल्पयति । यदा तु रतिवासनाप्रबोधात्तां प्रबुद्धां रतिमभिमन्यते केवलं समुचितविभावोपग्रहविरहान्निर्विषयतया स्फुटीभावं न प्रतिपद्यते तदा तज्जनितो देहविकारविशेषो हेला । 'हिल भावकारण' इति (धातुपाठे) पठ्यते । भावस्य संबन्धादिति या प्रसरता वेगवाहित्वमित्यर्थः । वेगेन गच्छत् हेलतीत्युच्यते लोके । तदाह शृङ्गारेति । शृङ्गाररसो रतिः ततो हृदये स्थिता या हेला संभवतीत्यर्थः । तथा शृङ्गारस्य रस(स्य?)मानतायां यादृक्साधारणमिव रूपं तस्य संभवः संभावना या स्यात् सामाजिकशृङ्गाररसास्वादसदृशरूपैव संभावना चमत्कारमालप्राणा । तथा हि तस्या यावद्विषयार्जनं किंचिदवभाति विभावविशेषापरिस्फुरणादिति वरसुन्दर(रूपोत्कीर्ण) ग्रावकल्पशैशवदशोत्तीर्णतारुण्योन्मीलना अत एव ललिता चेष्टा अभिनयरूपतामिव अस्यां विकारावेशातिशयवशात् न प्रतिलभते । क्रमेणोदाहरणान्येषाम्—

उत्तालालकभञ्जनानि कबरीभारोऽथ शिक्षारसो
दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः ।
तिर्यग्लोचनवल्गितानि वचसां छेकोक्तिसंक्रान्तयः
स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलीक्रमः ॥ (विद्ध १)

स्मितं किंचिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनयविलासोक्तिसरसः ।
गतानामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः ॥

1 च - य एव, न - य एष भ - यो वै भावः स एवैषां

लीला विलासो[1] विच्छित्तिर्विभ्रमः किलिकिञ्चितम्[2] ।
मोट्टायितं कुट्टमितं[3] विब्बोको[4] ललितं[5] तथा ॥ १२
विहृतं चेति विज्ञेया[6] दश स्त्रीणां[7] स्वभावजाः ।
[8]पुनरेषां स्वरूपाणि प्रवक्ष्यामि पृथक्पृथक् ॥ १३

---

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥

अत्र हि भावान्तर्गतरतिप्रबोधमात्रमुक्तम् । न त्वभिलाषः शृङ्गार इति मन्तव्यम् । तत्परं ब्राह्मणस्योपनयनमिव भविष्यत्समस्तपुरुषार्थसद्मपीठबन्धत्वेन योषितां परमो ह्युत्सवः लोकोत्तरोऽलङ्कारः सातिशयमानन्दस्थानं परं पवित्रमित्युपश्रूयते । यद्यपि चैते पुरुषस्यापि भवन्ति तथापि योषितां त एवालङ्कारा इति तद्गतत्वेनैव वर्णिताः । पुंसस्तूत्साहवृत्त्यात एव परमालङ्काराः, तथा च सर्वेष्वेव नायकभेदेषु धीरत्वमेव विशेषणतयोक्तम् । तदाच्छादितास्तु शृङ्गारादयः धीरललित इत्यादौ ।

एवं त्रीनङ्गजान् व्याख्याय स्वाभाविकान्दशोद्दिशति लीला विलास इत्यादिना । विशिष्टविभावलाभे रतौ सविशेषत्वेन स्फुटीभूतायां तदुपबृंहणकृता देहविकारा लीलादयः शाक्याचार्यराहुलकादिभिर्यन्मतं विशेषसौक्ष्म्यादनुपलक्ष्य हेलाहावादीन् लीलादिमध्य एव पठद्भिश्चेष्टैवालङ्काराभूतेति, एतावन्मात्रे विश्रम्य सामान्येन चेष्टा अलङ्कार इति, तदयुक्तम् ।

---

1 च - विलासौ  2 न - किञ्चितः  3 न - कुट्टिमितं  4 ढ - बिम्बोको  5 ड - बिब्बोकललिते  6 भ - संप्रोक्ता च - संयुक्ता  7 भ - स्त्रीषु  8 ज - अलङ्कारास्तथैतेषां लक्षणं शृणुताञ्चितम् (ड - शृणुत द्विजाः)

वागङ्गालङ्कारैः शिष्टैः प्रीतिप्रयोजितैर्मधुरैः ।
ग क
इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः ॥ १४
स्थानासनगमनानां [1]हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः[2] स तु विलासः स्यात् ॥ १५
माल्याच्छादनभूषण[3] विलेपनानामनादरन्यासः ।
स्वल्पोऽपि परां[4] शोभां [5]जनयति [6]यस्मात्तु विच्छित्तिः

---

अत्रैषां दशानां क्रमेण लक्षणान्याह वागङ्गालङ्कारैरिति । प्रियतमगतैः प्रीत्या तं प्रति बहुमानातिशयेन स्वात्मनि योजितैः मधुरैः सुकुमारैः न तु तदीयैरेवोद्धतैः मधुरैरपि विशिष्टैः न तु कल्पितत्वेनाभिमानैः अत एवानुकृतिनोद्धट्टकरूपेणाविकृतं(तः?) बहुमानः स्वात्मनि तत्स्वात्मीकरणेन । एते च दश प्राप्तसंभोगत्वेऽपि भावयन्त्येव । शोभादयस्तु सप्त भाविनोप्राप्तसंभोगतायामेव । एतान् लीलादीन् कवयो लोकवाचोऽत्र कीदृशा साङ्कर्येण प्रयुञ्जते । यथा—"गतेषु लीलाञ्चितविभ्रमेषु" (कुमा १-३३) इति । 'तत्रोपचारोऽन्वर्थत्वं लौकिकी प्रसिद्धिर्वा प्रमाणीकर्तव्या । तन्त्वज्ञैरेवं पठितव्यम्—"गतेषु लीलाञ्चितसुन्दरेषु" इति, तदसदिति भट्टेन्दुराजशिष्याः, यतो ये लीलाविभ्रमप्रभृतयो भविष्यन्त्यस्तदुचिततया तदानीं शिक्ष्यत इव । व्याहृत्य नीयते स हि [अभिनय] प्रयोगकालो लीलादेरिति विनयस्य तु राजहंसकर्तृत्वमुत्प्रेक्ष्यते ।

स्थानासनेति स्थानमूर्ध्वता, आसनमुपविष्टता ।

स्थानकादावप्रयत्नशिक्षितमपि शृङ्गारबलादुपनीय तद्रूपं विलासः, श्लिष्ट इत्यनुल्बणम् । यथा—

बाळे डअंणस्सु विमण्णमआसणु(?)—इत्यादौ ।

स्वल्पोऽपि परामित्यल्पतयैव परां शोभां जनयति सौभाग्यगर्वमहिमा ह्यसौ । यथा—

---

1 च - नेत्रभ्रूवक्त्र  2 भ - विक्लिष्टः  म - यः क्लिष्टः  3 ड - विभूषा
4 ड - अधिकां  5 च - नयति हि यत्सा तु  6 भ - सा स्यात्तु,  ड - या सा तु

विविधानामर्थानां वागङ्गाहार्यसत्त्वयोगानाम्[1] ।
मदरागहर्षजनितो[2] [3]व्यत्यासो विभ्रमो ज्ञेयः ॥ १७

स्मितरुदितहसितभय[4]हर्षगर्वदुःखश्रमाभिलाषाणाम्[5]
[6]सङ्करकरणं हर्षादसकृत् किलिकिञ्चितं ज्ञेयम् ॥ १८

---

कच उपरब्भउ सस्सर इसिणिअत्थ(?)—इत्यादौ ।

यत्तु "सरसिजमनुविद्धं शैवलेनापि रम्यं (शाकु)—इत्युदाहृतं तदसत् । न ह्यत्रानादरन्यासः सौभाग्यगर्वकृतः, अपि तु तपस्विसमुचितवेषपरिग्रहण-प्रायमित्यलम् ।

विविधानामिति योगो भेदः तेन वागादिभेदेन बहुभेदानां च बहूनां च (अर्थानां) योऽन्यथा निवेशः पूर्ववत्सौभाग्यगर्वकृतः (स) विभ्रमः, तद्यथा, वचनेऽन्यथावक्तव्येऽन्यथाभाषणम्, हस्तेनादातव्ये पादेनादानम्, रशनायाः कण्ठे न्यासः इत्यादि । मद्येन कृतो रागः प्रियतमं प्रत्येव बहुमानो हर्षः । सौभाग्यगर्वो यथा—

चिरिअ बन्धिअ निच्चिप्पटणिच्चिअ बद्धजम्म अदेसि सहि ।
सोहग्गमत्थि एक्के चिअरिअ किप्पिण [वेण] णाहिणेवउ(?) ॥

स्मितरुदितहसितेति सङ्करेण संकीर्णतया हर्षाद्दर्वाद्यत्संकरणम् । यथा—

मह···तिमळळमकळति हळहळन्ति सप्पादिओ

(व) छवचर इव इ अणेकत्ति (?) इत्यादौ ।

अत्र हि गर्वश्रमदुःखस्मितरुदितहसितानि देशीपदैः क्रमेणोक्तानि ।

---

1 प - वेगेन य - युक्तानाम् 2 ज - जनितहेलो 3 च - योऽतिशयो विभ्रमः स मतः (ज - प्रोक्तः) 4 च - रोष ड - रोषमोह भ - हर्षदुःख 5 ड - षङ्गाणाम् 6 च - सङ्कट

इष्टजनस्य कथायां लीलाहेलादिदर्शने वापि[1] ।
तद्भाव[2]भावनाकृतमुक्तं मोट्टायितं नाम ॥ १९
केशस्तनाधरादिग्रहणादति[3]हर्षसंभ्रमोत्पन्नम् ।
[4]कुट्टमितं [5]विज्ञेयं सुखमपि दुःखोपचारेण ॥ २०
इष्टानां भावानां प्राप्तावभिमान[6]गर्वसंभूतः ।
स्त्रीणामनादरकृतो [7]बिब्बोको नाम विज्ञेयः ॥ २१
[8]हस्तपादाङ्गविन्यासो भ्रूनेत्रोष्ठप्रयोजितः ।
सौकुमार्याद्भवेद्यस्तु ललितं तत्प्रकीर्तितम् ॥ २२

---

इष्टजनस्येति कथने दर्शने वा कान्तस्य यदुत्पद्यते योषितो लीलादि तद्भावभावनवशान्मदनाङ्गमर्दपर्यन्तं तदङ्गमोडनान्मोट्टायितम् । यथाह—

सिइऊणथणसक्कियहत्थऊरू ।—*इत्यादौ ।

केशस्तनाधरग्रहणादिति प्रियतमेनेति शेषः । यथा—

देशिखणंमि णअथणहिअइआपडि अपुणहे तिहिं अज्ज—
णहरग्गस उकि किं दुरपसमहणाहलहबंधाहिं । *इत्यादौ ।

इष्टानामिति वस्त्रालङ्कारादीनामिति अनादरकृत इति तद्विषय एव योऽनादरकृतस्तद्बहुलम् (बिब्बोकम् ?) । यथा—चन्दघासि नामकोप्पेस स तु किं दु आविळं उइआ को चण्ड । *इत्यादौ ॥

हस्तपादाङ्गविन्यास इति कर्तव्यवशादायत एव हस्तादिकर्माणि यद्वैचित्र्यं स विलासः । ललिते तु यत्र बाह्यव्यापारयोग एव न किंचिदस्ति नादातव्यबुद्धिः । अथ च सुकुमारकरव्यापारणं न दुष्टस्य किंचित्, अथ च

---

1 भ - हेलालीलाभिदर्शने स्याताम् 2 भ - भावनकृते मोट्टायितमित्यभिस्यातम् 3 भ - आदिषु ग्रहणेष्वति ड - ग्रहणेष्वति 4 ड - कुट्टिमितं 5 भ - अनवद्ते सुखं तु 6 च - गर्भ ज - गर्ह 7 भ - बिम्बोको 8 २२, २४ श्लोकौ भ - मातृकायामेव दृश्येते

* प्राकृतभागोऽस्पष्टार्थः

[करचरणाङ्गन्यासः सभ्रूनेत्रोष्ठसंप्रयुक्तस्तु ।
सुकुमारविधानेन स्त्रीभिरितीदं स्मृतं ललितम् ] ॥
वाक्यानां प्रीतियुक्तानां प्राप्तानां यदभाषणम् ।
व्याजात्स्वभावतो वापि विहृतं नाम तद्भवेत् ॥ २४
[प्राप्तानामपि वचसां क्रियते यदभाषणं ह्रिया स्त्रीभिः ।
व्याजात्स्वभावतो वाप्येत[1]त्समुदाहृतं विहृतम् ॥] २५
शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च ।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः ॥ २६
रूपयौवनलावण्यैरुपभोगोपबृंहितैः ।
अलङ्करणमङ्गानां शोभेति परिकीर्तिता[2] ॥ २७

---

तारादिकर्मेति विशेषः । यथा—

कि अणि लोपळळविअरुपकिसारे इचच्चा ए स वहुमजात्ति......भराबहु-खिसिदुपुणाखिळळविळूण अ अणळळहिखणु अ ॥ *इत्यादि ।

अन्ये तु 'लड विलास' इति (धातु)पाठं प्रमाणयन्तो विलासमेव सातिशयं ललितसंज्ञं मन्यन्ते ।

वाक्यानां प्रीतियुक्तानामिति । प्राप्तानामित्यवसरलाभेन कथने योग्यानामित्यर्थः । स्वभावत इति मौग्ध्याद्बाल्यादन्यचित्तत्वाद्वा ।

व्याजादिति । व्याजादिभिर्मौग्ध्यादिभिः प्रख्यापनातिशयेनेत्यर्थः । तत्प्रख्यापनमपि कासांचित् स्वभाव एव । यथा कविभिस्तु......ळिळाळिकरान्ति अ इच्छिहि पुणच्छ मरणुकरान्ति अ*—इत्यादौ ।

अथायत्नजा इति । शोभाकान्तिरित्यादि । एषां क्रमेण लक्षणानि । रूपयौवनलावण्यैरिति । तान्येव रूपादीनि पुरुषेणोपभुज्यमानानि छायान्तरं

---

1 द - ह्येतत् 2 द - यत् सा शोभेति भण्यते

* प्राकृतभागोऽस्पष्टार्थः

विज्ञेया च तथा कान्तिः शोभैवापूर्णमन्मथा।
कान्तिरेवाति[1]विस्तीर्णा दीप्तिरित्यभिधीयते॥ २८
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च[2]।
अनुल्बणत्वं चेष्टाया[3] माधुर्यमिति संज्ञितम्॥ २९
चापलेनानुपहता [4]सर्वार्थेष्वविकत्थना[5]।
स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते[6]॥ ३०
प्रयोगनिस्साध्वसता प्रागल्भ्यं समुदाहृतम्।
औदार्यं प्रश्रयः प्रोक्तः सर्वावस्थानुगो बुधैः॥ ३१

---

श्रयन्ति। सा च्छाया मन्दमध्यतीव्रत्वं क्रमेण संभोगपरिशीलनादाश्रयति शोभां कान्तिं दीप्तिं चेत्यर्थः। आ समन्तात् पूर्णो मन्मथ इति कामोपभोगो हेतुर्यस्याः सा इत्यर्थः। अन्यस्तु (अ)पूर्णमन्मथेति व्याचक्षाणः कान्तिदीप्तिशोभानां क्रमेण सातिशयत्वमाह। तच्चोपक्रमविरुद्धमित्युपाध्यायाः।

दीप्तेष्विति क्रोधादिषु। चशब्द इवार्थे ललितेषु रतिक्रीडादिषु यथामासृण्यं चेष्टायास्तथा दीप्तेष्वपि यत्तन्माधुर्यम्।

सर्वार्थेष्विव रूपयौवनादिषु वर्गत्वाच्चेयं क्रिया रूपेभ्यः पृथगेव धीरता पठिता। प्रयोग इति कामकलादौ चातुःषष्टिक* इत्यर्थः। यथाहुः—

अन्यदा भूषणं पुंसः शमो लज्जेव योषितः।
पराक्रमः परिभवे प्रागल्भ्यं सुरतेष्विव॥ इति।

यत्त्वनुकर्तृविषयमेतदित्यन्यैर्व्याख्यातं तत्पूर्वमेव दूषितम्। सर्वास्वमर्षेर्ष्याक्रोधाद्यवस्थास्वपि यत्परुषवचनाद्यनुदीरणं तदौदार्यम्। चित्तवृत्तिस्वभावा

---

1 ज - अथ 2 भ - वा 3 भ - चेष्टायां 4 य - सर्वावस्थेष्वविकत्थना ("नवाक्षरपादो भुरिचि") 5 च - अनुकत्थना 6 च - संज्ञितम्

---

* बाभ्रवीयोक्ता आलिङ्गनादिचतुःषष्टिकला वात्स्यायनेन सांप्रयोगिकेऽनूदिताः।

अपि केचिदेते विभावजन्यत्वाभावाद् भाववर्गे न पठिताः रसान् प्रति भावकत्वाभावाच्च (इत्याहुः)। तच्चैतदयुक्तम्। शोभाकान्तिदीप्तयः ता बाह्यरूपलावण्यगता एव विशेषाः आवेगचापलत्रासामर्षा भावा एव। माधुर्याद्या न चित्तवृत्तिस्वभावा इति क एषु भावत्वाशङ्कावकाशः इत्यभावोऽपि भावान्तरतया तद्विशेषणतया प्रतिभासगोचर इति अतो भावरूपतैवेति चेदस्तु नामैवम्। तथाप्यलङ्कारत्वात्, सामान्याभिनयरूपत्वात्, बाह्यशरीरनिष्ठतापर्यवसानात्, शृङ्गारैकमात्रविषयत्वाच्च, अशेषरसाविषयत्वात्, व्यभिचारिवर्गात् पृथक्त्वेनैषामभिधानम्।

[न च] एतावत एवैत इत्यत्र नियमो विवक्षितः। तेन मौग्ध्यमदभावविकृतपरितपनादीनामपि शाक्याचार्यराहुलादिभिरभिधानं* विरुद्धमित्यलं बहुना।

---

* राहुलादिभिरिति, आदिशब्देन पद्मश्रीसागरनन्दिमातृगुप्तप्रभृतये गृहीताः। तन्मते मौग्ध्यं यथा—

बाल्ये गते वचोभङ्गी रामाणां कान्तसन्निधौ।
हारिमौक्तिकमयी या तु तन्मौग्ध्यं परिकीर्तितम्॥

मदो यथा—

तारुण्यातिशयोद्भूतः सुरापानविशेषितः।
विकारबहुलो यस्तु तं वदन्ति मदं बुधाः॥

भावो यथा—

कान्तस्य दृष्टिपथतस्तिरोधातुमिवेच्छति।
लज्जयाधोमुखी मुग्धतिर्यग्विक्षिप्तलोचना॥
प्रियं पश्यत्यतिशयजातरोमाञ्चकञ्चुका।
तत्क्षणोद्भूतमदनाचार्यशिक्षोपदेशतः॥
यत्तस्यां जायते चेष्टा स भावः शाक्यसंमतः॥

विकृतम्—

वचसा प्राप्तकालेऽपि प्रियया नाभिधीयते।
क्रियया यदनुष्ठानं विकृतं तदुदाहृतम्॥

परितपनम्—

क्षणमात्रमदृष्टे या प्रिये सन्तापसन्ततिः।
विरहोत्थेव कामिन्याः परितापः स कथ्यते॥

आदिशब्देन विक्षेपकेलिव्याजप्रतिभेदनादय ऊह्याः।

सुकुमारे भवन्त्येते प्रयोगे ललितात्मके ।
विलासललिते हित्वा दीप्तेऽप्येते[1] भवन्ति हि ॥ ३२

शोभा विलासो माधुर्यं[2] स्थैर्यं गाम्भीर्यमेव च ।
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ॥ ३३

दाक्ष्यं शौर्य[3]मथोत्साहो नीचार्थेषु जुगुप्सनम्[4] ।
उत्तमैश्च गुणैः [5]स्पर्धा यतः शोभेति सा स्मृता ॥ ३४

[6]धीरसंचारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता ।
[7]स्मितपूर्वमथालापो विलास इति कीर्तितः[8] ॥ ३५

[9]अभ्यासात्करणानां तु श्लिष्टत्वं यत्र जायते ।
महत्स्वपि विकारेषु तन्माधुर्यमिति स्मृतम् ॥ ३६

---

अथैषां सामान्याभिनयत्वमुपपादयितुमाह सुकुमारे भवन्त्येत इति । ललितात्मके प्रयोगे प्रयुज्यमाने शृङ्गारे यः सुकुमारोऽन्योन्योपसंभोगविप्रलम्भादि भेदः । तत्र सर्वत्रैते न भवन्ति । न ह्येतच्छून्यमङ्गानां चेष्टितं प्रयोगार्हम् । योऽपि तत्र शृङ्गारे ईर्ष्यामर्षदीप्तिप्रकारस्तत्रापि विलासं ललितं च वर्जयित्वा अवश्यमन्येषां क्रमयौगपद्यादिना संभव इति शृङ्गारभेदेषु साधारणभूतो योऽभिनयस्तेन सामान्याभिनयतास्य युक्तेति तात्पर्यम् ।

अथ पुरुषगतानुद्दिश्य लक्षयति शोभा विलास इत्यादि । यतः शरीरविकाराद् दाक्ष्यादि गम्यते सा शोभेति संबन्धः । गोवृषभः उत्तमा गौः ।

महत्स्वपि विकारेष्विति युद्धनियुद्धव्यायामादिष्वभ्यासकृतं, करणानां

---

1 प - दीप्तेष्वेते 2 ढ - धैर्यं 3 ड - तथा 4 च - जुगुप्सितम् 5 ड - सन्धा 6 ड - स्थिर भ - वीर 7 ढ - स्मृतपूर्वं तथा वाचो ज - स्मितपूर्वस्तथा भ - मितं दन्तप्रभालक्ष्यं 8 भ - स स्मृतः 9 भ - स्वभावाच्चक्षुरादीनां लीनत्वं यत्र जायते

धर्मार्थकामसंयुक्ताच्छुभाशुभसमुत्थितात् ।
व्यवसायादचलनं स्थैर्यमित्यभिसंज्ञितम् ॥ ३७
यस्य प्रभावादाकारा[1] हर्षक्रोधभयादिषु ।
भावेषु नोपलक्ष्यन्ते[2] तद्गाम्भीर्यमिति स्मृतम् ॥ ३८
अबुद्धिपूर्वकं[3] यत्तु निर्विकारस्वभावजम्[4] ।
[5]शृङ्गाराकारचेष्टत्वं ललितं तदुदाहृतम्[6] ॥ ३९
दानमभ्युपपत्तिश्च[7] तथा च प्रियभाषणम् ।

---

करचरणादिक्रियाणां श्लिष्टत्वं अनुल्वणत्वं यत्र शरीरविकारो स माधुर्यम् । नटगतमेतदिति त्वसत् प्रक्रमविरोधात्, प्रयोक्तृगुणानां च प्रकृत्यध्याये भूमिकाविकल्पाध्याये च (अ ३५, ३६) वक्ष्यमाणत्वात् ।

धर्मादयो यस्य फलं स तैः संयुक्त इत्युक्तम् । शुभाशुभसमुत्थितादिति । शुभसंकल्पजा अशुभसङ्कल्पजाश्च । अशुभादपि हि सङ्कल्पोऽस्थिरान्निवर्तते । यथैलश्चातुर्वर्ण्यस्य सर्वस्वहारादर्थफलाद्याशयात् ।

अन्ये तु वीरस्यैतदनुचितमिति मत्वान्यथा व्याचक्षते शुभाशुभयोः समुत्थित इति । तेन यच्छास्त्रोक्तमुचितं चारभ्यते । तत्र क्रियमाणे (शुभं) सुलभतयार्थलाभः, अशुभं क्षयव्ययादिरूपकमस्तु तथापि तद्विषयाध्यवसायादविचलनं स्थैर्यं देहविकाररूपमेव ।

आक्रियते चित्तवृत्तिरेभिरित्याकारः, मुखरागदृष्टिविकारादयः । तेष्वपि चासत्सु कारणसामग्र्यव्यभिचरितफलेति हर्षादिसंभवेऽपि यत्कृतस्तत्कृतमुखरागाद्यभावः स एव निस्तिमितदेहस्वभावो गाम्भीर्यम् ।

परजनविषयं दानादि चेष्टाविकाररूपमेवौदार्यम् । स्वग्रहणन्तु लोकोक्तिमनादररूपरूपान्तु भयं नोदाहार्य(नौदार्य)मेव स्फुटयति । अभ्युपपत्तिः परि-

---

1 ढ - आकारे रोषहर्ष भयादिषु । भावेषु नोपलभ्यं यत् ढ - आकारो 2 च - लभ्यन्ते 3 ज - पूर्वजं 4 भ - मण्डनं निर्विकारजम् च - सुकुमारः स्वभावतः ज - सुकुमारस्वभावजम् 5 भ - शृङ्गारसूचकं चैव 6 ज - प्रकीर्तितम् 7 ढ - अवपात्तिः

[1]स्वजने च परे वापि तदौदार्यं प्रकीर्तितम्[2] ॥ ४०
अधिक्षेपावमानादेः[3] प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ४१
[4]सत्त्वजोऽभिनयः पूर्वं[5] मया प्रोक्तो द्विजोत्तमाः ।
शारीरं चाप्यभिनयं व्याख्यास्याम्यनुपूर्वशः ॥ ४२
षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा ।
शाखा नाट्यायितं चैव निवृत्त्यङ्कुर एव च ॥ ४३

---

त्राणाद्यर्थिनोऽङ्गीकरणम् । परेणेति शत्रुणा, न तु गुरुणा मित्रादिना वा । प्राणात्ययेऽपीति न तु नीत्यनुवर्तनेन कथंचित् देशकालाद्यनुवर्तनेन सहनपूर्वकं निर्यातनम् । तथा च ममैव श्लोकः—

मूर्ध्ना कंचन पार्थिवं धृतव्रता च्छिद्रैः प्रविश्यान्तरं
स्वं रूपं विनिगूह्य तापमतुलं दत्त्वा चिराद् भ्रंशितः ।
यश्चङ्कुर्जडरूपतापरिचितो नोत्थेव वन्हे त्वया
तन्मन्येऽत्र कथासु तिष्ठति परं निर्वन्ध्यतेजस्विता ॥ इति ।

सात्त्विकः पूर्वमुक्त इत्यर्थस्यास्य केचिच्छङ्काशमनं प्रयोजनमाहुः—एवं हि शंक्यते सात्त्विकप्रसङ्गेन कस्माद्रोमाञ्चादयो नोक्ता इति; तद्वारणार्थमाह पूर्वमिति भावाध्याय एव ते निरूपिता—इति । अयं च नार्थः, यतः सत्त्वे नाट्यं प्रतिष्ठितं, अतो वागङ्गसत्त्व इत्यत्र पश्चान्निर्दिष्टः सात्त्विकः सामान्याभिनयो यस्मात् पूर्वमिति आदौ प्रोक्तः ततो हेतोर्यद्विलोमक्रमेण अनुपूर्वशः आनुपूर्व्यं क्रमप्राप्तं तेन क्रमेण शारीरं सामान्याभिनयं वक्ष्यते । सत्त्वानन्तरं हि विपरीतवृत्त्या आङ्गिकस्यानन्तर्यं वागङ्गसत्त्व इति । (शारीरमित्यादि) अत्र चशब्दो यस्मादर्थे, अपिशब्दस्तत इत्यत्रार्थे । तत्रोद्देशमाह—षडात्मकास्त्विति ।

---

1 भ - स्वे जने वापरे 2 ज - इति स्मृतम् 3 च - अपमानादेः भ - अवमानाद्यैः 4 च - सत्त्वतोऽभिनयः 5 च - मयोक्ता (क्तो ?) द्विजसत्तमाः

नाना[1]रसार्थयुक्तैर्वृत्तनिबन्धैः[2] कृतः सचूर्णपदैः[3]।
प्राकृतसंस्कृतपाठो[4] वाक्याभिनयो बुधैर्ज्ञेयः॥ ४४

यः पूर्वं शारीरोऽभिनयो बहुना प्रकारवैचित्र्येणोक्तः तस्यावान्तरसामान्याभिनयरूपा हि षड् भवन्तीति, स एव षडात्मकतयाऽवान्तरजातियोगात् सात्त्विकवाचिकाभिनयैश्च संभूय क्रमतां प्राप्तैश्च व्यामिश्रतायां सामान्याभिनयः संपाद्यत इति तुशब्दस्यार्थः। (वाक्यमिति) वाक्यसहचरितः शारीरोऽभिनयो वाक्यम्। न हि शरीराभिनयमध्ये च निर्वर्तकानि गणितानीति चिरन्तनाः।

शारीरस्वरा (अ २८) इति यद्व्यवहाराद्वा भावश्च शारीरत्वेन प्रसिद्धे वाक्यमेवाभिनयान्तरनिरपेक्षमिति, सद्वृत्तभाषागुणः स्फुटतमां स्वार्थप्रतीतिं यदा विधत्ते तत एव रसभावानुभावकं तदा तदेव वाक्याभिनय इति तु काव्यकौतुकग्रन्थः। अत्र तु पाठ्यरूपः सामान्याभिनयः कथमिति चिन्त्यम्। शरीरानुप्रवेशादितिचेत् त्वरितानपेक्ष (तदितरानपेक्ष ?) एव। न चाभिनयशून्याभिनेयकाव्ये वाक्यं किंचिद्भवति। न चाभिनेये वाक्याभिनयव्यवहार इत्युपाध्यायेनायमेकीयोऽभिप्रायो दर्शितः न त्वस्यायं स्वपक्ष इति भ्रमितव्यम्।

तत्र वाक्याभिनयस्य लक्षणमाह—

नानारसार्थयुक्तैर्वृत्तनिबन्धैः कृतः स चूर्णपदैः।
प्राकृतसंस्कृतपाठो वाक्याभिनयो बुधैर्ज्ञेयः॥ इति।

नानारसविशेषो वाक्यार्थः तेन युक्तानि वाक्यानि यानि तानि च वृत्तरचितानि चूर्णपदात्मकानि वा पुनरपि संस्कृतानि वा प्राकृतानि वा तैर्युक्तः सहचरितः शारीरो वाक्येन सहैव प्रयुज्यमानः शारीरो वाक्याभिनय इति यावत्। प्राकृतः संस्कृतश्च पाठोऽस्मिन्निति बहुव्रीहिः स चायं वाक्याभिनयश्चतुर्धा संस्कृतप्राकृतयोर्गद्यपद्यभेदात्।

अत्र केचिदाहुः योऽर्थः सदैव हृदये वर्तते अत एव विमर्शानुबन्धनादिनिरपेक्ष एव स सततं स्फुरति। यथा भीमसेनस्य कुरुकुल-

1 च - भावरसार्थैर्वृत्तनिबद्धैः कृतस्य 2 य - निबद्धैः ढ - नृत्तनिबद्धैः
3 भ - पदैः स चूर्णकृतैः 4 न - पाठ्यो भ - पाठ्यैः

**वाक्यार्थो वाक्यं वा [1]सत्त्वाङ्गैः सूच्यते यदा पूर्वम् ।**
**पश्चा[2]द्वाक्याभिनयः [3]सूचेत्यभिसंज्ञिता सा तु ॥**

---

विषयः क्रोधातिशयः तद्विषये वाक्ये "चञ्चद्भुजाभ्रमित" (वेणी—अ १) इत्यादौ पाठसमकालं यो भ्रुकुट्यादिमयः शारीरोऽभिनय इति । एतच्चासत् । सूचायां विमर्शपूर्वकवस्तुविषयायामपि प्रवृत्तायां यद्वाक्यं बध्यते तत्सहचरितोऽपि शारीरः किमिति न वाक्याभिनयः तथापि चतुर्विधवाक्याभिनययोगात् सूचादीनां बहुभेदत्वं वक्ष्याम इत्यास्तां तावत् ।

वाक्यार्थो वाक्यं वा सत्त्वाङ्गैः सूच्यते यदा पूर्वम् ।
पश्चाद्वाक्याभिनयः सूचेत्यभिसंज्ञिता सा तु ॥ इति ।

यदा तु निपातः यदित्यत्रार्थे इह वर्तते । तेन यैः सात्त्विकाङ्गिकैः भाविवक्तव्यं सूच्यते, येषामन्तरोऽभिनयः प्रवर्तत एव सूचाभिनयः । "आत्मबुद्ध्या समर्थ्यार्था "निति हि न्यायो वा प्रसरेत् । तत्रोत्तमानां बाहुल्येनाभिसंधानविचारपूर्वकं एवमिति चिरतरोऽसावभिसन्धिकालः तत्राविष्टस्यैवेहोपयोग इति—विचार्यमाणं तथाभूतवस्तुविशेषावेशजनितेन शरीरविकारेणावश्यं भवितव्यं सममेव सूचाभिनयः । तत्र च द्वयी गतिर्विद्यते, स्थितेनैवाभिसन्धानेन यादृक्क्रम आक्षिप्तस्तादृशैव क्रमेण परतः शब्दोच्चारणम् । यथा 'राज्यं निर्जितशत्रु योग्यसचिवन्यस्तः समस्तो भरः' (रत्ना—अ-४) इत्यादौ । तत्र हि पूर्वपूर्वावान्तरवाक्यांशाभिधेयभागप्रभावित एवोत्तरोत्तरावान्तरवाक्यार्थ इति यादृगभिसन्धानक्रमस्तादृगेव तत्र क्रमः । यत्र त्वन्यथाभिसन्धानमन्यथा च क्रमस्तत्र निर्विभागभेदकं सन्धानीयवाक्यार्थसंधानम् । यथा मायापुष्पके सुग्रीवस्य—

दुर्गं भूमिरमात्यभृत्यसुहृदो दाराः शरीरं धनं
मानो वैरिविमर्दसौख्यममरप्रख्येन सख्येन किम् (सख्योन्नतिः ?) ।
यस्मात्सर्वमिदं प्रियाविरहितैस्तस्मादशक्ता(विरहिणस्तस्याद्य शक्ता?)वयं
न स्वेच्छासुलभैः पथोऽपि घटने शैलाश्मखण्डैरपि ॥

---

1 न - सर्वाङ्गैः 2 य - वचना ड - वाच्या 3 ड - सा सूचा सूरिभिर्ज्ञेया

[1]हृदयस्थो निर्वचनैरङ्गाभिनयः[2] कृतो[3] निपुणसाध्यः।
[4]सूचैवौत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः॥ ४६

अत्र हि शरीरं दारा भूमिर्धनं भृत्या दुर्गं वैरिविमर्दसुखं रामस्य मित्रमितिप्रसिद्धिरित्याभिसन्धानक्रम उचितो, निकट (पद) परामर्शक्रमेण प्रकरणा-(र्थवशादिदं लब्धं) दूरं प्रसृत्य क्रमेण यद्वा इदं तावदास्तां, इदमपि तत इति न्यायेनान्तः प्रवेशः, तथापि रामस्य मित्रमितिप्रसिद्धिरित्यादिना विलोमक्रमेण भाव्यम्। तत्र प्रथमे पक्षे वाक्यं सूच्यत इत्युक्तम्, क्रमो हि वाक्यमिति तद्विदो मन्यन्ते। 'एको नववच......शब्दः क्रमो युध्यतः सुहृद्भि'* (?)रित्यादौ। द्वितीयपक्षे तूक्तं वाक्यार्थः सूच्यत इति।

अन्यस्त्वाह—यदा स्वयमेव विमृश्यते तदा वाक्यार्थः सूचितः, यदा तु परवचनमाकर्ण्यते, यथा 'भो वयस्स पेक्ख पेक्ख' (रत्ना) इत्यादावुद्यानवर्णनं पूर्यते तदा तदुक्तोऽर्थः सूच्यते तस्य पश्चाद्वचनाभिनयो भविष्यति 'वयस्य सम्यगुपलक्षित'मित्यादि, तत्र सूचाभिनये वाक्यं सूच्यत इति। तच्चासत्—परवाक्यापेक्षया हि तत्र निवृत्त्यङ्कुराभिनयः भाविवाक्यापेक्षया तु ततोऽन्यैव सूचा। अनभिनेय एवाभिनयनलक्ष्यं प्रत्यपरिचयोऽयमपराध्यति। किंचिद्वाक्यार्थप्रग्रहणेन किमयमर्थो न स्वीकर्तुं शक्यो येन पुनर्वाक्यशब्दोपादानं स्यात्, तस्मात्परोदीरितवाक्यार्थ एव ह्यसौ सूचितो न तु वाक्यमित्यास्ताम्।

तदिदमुक्तपूर्वं गद्यपद्येतरचतुःप्रकारवाक्यं तदर्थसूचने भेदादष्टधा सूचाभिनयादनु षोडशधा युक्तम्। परवाक्यस्य न भिन्नाङ्गतेत्यधुनैवोपपादितम्।

हृदयस्थो निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः।
सूचैवोत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः॥ इति

अन्यपरेऽपि वाक्ये यद्गर्भीभूतं हृदयस्थं वस्तु तन्निष्ठो योऽभिनयोऽङ्गविकारैर्वचनशून्यैः सम्पादितः सूचातुल्यः सोऽङ्कुरो नाम शारीरः। यथा साग-

1 ब - हृदयस्थैः 2 य - अङ्गविकारैः भ - अभिनयैः 3 न - कृते 4 भ - सूच्यैवाघू(पू?)र्णकृतो ढ - सूचेव

* एकैनैव वचः क्रमेण(?)

[1]यत्तु शिरो[2]मुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते।
शाखादर्शन[3]मार्गः शाखाभिनयः स विज्ञेयः॥ ४७

रिका—जाव अहं पि कुसुमाइं अवचाइअ कामदेवं पूअइस्सं—इत्यभिधायैतद्वाक्ये गर्भीभूतं कुसुमापचयमङ्गविकारैर्दर्शयति। यच्चायमङ्कुरो निपुणैरेव प्रयोक्तृभिः सामाजिकैश्च साध्यः आपाद्यः चेतसा ध्यात उत्पत्त्या स्वबुद्धिकल्पनयापचितः। यद्यपि कविवाक्यान्येवात्रोपजीव्यानि, तथापि यादृक् कुसुमापचयकर्म सागरिकायाः सौभाग्यसौन्दर्यप्रेमसाध्वसादिगर्भं न तादृशं तापसस्य तदुभयविलक्षणं 'मः......वेद्या (?)' इत्येवमादि तत्सर्वं वचनेभ्य एवाकृष्यते तथा विस्पष्टेन च तथावचनतो लभ्यमेतत्। अपि तु पर्यालोचनातिशयगम्यमिति निपुणसाध्यमित्युक्तम्।

अन्ये तु सूचाया उत्पत्तिभागेन तुल्योऽङ्कुरस्तस्याः प्राग्भावे वचनशून्यत्वादिति। इदं त्वनुक्तसमासं (नं ?) निर्वचनशब्देनोक्तत्वादर्थस्य।

यत्तु शिरोमुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते।
शाखादर्शनमार्गः शाखाभिनयः स विज्ञेयः॥

समस्तेन शाखाव्यापारेण वर्तनाप्रधानतया प्रयुक्तः शाखाभिनयः शिरोमुखजङ्घोरु चेत्यादिना कृतैकवद्भावेन द्वन्द्वपदसमूहेन पुनः (श्लोक) द्वन्द्वेन, नाटचायितमित्यादि स्थान इत्यादि च।

पूर्वप्रविष्टस्य पात्रस्यापरपात्रं प्रविश्य तद्रूपमुदीक्षमाणस्य प्रवेशोऽपि तद्ध्रुवागानतत्सूचापरिक्रमणादिकालेन किंचिन्नाट्यमस्तीति तत्काले पूर्वपात्रेण ये समुचिता उपचाराः क्रियन्ते नाटचायितमित्याद्यार्यायास्तात्पर्यम्। पूर्वप्रविष्टेन पात्रेण सह सङ्गमं विधाय पश्चात्प्रविष्टस्य पात्रस्य पूर्वप्रविष्टपात्रपरिक्रमणादिकाले स्थानकेनैवासीनस्य तूष्णीं स्थितौ प्राप्तायामभिनयः तदपि नाटचायितमित्यपरार्यायास्तात्पर्यमिति श्रीशङ्कुकाद्याः। तच्चायुक्तम्। अन्योन्यसङ्गमावधि यत्पात्रस्य चेष्टितं तदपरोदितवाक्यार्थसूचनोचितत्वं वा निर्वचनकादौचित्यमात्रादेवोपनतं वा, पूर्वत्र पक्षे निवृत्त्यङ्कुरः उत्तरत्राङ्कुरः इत्युभयं न नाटचायितम्।

---

1 च - यस्तु भ - यस्तु शिरोजङ्घोरुपाणिपादादिभिर्विरचितो विधिवत् (?)
2 च - भुज 3 भ - देशित च - दर्शित

नाट्यायितमुपचारैर्यः क्रियतेऽभिनयसूचया[1] नाट्ये।
काल[2]प्रकर्षहेतोः [3]प्रवेशकैः संगमो यावत् ॥ ४८

तथा हि प्रयोगकुशला एवंविधे विषये धर्मी—लिखति इति, प्रति पालयन्नास्ते (इति), यथापुष्पापचयं नाटयतीति। नाटयस्य सन्धानरूपत्वं च वाक्यं सूचादीनामपि संभवत्येव। न वा नाटयेन नाटयं सन्धीयत इति नाटयायितवाचोयुक्तिरपि कथम्। तस्मादित्थमेतद् व्याख्यातव्यम्—इह यदा स्वप्नोऽप्येकघनो दृश्यते तन्मध्यत एव च किं दृश्यमानं परस्य स्वप्न एव जाग्रद्रूपतामापादिते स्वप्नोऽयं मया दृष्ट इति वर्ण्यते, तदा जाग्रदपेक्षया स्वप्नव्यवहारः, न तत्र पारमार्थिक इत्यौपचारिकं तदपेक्षं तस्य स्वप्नत्वमिति तस्य स्वप्नायितव्यवहारो दृष्टः। एवमिहापि नाटय एकघनस्वभावे हि स्थिते तत्रैवासत्यनाटयानुप्रवेशान्नाटयपात्रेषु सामाजिकीभूतेषु तदपेक्षया यदन्यं नाटयं तस्य तदपेक्षया नाटयरूपत्वं पारमार्थिकमिति नाटयायितमुच्यते। तच्च द्विविधं नाटयरूपकनिष्ठमेव वा कार्यान्तरनिष्ठं वा। तस्य क्रमेण लक्षणमार्याद्वितयेनोच्यते। नाटये यत्प्रवेशकैर्नाटयान्तरगतैरिव पात्रैः अत एव ततः प्रविशतीत्युक्तैः सङ्गमः क्रियते तन्नाटयायितम्। कीदृशैरभिनयद्वारेण यत्सूचनं तथोपचारैः परमार्थतयोपचर्यमाणैः। ननूभयमपि नाटयं कस्मान्न भवति नत्वेकघनतेत्याशङ्कयाह कालप्रकर्षलक्षणाद्धेतोरन्योन्यभिन्नकालत्वात् कथं तत्रैकघनता युक्तेति भावः। यावदिति भूयस्तरं प्रबन्धं व्याप्तोतुं परिमितं वा सर्वं नाटयायितमित्यर्थः। तथा यावदिति स्वप्ने स्वप्नान्तरं तत्राप्यन्यत् स्वप्नान्तरमित्यादिन्यायेन वा भवत्वेक(घन)स्वप्नायितवृत्त्या वा सर्वथा तन्नाटयायितम्। तत्रास्य बहुतरव्यापिनो बहुगर्भस्वप्नायिततुल्यस्य नाटयायितस्योदाहरणं महाकविसुबन्धुनिबद्धो वासवदत्तानाटयधाराख्यः समस्त एव प्रयोगः। तत्र हि बिन्दुसारः प्रयोज्यवस्तुक उदयनचरिते सामाजिकीकृतः, असावप्युदयनो वासवदत्ताचेष्टिते। एष चार्थः—स्वस्मिन् सूत्ररूपके दृष्टे सुज्ञानो भवति। अतिवैतत्यभयात्तु न प्रदर्शितः। एकस्तु प्रदेश उदाह्रियते तत्र ह्युदयने सामाजिकीकृते सूत्रधारप्रयोगः—"तव सुचरितैरेष जयति" इति, तत उदयनः 'कुतो मम सुचरिता'नीति सास्रं विलपति—

1 न - सूचना 2 ज - प्रहर्ष 3 ङ - प्रवेशने सङ्गमं भ - समागमे

**स्थाने ध्रुवास्वभिनयो [1]यः क्रियते हर्षशोकरोषाद्यैः[2]।**
**भावरससंप्रयुक्तं[3] ज्ञेयं नाट्यायितं तदपि[4] ॥ ४९**

---

एह्यम्ब किं *कटकपिङ्गलपालकैस्तैर्भक्तोऽहमप्युदयनः सुतलालनीयः ।
यौगन्धरायण ममानय राजपुत्रीं हा हर्षरक्षित गतस्त्वमपप्रभावः ॥

तत्रैव बिन्दुसारः सामाजिकीभूतः परमार्थतामभिमन्यमानो "धन्या खलु (ईदृशैर्भक्तस्य) प्रलापैः" इत्युच्छ्वसति । प्रतीहारी आत्मगतं—"अअणिद-परमत्थकळणेहिं पिच्छइ खु देवो" इत्यादि ।

परिमितव्यापिनो निर्गर्भस्य नाट्यायितस्योदाहरणं यथा बालरामायणे गर्भाङ्के सीतास्वयंवरे ।

एवं तावन्नाट्यरूपकनिष्ठं नाट्यायितं व्याख्यातम् । कार्यान्तरनिष्ठं तूच्यते । इह यदाभ्यन्तररसाविष्टता भवति तदा ध्रुवायोगाभिनयः स्वतुल्य-तामापाद्यमानः परस्परमिळिताकारकतां काकतालीयेनोपनिपातात् (संभाव्यते) । यथा—नळिनीदळए णीसहत्तुकदेहिं आतथा मुच्चइ ।
पळइ विअब्भइ विज्जइ हंसी णळिणीवणे वि णत्थिज्जइ ॥

इत्यादौ । तत्र हि प्रयोक्तुरेवमभिसन्धिर्ध्रुवामभिनयेन दर्शयामीति । किं तु प्रासादिक्यध्रुवायां गीयमानायां, "यत्र काव्येन (वाक्येन?)नोक्तं स्यात् तत्तु गीतं प्रसाधयेत्" (अ ३२) इति वचनात् ध्रुवार्थस्तत्रोचित आघातः, प्रयोगो हि वहुविधां मदनावस्थां नाटयतीति । एवं भूतोऽङ्कुरस्वभावः पौर्वापर्यपर्यालोच-नवशात् तथाभूत एवोपनिपतित इति, अप्रयुज्यमानापि (ध्रुवा) काकतालीयेन प्रयोगध्रुपांशुरूपा नाट्यमपि नाट्यमिव शासत इति तथाविधनाट्यायितत्वा-पादकः शारीराभिनयो नाट्यायितमिति दर्शयति स्थाने ध्रुवास्वभिनयो यः क्रियत इति । भावैर्व्यभिचारिभिः रसैः स्वस्थायिभिः ये संप्रयुक्ता आविष्टाः तत्संपादनैकमनसः प्रयोक्तारस्तैर्यो ध्रुवास्विति ध्रुवार्थविषयोऽभिनयः क्रियते । कथं, स्थाने प्रसङ्गे सति काकतालीयवशादित्यर्थः । योऽभिनयः शारीरो नाट्यायितम् । ननु किं प्रतिपदमभिनयता, नेत्याह हर्षादिभिरिति तत्सूचकैरङ्गोपाङ्गसत्त्वैरित्यर्थः । तदपीति न केवलं पूर्वं यावदिदमपीति ।

---

1 च - यत् 2 ज - कोपाद्यैः 3 भ - संप्रयुक्तं प - संप्रविष्टैः द - संप्रयुक्तो ज्ञेयो 4 न - तच्च * कटकादय उदयनस्य भ्रातरः

[1]यत्रान्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः ।
[2]तत्संबन्धार्थं[3]कथं भवेन्निवृत्त्यङ्कुरः सोऽथ ॥ ५०
[4]एतेषां तु भवेन्मार्गो यथाभावरसान्वितः ।

यत्रान्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः ।
तत्संबन्धार्थकथं भवेन्निवृत्त्यङ्कुरः सोऽथ ॥

अन्योक्तं वाक्यं कथमन्यसूचाभिनये चित्तवृत्तिसूचकेनाङ्गोपाङ्गसत्त्वक्रमेण दर्शयेदित्याशङ्क्य हेतुमाह तत्संबन्धकथमिति बीजादेर्निवृत्तिं यथाङ्कुरः सूचयति, एवं निवृत्ते वाक्ये (तदङ्कुर)यति निवृत्त्यङ्कुर उक्तः । तथा हि विदूषकेण वत्सराजे "अवि सुहयदि दे लोअणाणं" इति पृष्टे सागरिका— "सच्चं जीविदमरणाणं अन्तरं वट्टामि" इति, ततो राजा—"सुखयतीति किमुच्यते । कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं" इत्यादि पठति । तस्मिन् क्रमेणाकर्ण्यमाने सागरिकाया यथाभूत(संशयोत्कण्ठारागोदयजनितो) व्यभिचारिसत्त्वयोजितः सत्त्वाङ्गोपाङ्गपरिस्पन्दो दृश्यमानो निवृत्त्यङ्कुरः । (निवृत्त्यङ्कुरो) नाट्यायितं च वासवदत्तानाट्यधारे* प्रतिपदं दृश्यते । एतेषां च सर्वाभिनयैः सम्भूय वृत्तित्वात् सर्वत्र चाभिनेये प्रायशः सद्भावात् सामान्याभिनयत्वं तदर्थमेव च वितत्यैतत्स्वरूपाभिधानम्, यत्पूर्वमुक्तम्—

अस्य शाखा च नृत्तं च तथैवाङ्कुर एव च ।
त्रिविधं वस्त्वभिनयः.................. ।

इति तेन सहास्य यथा न विरोधस्तथैवोपपादितमुपाङ्गाभिनय इति तत एवावधार्यम् । किं पुनरुक्ताभिधानेन ।

एवमाङ्गिकं सामान्याभिनयमुपपाद्य वाचकमुपपादयति एतेषां तु भवेन्मार्ग इति विषय इत्यर्थः । वाक्यभावे यद्यप्यात्मापि शरीरो निर्विषय एव तेन यदेके शाखाङ्कुरनाट्यायितानां च वाक्यविरहितत्वं मन्यमाना एतेषामिति

1 ड - यस्तु भ - यश्च 2 ब - तं य - तत्संबद्ध 3 ड - कृतं निवृत्तमेवाङ्कुरं विद्यात् 4 च - एतेषां च स्मृता मार्गा...न्विताः...निर्दिष्टाः...त्मकाः. ज - एतेमार्गास्तु विज्ञेया...न्विताः...निर्दिष्टाः...त्मकाः

* नाट्यधारशब्दो नाट्यपार इति नाट्यसार इति च दृश्यते । नाट्यपार एव साधुः स्यात् ।

[1]काव्यवस्तुषु निर्दिष्टो[2] द्वादशाभिनयात्मकः ॥ ५१
आलापश्च प्रलापश्च विलापः [3]स्यात्तथैव च ।
अनुलापोऽथ संलाप[4]स्त्वपलापस्तथैव च ॥ ५२
सन्देशश्चातिदेशश्च निर्देशः स्यात्तथापरः[5]
उपदेशोऽपदेशश्च व्यपदेशश्च कीर्तितः ५३
[6]आभाषणं तु यद्वाक्यमालापो नाम स स्मृतः ।
अनर्थकं वचो यत्तु[7] प्रलापः स तु कीर्तितः[8] ॥ ५४

---

सर्वेषामित्यादि वाक्यमूचानिवृत्त्यङ्कुरमात्रविषयत्वेनैव संकोचयन्ति, ते न तत्त्वज्ञाः, सर्वोऽप्यभिनयो वाक्योपजीवनमन्तरेण नियमहेत्वभावादसमञ्जसतामभ्येति । केवलं तत्कालिकातत्कालिकादिमात्रेण वाक्यं भिद्यतां नाम । एतच्चोपाङ्गाभिनये वितत्योपपादितम् ।

काव्यवस्तुष्विति दशरूपकभेदेषु द्वादशरूपोऽभिनयात्मको वाचिकाभिनयस्य भाव इत्यर्थः । द्वादशप्रकारानुद्दिशति आलापश्चेत्यादिना तानेव क्रमेण लक्षयति आभाषणं त्वित्यादिना । युष्मदर्थविषयमुपदेशादिशून्यं यद्वचनं तदालाप इत्यर्थः । "विभ्राजसे मकरकेतनमर्चयन्ती" (रत्ना-१), यथा वा "जयतु भवान्" इत्यादि । अनर्थकं वचो यत्तु स प्रलाप इति परस्परमसम्बद्धं मौर्ख्यादिवशादित्यर्थः । यथा दरिद्रचारुदत्ते* शकारः—"शुणामि मल्लगन्धं, अन्धआलशंचिदादो उण णासिआदो हिदुत्तं एळामि (शृणोमि माल्यगन्धम्, अन्धकारसंचितया पुनर्नासिकया (तदुक्तं) आलोक-

---

1 भ - काव्यवस्तुविनिर्दिष्टाः म - काव्यबन्धेषु न - कार्याः 2 ढ निर्विण्णाः 3 ज - च ड - अन्यः 4 ड - ह्यप 5 ड - च तथैवच 6 य - आभाषणे 7 न - बच 8 च - स प्रलापश्च कीर्तितः ड - संज्ञितः भ - सप्रलापः प्रकीर्तितः

---

* दरिद्रचारुदत्तमिति मृच्छकट्यां प्रथमाङ्कस्य नाम.

[1]करुणप्रभवो यस्तु विलापः स तु कीर्तितः[2] ।
बहुशोऽभिहितं वाक्यमनुलाप इति स्मृतः[3] ॥ ५५
[4]उक्तिप्रत्युक्तिसंयुक्तः संलाप इति कीर्तितः ।
पूर्वोक्तस्यान्यथावादो ह्यपलाप इति स्मृतः ॥ ५६
[5]तदिदं वचनं ब्रूहीत्येष सन्देश उच्यते ।
[6]यत्त्वयोक्तं मयोक्तं तत्सोऽतिदेश इति स्मृतः ॥ ५७

---

यामि) (मृच्छ-१)। करुणप्रभवो यस्तु स विलाप इति । करुणग्रहणं दुःखोपलक्षणम्, तेन विप्रलम्भोऽपि गृह्यते। तत्र करुणरससंबन्धं वचनं, (दुःखे) यथा—क्वासि प्रयच्छ मे प्रतिवचनम्, विप्रलम्भे यथा—बाणाः पञ्चमनोभवस्य (रत्ना-३) इत्यादि। एतत्प्रधानादेव कामावस्थाविशेषो विलापः (तासु षष्ठ्यवस्था) इति वक्ष्यते। बहुशोऽभिहितं वाक्यमनुलाप इति । अनुवादार्थं तदेव पुनरुच्यमानमित्यर्थः। यथा—"द्वीपादन्यस्मादपि" (रत्ना १) इति सूत्रधारेणोक्ते नेपथ्ये यौगन्धरायणः—एवमेतत्, दीपादन्यस्मादपीत्यनुवदाति । उक्तिप्रत्युक्तिसंयुक्तः संलाप इति। यद्विधान्युदाहरणानि*(?)। पूर्वोक्तस्यान्यथा वादोऽप्यपलाप इति। यथा कृत्यारावणे गौतमीरूपच्छन्ना रामाक्रन्दितं लक्ष्मणे श्रावयितुकामा शूर्पणखा पूर्वमाह—"अवि सुदं ते"(अपि श्रुतं त्वया)। ततः सीता (ससंभ्रमम्)—"अये किंति" (अये किमिति)। ततः सा—"अं वञ्चिते, सत्यं गौतमीमेव मामियं सीता जानात्विवत्येवं ह्याह, "णं मए णक्क हण्णिदं, अवि सुदं ते" (इति)। तदिदं वचनं ब्रूहीत्येष सन्देश इति। उदाहरणेन लक्षणमुन्नेयम्। ततः परमुखेनान्यस्य स्ववचोऽपणं सन्देश इति। अतिदेशस्त्वयोक्तं युक्तं मयोक्तमिति सिद्धेनासिद्धस्य तुल्यतापादनमतिदेश इत्यर्थः। अत्रोपदेशातिदेशयोरुपमानस्य च साहित्यविषये तार्किकमीमांसकविषये विशेषप्रतिपादनं यत् टीकाकारैः कृतं तत्सुकुमारमनोमोहनं वृथा

---

1 च - दुःखशोकोद्भवं यत्तु, न - करुणप्रभवं यत्तु 2 ड - इति स स्मृतः 3 ड - प्रकीर्तितः 4 न - उक्तप्रत्युक्त 5 च - त्वमिदं 6 च - अतिदेशस्त्वयोक्तं यत्तन्मयोक्तमिति स्मृतः ।

[1]स एषोऽहं ब्रवीमीति निर्देश इति कीर्तितः ।
व्याजान्तरेण कथनं[2] व्यपदेश इहोच्यते[3] ॥ ५८
इदं कुरु गृहाणेति ह्युपदेशः प्रकीर्तितः[4] ।
अन्यार्थकथनं यत् स्यात्[5] सोऽपदेशः प्रकीर्तितः[6] ॥
एते मार्गास्तु[7] विज्ञेयाः [8]सर्वाभिनययोजकाः ।
सप्त[9]प्रकारमेतेषां पुनर्वक्ष्यामि लक्षणम्[10] ॥ ६०
प्रत्यक्षश्च परोक्षश्च तथा कालकृतास्त्रयः[11] ।
आत्मस्थश्च परस्थश्च प्रकाराः सप्त एव तु[12] ॥ ६१

---

भ्रमणिकामात्रं प्रकृतानुपयोगादिहोपेक्ष्यमेव । स एवैषोऽहं ब्रवीमीति निर्देश इति लक्षणम् । व्याजान्तरेण कथनं व्यपदेश इति व्याजविशेषेणेत्यर्थः । यथा मुद्राराक्षसे क्षपणकस्य राक्षसदूषणार्थं तावन्नगरान्निर्वासनं तत्र च चाणक्येन व्याजेन वचनं कृतम्—"अयं पापीयान् (जीवसिद्धिः) राक्षसप्रयुक्तविषकन्यया पर्वतेश्वरं घातितवान् ततो निर्वास्यते" इति । इदं कुरु गृहाणेति ह्युपदेश इति नियोग इत्यर्थः । अन्यार्थकथनमपदेश इति स्वयं विवक्षितस्यान्य एव वक्तीत्यन्यकथनमित्यर्थः । यथा भीमं प्रति सहदेवः—एवं गुरुणा सन्दिष्टं सुयोधनस्येति (वेणी-१) । उपसंहरति एते मार्गास्त्विति सर्वेषु षट्स्वपि शारीरेष्वित्यर्थः । तथा अभिनीयन्त इत्यभिनया नाटकादिकाव्यविशेषाः तेषु, यतः सामान्येन भवन्त्यत एवैते सामान्याभिनया इति तात्पर्यम् ।

---

1 ज - सोऽयं ब्रवीमि यदहं निर्देशः स तु संज्ञितः (ड - स एकोऽहं ब्रवीमीति......) 2 भ - करुणं 3 म - प्रकीर्तितः ड - भवेत्तु सः 4 ड - इत्युपदेश इति स्मृतः 5 ज - तु 6 ज - इति स्मृतः 7 भ - हि 8 भ - वाक्य 9 च - प्रकारास्तेषां च पुनर्वक्ष्यामि तत्त्वतः 10 न - तत्त्वतः 11 ज - कृताश्च ये 12 ज - चैव तु भ - कीर्तिताः

[1]एष ब्रवीमि[2] नाहं भो वदामीति च यद्वचः ।
प्रत्यक्षश्च परोक्षश्च[3] वर्तमानश्च तद्भवेत् ॥ ६२
अहं करोमि गच्छामि वदामि वचनं तव ।
[4]आत्मस्थो वर्तमानश्च प्रत्यक्षश्चैव स स्मृतः ॥ ६३
करिष्यामि गमिष्यामि वदिष्यामीति यद्वचः ।
आत्मस्थश्च परोक्षश्च भविष्यत्काल एव च ॥ ६४
हता जिताश्च भग्नाश्च मया सर्वे द्विषद्गणाः ।
आत्मस्थश्च परोक्षश्च वृत्तकालश्च[5] स स्मृतः ॥ ६५
[[6]त्वया हता जिताश्चेति यो वदेन्नाट्यकर्मणि ।
परोक्षश्च परस्थश्च वृत्तकालस्तथैव च ॥ ६६
एष ब्रवीमि कुरुते गच्छतीत्यादि यद्वचः ।
[7]परस्थो वर्तमानश्च (प्रत्यक्षश्च) भवेत्तथा ॥ ६७

---

अथात्रैव भेदान्तराण्याह आत्मस्थश्च परस्थश्चेत्यादि । अत्रोदाहरणदिशमाह अहं करोमीत्यादि ।

---

1 - एष इत्यादिश्लोकचतुष्टयस्य भ - मातृकायां पाठभेदः—कृतं मया करिष्येऽहं करोमीति च यद्वचः । भूतं भवद् भविष्यच्च तदात्मस्थमुदाहृतम् । स करोति कृतं तेन करिष्यति च यद्वचः । भवद्भूतं भविष्यच्च परोक्षं परसंस्थितम् । एष चक्रे करोत्येष करिष्यति च यद्वचः । भूतं भवद्भविष्यं च प्रत्यक्षं परसंस्थितम् 2 ज - ब्रवीति 3 ज - परस्थः 4 च - प्रत्यक्षे आत्मसंस्थश्च वर्तमानश्च 5 द - परस्थश्च वृत्तकालस्तु 6 - एतच्छ्लोकचतुष्टयं च - मातृकायामेव विद्यते 7 द - आत्मस्थश्च परस्थश्च वर्तमानश्च स स्मृतः

स गच्छति करोतीति वचनं यदुताहृतम् ।
परस्थं वर्तमानं च परोक्षं चैव तद्भवेत् ॥ ६८
करिष्यन्ति गमिष्यन्ति वदिष्यन्तीति यद्वचः ।
परस्थमेष्यत्कालं च परोक्षं चैव तद्भवेत् ] ६९
हस्तमन्तरतः कृत्वा यद्वदेन्नाट्यकर्माणि ।
[1]आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ॥ ७०
परेषामात्मनश्चैव कालस्य च विशेषणात्[2] ।
सप्तप्रकारस्यास्यैव[3] भेदा ज्ञेया [4]अनेकधा ॥ ७१

---

इदानीं विषयभेदकृतमात्मस्थस्यापि पारोक्ष्यं दर्शयति हस्तमन्तरतः कृत्वेत्यादि । स्वगतजनान्तिकापवारितकेषु वक्तुरात्मस्थं पात्रान्तराणां चाप्रत्यक्षं नाट्यधर्मीवशादित्यात्मस्थमपि तत्परोक्षम् । लोकधर्म्याप्यात्मस्थं परोक्षम् । यथा—"सुप्तो मत्तो न्वहं किल विललाप" इति । यदाह्लोत्तमविषयेऽपि चित्तव्याक्षेपादिभ्यो (लिट् भवतीति । अन्य)भेदानां कार्येण (सम्भव) माह—

परेषामात्मनश्चैव कालस्य च विशेषणात् ।
सप्तप्रकारस्यास्यैव भेदा ज्ञेया अनेकधा ॥
एते प्रयोगा विज्ञेया मार्गाभिनययोजिताः ।
एतेष्विह विनिष्पन्नो विविधोऽभिनयो भवेत् ॥

इह तावद्वाक्यं द्वादशधाभिन्नं तत्राप्यात्मस्थपरस्थयोः प्रत्यक्षत्वपरोक्षत्वाभ्यां चतुर्विधत्वं चतुर्णां कालत्रयेण गुणने द्वादशभेदाः । भूतभविष्यतो-

---

1 च - मातृकायामयं श्लोकः "परेषां" इति श्लोकानन्तरं वर्तते 2 च - विपर्ययात् 3 च - प्रकारास्तस्यैव 4 य - ह्यनेकधा भ - ह्यनेकशः

[1]एते [2]प्रयोगा विज्ञेया [3]मार्गाभिनययोजिताः ।
[4]एतेष्विह विनिष्पन्नो [5]विविधोऽभिनयो भवेत्[6] ॥ ७२
शिरो[7]हस्तकटीवक्षोजङ्घोरुकरणेषु तु ।
समः कर्मविभागो यः सामान्याभिनयस्तु सः ॥ ७३
ललितैर्हस्तसंचारै[8]स्तथा मृद्वङ्गचेष्टितैः ।
अभिनेय[9]स्तु नाट्यज्ञै रसभावसमन्वितैः ॥ ७४

---

रपि प्रत्यक्षत्वं योगिप्रत्यक्षादिदृशा न भवति । एवं द्वादशानां तावद्भिर्गुणने चतुश्चत्वारिंशदधिकं शतम् । संस्कृतेतरभेदेन त्रिविधत्वं यदुक्तं तेन गुणने द्विपञ्चाशदधिकानि नवशतानीति (!) वाक्याभिनयस्य भेदाः । सूचाया वाक्यतदर्थभेदाद् द्वैगुण्यम् । तेन एकोनविंशतिशतानि चतुरधिकानि सूचाभेदाः । वाक्यतुल्या एवाङ्कुरभेदाः सूचाभेदैर्गुणनीयास्तैः, पुनः शाखाभेदास्तैरपि द्विविधनाट्यायितभेदस्तावद्भिर्निवृत्त्यङ्कुरभेदा इति कोटिशतान्यनेकानि भवन्ति । न तु यथा श्रीशङ्कुकेनोक्तं चत्वारिंशत्सहस्राणीत्यादि ।

एवं विशिष्टः सामान्येनाभिनीयमानः संभूयाभिनयैर्युक्तः सर्वाभिनयेषु सामान्यभूत इत्येवं यः सामान्याभिनय अस्या एकीभावनिबन्धनभूताया अलातचक्र[ मण्डल ]संनिभत्वसम्पादिकाया सामान्याभिनयक्रियायाः

---

1 श्लोकार्धं चभ - मातृकयोर्न दृश्यते 2 ड - प्रयोक्तृभिः 3 ड - मार्गा ह्यभिनये स्मृताः ड - मार्गा ह्यभिनयाश्रयाः (न - त्मिकाः) 4 न - एभिरेव ब - एभिर्मार्गो, भ - एभिर्मार्गैः 5 भ - विविधाभिनयो 6 ड - मतः 7 भ - वदनपाण्यूरुजङ्घोदरकटीगतः । समकर्मविभागो यो विविधाभिनयस्तु सः ज - वदनहस्तोरुजङ्घोदरकटीगतः । समकर्मविपाको यः सामान्याभिनयः (ड - पाद... कृतः) च - वदनहस्तोरः कट्यूरुचरणाश्रयः । समः कर्मविभागे यो विविधाभिनयः 8 च - विन्यासैः 9 च - नेयं...समन्वितम् ।

[1]अनुद्धतमसंभ्रान्तमनाविद्धाङ्गचेष्टितम् ।
लयतालकलापात[2]प्रमाणनियतात्मकम्[3] ॥ ७५
सुविभक्तपदालापमनिष्ठुरमकाहलम्[4] ।
यदीदृशं भवेन्नाट्यं ज्ञेयमाभ्यन्तरं[5] तु तत् ॥ ७६
एतदेव विपर्यस्तं स्वच्छन्दगतिचेष्टितम् ।
[6]अनिबद्धगीतवाद्यं नाट्यं बाह्यमिति स्मृतम् । ७७
[7]लक्षणाभ्यन्तरत्वाद्धि [8]तदाभ्यन्तरमिष्यते ।
[9]शास्त्रबाह्यं भवेद्यत्तु तद्बाह्यमिति भण्यते[10] ॥ ७८
अनेन लक्ष्यते यस्मात्[11] प्रयोगः कर्म चैव हि[12] ।
तस्माल्लक्षणमेतद्धि नाट्येऽस्मिन् संप्रयोजितम्[13] ॥

---

प्राधान्यप्रदर्शनार्थमाह अनुद्धतमसंभ्रान्तमित्यादि । अनाविद्धशब्देनाङ्गिक-विषयं सामान्यं दर्शयति । एतदभावं दुष्टत्वमिति दर्शयन् व्यतिरेकक्रमेणापि सामान्याभिनयस्यावश्योपादेयतामाह एतदेव विपर्यस्तमित्यादिना । आभ्यन्तरमिति (स्वयमेव विवृणोति) लक्षणाभ्यन्तरत्वादिति । ननु वागङ्गाभिनयोपेत इति लक्षणं तस्य बाह्योऽप्यस्तीत्याशङ्क्याह अनेन लक्ष्यते यस्मादिति सामान्याभिनयरूपमेव लक्षणमिति तात्पर्यम् । (संप्रयोजितमिति) नाट्यविषयाः प्रत्येकं तावत् क्रिया एकीभावं नेयाः, एकीभावगतश्च क्रियासमूहोऽप्येकीभावं नेय इत्येतत् । कर्मप्रयोगशब्दाभ्यां नाट्य इति

---

1 च - अनुद्धटं भ - अनुद्धटमसंक्रान्तं 2 च - काल ड - कलापादि 3 ड - नियमात्मकः ड - आत्मजात् भ - कालायातप्रमाणनियमान्वितम् 4 ड - अनाकुलम् 5 ड - अभ्यन्तरं 6 म - अनुबद्ध च - अति 7 च - लक्षणाभ्यन्तरं यस्मात्तस्मादाभ्यन्तरं स्मृतम् 8 ड - तदभ्यन्तरं 9 च - शास्त्रार्थबाह्यभावा (तु) बाह्यमित्यभिधीयते 10 ड - संश्रितम् भ - विश्रुतम् 11 ब - यस्मिन् 12 भ - वा बुधैः 13 भ - समुदाहृतम् ।

अनाचार्योषिता[1] ये च ये च शास्त्रबहिष्कृता[2]ः।
[3]बाह्यं प्रयुञ्जते ते तु अज्ञात्वाचार्यकीं क्रियाम्। ८०
शब्दं स्पर्शं च रूपं च रसं गन्धं तथैव च।
[4]इन्द्रियाणीन्द्रियार्थांश्च [5]भावैरभिनयेद्बुधः॥ ८१
कृत्वा साचीकृतां दृष्टिं शिरः [6]पार्श्वनतं तथा।
[7]तर्जनीं कर्णदेशे च बुधः शब्दं विनिर्दिशेत्[8]॥ ८२

---

सप्तम्या कथयति—अनेन विना स्फुटं नाट्यरूपत्वमेव साक्षात्काराध्यवसायरूपं रसानुप्राणितं तन्न संपद्यत इति। व्युत्पत्तिदूरीभावं त्वनधीयानां, भट्टपुत्रादौ तदभावात्तदाह अनाचार्योषिता ये चेत्यादिना।

अथ संभूयाभिनयरूपत्वमेव सामान्याभिनयमाह शब्दं स्पर्शं चेत्यादि। इन्द्रियशब्दस्येन्द्रियार्थशब्देन स्पर्शादिविशेषणस्यासंभवम्*, स्वविषयग्रहणावेशः स्वकरणग्राह्यतावेशश्च सर्वेषामिन्द्रियाणां विषयाणां च प्रदर्श्यते, अत एवैष सामान्याभिनयनेयेऽर्थद्वयेऽभिनयस्य साधारण्यम्। भावैरिति क्रियाविशेषैरित्यर्थः। तानाह कृत्वा साचीकृतां दृष्टिमित्यादि। अनेनादरवशात्समस्तो भरः श्रोत्रदेशमनुयाति, यथोक्तं—

तथाहि शेषेन्द्रियवृत्तिरासां
सर्वात्मना चक्षुरिव प्रविष्टा॥ (रघु ७-१२) इति

चकाराच्छ्रोत्रमपि शब्दग्रहणाविष्टमनेनाभिनीतं भवतीत्याह। एवमुत्तरत्र।

---

1 ड - उदिताः भ अनाचार्ये हिताः ब - अनाचार्यहिताः 2 च - बहिर्गताः 3 च - बाह्यस्ते (न्ते) (?) तु प्रयोज्यन्ति क्रियामात्रैः प्रयोजिते य - बाह्यं ते तु प्रयोक्ष्यन्ते क्रियामन्यैः प्रयोजिताम् (ड - हेतु...मन्त्रैः) 4 ज - इन्द्रियैः 5 भ - भावेन 6 य - पार्श्वानतं, प - पार्श्वे 7 ड - तर्जनी कर्णदेशे तु शब्दं त्वभिनयेद्बुधः 8 च - तु बुधः शब्दान् नियोजयेत्

* इन्द्रियस्येन्द्रियार्थेन शब्दस्पर्शादिविशेषेण स्यात् संभवः—इति पाठः स्यात्।

किंचिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च[1]।
तथांऽसगण्डयोः स्पर्शात् स्पर्शमेवं विनिर्दिशेत्॥
कृत्वा पताकौ मूर्धस्थौ किंचित्प्रचलिताननः[2]।
निर्वर्णयन्त्या दृष्ट्या च[3] रूपं त्वभिनयेद् बुधः॥ ८४
किंचिदाकुञ्चिते नेत्रे [4]कृत्वोत्फुल्लां च नासिकाम्[5]।
एकोच्छ्वासेन चेष्टौ तु [6]रसगन्धौ विनिर्दिशेत्॥
पञ्चानामिन्द्रियार्थानां[7] भावा ह्येतेऽनुभाविनः।
[8]श्रोत्रत्वङ्नेत्रजिह्वानां घ्राणस्य च तथैव हि॥ ८६
[9]इन्द्रियार्थाः समनसो भवन्ति ह्यनुभाविनः[10]।
न वेत्ति ह्यमनाः किंचिद्विषयं पञ्चधागतम्[11]॥ ८७
[12]मनसस्त्रिविधो भावो विज्ञेयोऽभिनये बुधैः[13]।

---

एतदुपसंहरति पञ्चानामिन्द्रियार्थानामित्यादि। इन्द्रियार्थाः समनस इति यथाशब्दादिग्रहणक्रियाभिः शब्दः श्रोत्रे प्रतीयते, तन्मनोऽपि तदधिष्ठातृक्रमेणाधिष्ठानं कुर्वदित्यतोऽपि सामान्याभिनयः। तदुक्तम्—युगपद् ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति*। मनसस्त्रिविधो भाव इति वैशेषिकादिदृशि मनस्संयोगजो य आत्मन इच्छाद्वेषमाध्यस्थ्यलक्षणो भावः स मनस इत्युक्तः।

---

1 ज - भ्रुवोरुत्क्षेपणेन च 2 ड - अङ्गुलिः 3 ड - तु 4 य - कृत्वा फुल्लां 5 भ - नाडिकाम 6 न - चेदिष्टौ च - चोद्दिष्टौ ड - हृष्टौ भ - सहोच्छ्वासे-चेष्टौ तु 7 ब - इन्द्रियाणां च 8 भ - त्वक्चक्षुर्घ्राणजिह्वानां श्रोत्रस्य तु तथैव च (च - च . हि,) (म - जिह्वा = जिंह्वा) 9 प - इन्द्रियार्थांश्च मनसो भावयन्त्यनुभाविनः 10 भ - भवन्तीह विभाविनः 11 ड - पञ्चहेतुकम् भ - भूतजम् 12 भ - मानसः 13 य - अभिनयो बुधैः, ड - नयं प्रति।

* न्यायसू—१–१–१६.

[1]इष्टस्तथा ह्यनिष्टश्च[2] मध्यस्थश्च तथैव हि ॥ ८८
[3]प्रह्लादनेन गात्रस्य तथा पुलकितेन च ।
[4]वदनस्य विकासेन कुर्यादिष्टनिदर्शनम् ॥ ८९
[5]इष्टे शब्दे तथा रूपे स्पर्शे [6]गन्धे तथा रसे ।
इन्द्रियैर्मनसा[7] प्राप्तैः[8] [9]सौमुख्यं संप्रदर्शयेत् ॥ ९०
परावृत्तेन शिरसा[10] नेत्रनासाविकर्षणैः[11]
चक्षुषश्चाप्रदानेन ह्यनिष्टमभिनिर्दिशेत् ॥ ९१
[12]नातिहृष्टेन मनसा न [13]चात्यर्थंजुगुप्सया ।
मध्यस्थेनैव भावेन मध्यस्थमभिनिर्दिशेत्[14] ॥ ९२

---

कापिलदृशि तु विन्ध्यवासिनो मनस एव, ईश्वरकृष्णादिमते मनःशब्देनात्र बुद्धिः । प्रह्लादनेन गात्रस्येत्यादिकं विषयग्रहणक्रियास्वभीष्टविषये निदर्शयितव्यम् । अतोऽपि चास्य सामान्याभिनयत्वं द्रष्टव्यम् ।

एतदेव स्फुटयति हृष्टे(इष्टे ?)शब्द इत्यादिना । सुमुखत्वं प्रसादादियुक्तं वदनमित्यर्थः । विकर्षणानि सङ्कोचनानि च । बहुवचनेन मध्ये ग्रहणसिद्ध्ये विकासासंभिन्न इति दर्शयति ।

---

1 च - इष्टोऽनिष्टश्च मध्यश्च तस्याभिनय उच्यते ड - इष्टोऽनिष्टस्तथा चैव मध्यस्थश्च तथैव हि 2 भ - वा 3 भ - गात्रप्रह्लादनेनेह 4 ज - नितान्तप्रक्रियाभिश्च सर्वमिष्टं निरूपयेत् भ - नितान्तास्त (तास्य ?) ढ - आननप्रक्रियाभिश्च 5 च - हृष्टे (?) 6 च - घ्राणे 7 भ - मनसि 8 च - मनसि प्राप्ते 9 ब - सौख्यं संप्रति दर्शयेत् 10 भ - तथा पातेन चक्षुषः । नेत्रत्रासाश्रिततया ङ - प्रदानेन च चक्षुषः । नेत्रत्रासाश्रिततया 11 य - निकूणनैः । 12 भ - न चातिमात्रं हृष्टेन न जुगुप्साकृतेन तु ड न चातिमात्रहृष्टस्तु न चात्यन्तजुगुप्सया 13 च - चात्यन्त 14 भ - मध्यस्थाभिनयः स्मृतः

तेनेदं तस्य [1]वापीदं स एवं प्रकरोति वा[2] ।
परोक्षाभिनयो यस्तु मध्यस्थ इति स स्मृतः ॥ ९३
[3]आत्मानुभावी योऽर्थः स्यादात्मस्थ इति स स्मृतः ।
[4]परार्थवर्णना यत्र परस्थः स तु संज्ञितः ॥ ९४
प्रायेण सर्वभावानां कामान्निष्पत्तिरिष्यते ।
स [5]चेच्छागुणसम्पन्नो[6] बहुधा परिकल्पितः ॥ ९५

---

अथात्रैव पूर्वोक्तप्रकारसंभवं दर्शयति तेनेदमित्यादि । कृतं कर्तव्यमिति वाक्यशेषे भूतता भविष्यत्ता च । आत्मनि सुखादयोऽर्थाः समवायिन इति सर्व एव ते आत्मस्थाः स्युः, रूपादीनां चान्यत्र समवायात् सदैव परस्थता स्यादित्याशङ्क्याह आत्मानुभावी योऽर्थः स्यादिति । परशब्दसन्निधानादात्मशब्दोऽत्राहंभावास्पदे प्रत्यगात्मनि वर्तते । नत्वात्मानमनुभावयति यदार्थः स आत्मस्थः । रूपादयोऽपि चैवं भवन्तीति कथं नात्मस्थाः परसुखादयश्च नैवमिति कथमात्मस्थाः ।

अथ कामोपचारस्य सामान्याभिनयत्वमुपपादयति प्रायेण सर्वभावानामिति । कामादिति इच्छातः । यद्यप्यनिच्छोः किञ्चिद्भवति तदपि प्राक्तनं च कर्माधिपत्यात् । कर्मस्थापूर्वकमिति प्रायग्रहणं व्याप्त्यर्थः कामादेव निष्पत्तिरित्यर्थः ।

ननु कोऽयं कामो नामेत्याह स चेच्छेति । न चेच्छामात्रादेव कार्यविनिष्पत्तिरित्याह गुणेन कार्यप्रयत्नादिना कार्यव्यापारादिसहितेन सम्पन्नः सहकृतः सर्वकार्यकारी । नन्वेकैव चेदिच्छा कथमनेकं कार्यं प्रसूयत इत्याशङ्क्याह बहुधा परिकल्पितः भूयस्यः इच्छा इति यावन्तमुदाहरति धर्मकाम

---

1 ज - च 2 च - च 3 इदमर्धं भ - मातृकायां न दृश्यते 4 च - परार्थवर्णना याच (ज - परस्य) ड - परस्य वर्णनीयं च भ - परार्थवर्णने यश्च परस्थः सोऽभिधीयते 5 ज - चेप्सा...बहुधा काम इष्यते 6 भ - निष्पन्नो

धर्मकामोऽर्थकामश्च मोक्षकामस्तथैव च।
[1]स्त्रीपुंसयोस्तु योगो यः स तु काम इति स्मृतः[2] ॥९६
[3]सर्वस्यैव [4]हि लोकस्य [5]सुखदुःखनिबर्हणः[6] ।
भूयिष्ठं दृश्यते कामः [7]स सुखं व्यसनेष्वपि ॥ ९७
[8]यः स्त्रीपुरुषसंयोगो रतिसंभोगकारकः ।
[9]स शृङ्गार इति ज्ञेय [10]उपचारकृतः शुभः ॥ ९८

---

इत्यादि। धर्मः कामः अर्थो मोक्षे च। तत्र कामो नामेच्छा सा च सुखे तत्साधने वा भवति । तत्र धर्मार्थयोः स्वयं सुखरूपत्वं नास्ति सुखसाधनतापि च । साक्षाद्धर्मेण ह्यप्सरोनन्तादि(गतादि ?)सुखसाधनमुपार्ज्यते । एवमर्थेऽपि मन्तव्यम् । मोक्षो यद्यप्यबहिस्साधनाधीनपरमानन्दविश्रान्तिलक्षणः सुखात्मैव, तथापि दुर्लभ इति न तत्र संमोहितं लोकस्य हृदयम् । स्त्रीपुरुषयोस्तु संयोगः साक्षादेव सुखसाधनमिति तस्यैवेच्छाविषयतेति निरुपपदेन कामशब्देन स एव वाच्यः। तेन च सर्वोऽर्थोऽनुरज्यते, यदाह— स्त्रीति नामापि संह्लादीति (कामन्द-स ४-५२) तथापि तत्स्पृष्टे लोकोत्तरेऽप्यर्थो लोकस्य हृदयसंवादादयत्नेनैव हृदयंगमत्वमभ्युपगच्छति । यथा—

मोहदुर्दिननिशाभिसारिका मानिनी समदना मदोद्धता ।
धीरियं प्रणयतस्त(स्त्व?)दुन्मुखी खण्डितां रमण मास्म तां कृथाः ॥ इति

अनेनैवाशयेन रहस्योऽप्यर्थो मया रहस्येषु(मुख्ययैव वृत्त्या) निबद्धः कैशिक्या ह्येतदर्थमेवादरेण विनिवेशः प्रतिपादितः । अत एवास........ ।

कामोपचारस्य सामान्याभिनयत्वं बहुतरलक्ष्यव्यापकत्वात् तदेव दर्शयति यः स्त्रीपुरुषसंयोग इति। इच्छामात्रमपि तत्र सुखे(चोपचारकृत)मित्यत इच्छा-

---

1 च - यत्तु स्त्रीपुंसयोर्योगः स वै (?) कामः 2 भ - संप्रयोगो यः कामः स तु संज्ञितः (ड - तु संयोगो) 3 अयं श्लोको ड - मातृकायां न विद्यते 4 भ - तु 5 ब - शोकदुःखनिबर्हणः 6 न - निबर्हणम् 7 भ - सुखदो 8 न - यश्चापि 9 भ - शृङ्गारं इति स 10 ढ - उपकार

[1]भूयिष्ठमेव लोकोऽयं सुखमिच्छति सर्वदा[2] ।
[3]सुखस्य हि स्त्रियो मूलं नाना[4]शीलाश्च ताः पुनः ॥
[5]देवदानवगन्धर्वरक्षोनागपतत्रिणाम् ।
पिशाचयक्षव्यालानां नरवानरहस्तिनाम् ॥ १००
मृगमीनोष्ट्रमकर[6]खरसूकरवाजिनाम् ।
[7]महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः ॥

---

लक्षणं संभोगं करोतीत्याह। उपचारोऽन्योन्यहृदयग्रहणोचितैर्व्यापारैः परिपूर्णः। इह चोक्त(उत्तम)प्रकृतिर्यदि भवति तद्रसाध्यायोक्तदशा शृङ्गार इत्युच्यते। एतमेवार्थमुपोद्बलयति भूयिष्ठमेव लोकोऽयं सुखमिच्छति सर्वदा इति। भूयिष्ठमिति प्राप्तादधिकमिति यावत्। अत एव परमानन्दलाभमन्तरेण न कुत्रचित् संतुष्यति लोकः। सर्वदेति दुःखाभावमपि सुखार्थमेवेच्छति, सर्वदुःखनिवृत्तिं हि कामयते सुखेन यथेच्छमश्नीयात्, यथाभीष्टं च रमणीमुपभुञ्जीयादिति। हारमपि त्यजति मृदुशीतलसमीरस्पर्शजनितसुखसिद्ध्यर्थमेव। अत एव शून्यरहस्यविदः कणादसुगतादिसंमतमिमं मोक्षं न रोचयन्ते प्रेक्षावतां तत्राप्रवृत्तिप्रसङ्गादिति दर्शितमित्यलं बहुना।

उपचारकृतमित्युक्तम्, तत्रोपचारज्ञानाय स्त्रीणामाशयं दर्शयति, आशयग्रहणपूर्वकत्वादुचितस्योपचारस्य नानाशीलाः (इति)। शीलं सत्त्वं चैतन्यं बुद्धिपूर्वकं स्वभावो हेवाक इति पर्यायाः। देवदानवेत्यादिना तानि शीलान्युद्दिश्य यथोद्देशं लक्षयति। आदि ग्रहणेनान्यदपि शीलमस्तीत्याह।

---

1 य - प्रायेण सर्व...नित्यशः च - सर्वः प्रायेण ढ - इह प्रायेण लोकोऽयं शुभमिच्छति नित्यशः 2 भ - नित्यशः 3 भ - सुखमूलं स्त्रियश्चैव 4 च - शीलधराश्च ताः 5 य - देवतासुर भ - देवगन्धर्वदैत्यानां सयक्षोरगरक्षसाम्। पिशाचपक्षि... 6 ढ - वन 7 ड - महिषाश्व भ - महिषप्रभृतीनां च

[1]स्निग्धैरङ्गैरुपाङ्गैश्च स्थिरा मन्दनिमेषिणी ।
अरोगा[2] दीप्त्युपेता च [3]दानसत्त्वार्जवान्विता ॥ १०२
[4]अल्पस्वेदा समरता स्वल्पभुक् सुरत[5]प्रिया ।
[6]गन्धपुष्परता हृद्या देवशीलाङ्गना स्मृता ॥ १०३
अधर्मशाठ्याभिरता[7] स्थिरक्रोधातिनिष्ठुरा ।
मद्यमांसप्रिया[8] नित्यं कोपना चातिमानिनी ॥ १०४
[9]चपला चातिलुब्धा च परुषा कलहप्रिया ।
[10]ईर्ष्याशीला चलस्नेहा चासुरं [11]शीलमाश्रिता ॥ १०५
[12]क्रीडापरा चारुनेत्रा नखदन्तैः सुपुष्पितैः ।
[13]स्वङ्गी च स्थिरभाषी च मन्दापत्या रतिप्रिया ॥ १०६
[14]गीते वाद्ये च नृत्ते च [15]रता हृष्टा मृजावती ।

---

समरतेति नातिमृद्वी नातिखरेत्यर्थः। स्वङ्गीति सुखसन्निवेशान्यङ्गानि यस्या इत्यर्थः।

---

1 ड - स्निग्धा चाङ्गैः...स्थिर च - स्निग्धाङ्गोपाङ्गनयना भ - स्निग्धस्वराङ्गोपाङ्गैश्च 2 भ - दीप्तियुक्ता च दानशील... 3 च - सत्यार्जवदयान्विता ज - दानशक्त्यार्जवान्विता 4 भ - अपस्वेदा 5 भ - सुरभि 6 ड - गान्धर्ववाद्याभिरता हृद्या देवाङ्गना 7 भ - निरता ब - साध्यनिरता 8 प - नित्य 9 भ - वाचाला 10 च - ईर्ष्याशीलाथ निस्नेहा शीलमासुरं 11 भ - सत्त्वं 12 भ - सुनेत्रा कामवशगैः ज - सुनेत्रा कामभोगा च ढ - अनेकारामभोग्या च 13 ड - स्मिताभिभाषिणी तन्वी मन्दाचारा न - तन्वङ्गी स्मितभाषी भ - तन्वङ्गी नित्यहृष्टा च मन्दापत्या मृजावती ज - तन्वङ्गी स्मितभाषा च मन्दा गत्या मृदुस्तथा 14 भ - गीतनृत्ते सदासक्ता विदग्धा सुरभिप्रिया 15 ज - नित्यं

गन्धर्वसत्त्वा[1] विज्ञेया स्निग्धत्वक्केशलोचना॥ १०७

[2]बृहद्व्यायतसर्वाङ्गी रक्तविस्तीर्णलोचना।

[3]खररोमा दिवास्वप्न[4]निरतात्युच्चभाषिणी ॥ १०८

नखदन्तक्षतकरी क्रोधेर्ष्या कलहप्रिया।

[5]निशाविहारशीला च राक्षसं [6]शीलमाश्रिता ॥

तीक्ष्णनासाग्रदशना सुतनुस्ताम्रलोचना।

नीलोत्पलसवर्णा च[7]स्वप्नशीलाऽतिकोपना ॥ ११०

तिर्यग्गतिश्चलारम्भा[8] बहुश्वासातिमानिनी[9]।

गन्धमाल्यासवरता[10] नागसत्त्वाऽङ्गना स्मृता ॥ १११

[11]अत्यन्तव्यावृतास्या च तीक्ष्णशीला सरित्प्रिया।

सुरासवक्षीररता[12] बह्वपत्या फलप्रिया ॥ ११२

नित्यं [13]श्वसनशीला च [14]तथोद्यान[15]वनप्रिया।

[16]चपला बहुवाक्छीघ्रा शाकुनं [17]सत्त्वमाश्रिता ॥ ११३

---

व्यावृतं विस्तीर्णमास्यमन्तर्मुखं यस्याम् । निष्कुटे गृहारामे चरतीति (निष्कुट-

---

1 च - शीला 2 ड - बृहदायत 3 ड - भूरि ढ - हरि 4 च - स्वभावा ढ - निवृत ड - निवृत्त ज - नियत भ - नित्यमत्युच्च 5 भ - निशापि चारशीला या 6 ब - सत्त्वं 7 भ - स्वल्पनिद्रा ड - स्वप्नोद्वेगा 8 भ - चलरसा बहुसत्त्वाति (ब - अभि) 9 ड - बहुसत्त्वाभिनन्दिनी 10 ड - माल्यादिनिरता 11 च - अत्यर्थं व्यापृतास्या भ - तन्वङ्गी दीर्घवदना 12 भ - क्रीतिरसा 13 भ - चासन 14 ड - सदा 15 च - रति 16 भ - चला बहुलपा शीघ्रा 17 ड - शीलं

[1]ऊनाधिकाङ्गुलिकरा[2] [3]रात्रौ निष्कुटचारिणी ।
बालोद्वेजनशीला च पिशुना [4]क्लिष्टभाषिणी ॥
[5]सुरते कुत्सिताचारा रोमशाङ्गी महास्वना[6] ।
पिशाचसत्त्वा विज्ञेया मद्यमांस[7]बलिप्रिया ॥ ११५
[8]स्वप्नप्रस्वेदनाङ्गी च [9]स्थिरशय्यासनप्रिया ।
मेधाविनी बुद्धिमती[10] मद्यगन्धामिषप्रिया ॥ ११६
[11]चिरदृष्टेषु हर्षं च कृतज्ञत्वादुपैति सा[12] ।
अदीर्घ[13]शायिनी चैव यक्षशीलाऽङ्गना स्मृता ॥ ११७
[14]तुल्यमानावमाना या परुषत्वक् खरस्वरा[15] ।
[16]शठानृतोद्धतकथा व्यालसत्त्वा च पिङ्गदृक्[17] ॥ ११८
आर्जवाभिरता नित्यं दक्षा क्षान्तिगुणान्विता ।
विभक्ताङ्गी कृतज्ञा च गुरुदेवद्विजप्रिया[18] ॥ ११९
धर्मकामार्थ[19]निरता ह्यहङ्कारविवर्जिता ।

---

चारिणी) तच्छीलेति । कुत्सिताचारेति औपरिष्टकादिप्रिया । (बुद्धिमतीति)

---

1 ड - न्यून 2 च - क्रूरा 3 भ - रात्रिसंचरणप्रिया 4 भ - मृदु च - श्लिष्ट ड - हृत्त 5 ड - सुरतेषूज्झिताचारा 6 भ - सुनिष्ठुरा 7 च - रति ब - अशन ड - आसव 8 भ - सुप्त 9 भ - प्रियशय्यासनास्थिरा 10 ड - तु सूद्वङ्गी 11 भ - नित्यदृष्टा कृतज्ञा च स्थूलाङ्गा प्रियदर्शना ड - चिरदृष्टे तु 12 च - वा 13 भ - केशिनी चैव ज्ञेया यक्षाङ्गना हि सा च - गमना चैव ज्ञेया यक्षान्वयाङ्गना 14 च - मानापमानयोस्तुल्या परुषत्वक्कटुकाक्षरा (ज - च कटुस्वना) 15 भ - परुषत्वात्पटुस्वना 16 च - शठाकृत भ - शाठ्ययुक्त 17 च - पिङ्गदृग्व्यालवेशाजा भ - अथ पिङ्गली 18 च - देवार्चने रता 19 च - नित्या च वश्याहंकारवर्जिता

सुहृत्प्रिया [1]सुशीला च मानुषं सत्त्वमाश्रिता ॥ १२०

संहताल्पतनु[2]र्हृष्टा पिङ्गरोमा [3]छलप्रिया ।

[4]प्रगल्भा चपला तीक्ष्णा वृक्षाराम[5]वनप्रिया ॥ १२१

स्वल्पमप्युपकारं तु नित्यं या[6] बहुमन्यते ।

प्रसह्यरतिशीला च [7]वानरं सत्त्वमाश्रिता ॥ १२२

महाहनुर्ललाटा [8]च [9]शरीरोपचयान्विता ।

पिङ्गाक्षी रोमशाङ्गी च गन्धमाल्यासव[10]प्रिया ॥ १२३

कोपना स्थिरचित्ता[11] च [12]जलोद्यानवनप्रिया ।

मधुराभिरता चैव हस्तिसत्त्वा प्रकीर्तिता[13] ॥ १२४

स्वल्पोदरी [14]भग्ननासा तनुजङ्घा [15]वनप्रिया ।

[16]चलविस्तीर्णनयना चपला शीघ्रगामिनी ॥ १२५

[17]दिवात्रासपरा [18]नित्यं गीतवाद्यरतिप्रिया[19] ।

[20]निवासस्थिरचित्ता च[21] मृगसत्त्वा प्रकीर्तिता ॥ १२६

---

अशेषाविस्मरणं बुद्धिः प्रतिभा । प्रसह्येति कामुकमभियुज्येत्यर्थः । निवास

---

1 भ - तथा चैव 2 भ - धृष्टा पिङ्गायतशिरोरुहा 3 च - फल 4 भ - चलचित्तास्थिरा...रतिप्रिया 5 ड - सरित् च - रति 6 भ - उपकृतं तु या नित्यं 7 च - कपिसत्त्वं समाश्रिता 8 भ - या उत्सेध 9 ड - मांसल 10 भ - आमिष 11 च - सत्त्वा 12 भ - तथोद्यानरति 13 ड - रतिप्रिया 14 च - मग्ननासा प - भुग्न भ - मन्द 15 भ - जन 16 ड - रक्त 17 भ - परि 18 च - भीरूरोमशा गीतलोभिनी 19 भ - वाद्यप्रिया तथा 20 च - कोपनायतसत्त्वा च मृगसत्त्वाङ्गना स्मृता (ड - स्थिर) 21 भ - भूमिनिरता

दीर्घपीनोन्नतोरस्का [1]चला नातिनिमेषिणी ।
[2]बहुभृत्या बहुसुता मत्स्यसत्त्वा जलप्रिया ॥ १२७
लम्बोष्ठी स्वेदबहुला किञ्चिद्विकटगामिनी ।
कृशोदरी पुष्पफल[3]लवणाम्लकटुप्रिया ॥ १२८
[4]उद्बन्धकटिपार्श्वा च स्वर[5]निष्ठुरभाषिणी ।
[6]अत्युन्नतकटीग्रीवा [7]उष्ट्रसत्त्वाऽटवीप्रिया ॥ १२९
स्थूलशीर्षा[8]ञ्चितग्रीवा [9]दारितास्या महास्वना ।
ज्ञेया मकरसत्त्वा च[10] क्रूरा मत्स्यगुणैर्युता ॥ १३०
स्थूलजिह्वोष्ठदशना[11] रूक्षत्वक्कटुभाषिणी ।
रतियुद्धकरी[12] धृष्टा[13] नखदन्तक्षतप्रिया ॥ १३१
[14]सपत्नीद्वेषिणी दक्षा चपला शीघ्रगामिनी ।
[15]सरोगा बह्वपत्या च खरसत्त्वा प्रकीर्तिता ॥ १३२
[16]दीर्घपृष्ठोदरमुखी रोमशाङ्गी बलान्विता ।
[17]सुसंक्षिप्तललाटा च कन्दमूलफलप्रिया ॥ १३३

---

इति सौधादिः । (रतियुद्धकरीति) रतौ युद्धमिव । (नखेति) नखदशनप्रका-

---

1 भ - रमोमन्दा (?) च - चलनाति ड - चपला निर्निमेषिणी 2 च - बहुभृता भ - बह्वपत्या तथा चैव 3 भ - क्षारमूल 4 भ - उद्बद्ध 5 भ - प्राया प्रियाशना 6 ड - अभ्युन्नतस्वर 7 च - भवेदुष्ट्री वनप्रिया 8 ड - स्थिर भ - शीलाश्रित 9 भ - तीक्ष्णदंष्ट्रा 10 च - तु 11 ढ - रसना च - वदना 12 च - रता 13 ड - हृष्टा 14 भ - सपक्ष 15 ड - सरोषा 16 भ - कृष्ट-दंष्ट्रोत्कटमुखी ह्रस्वजङ्घा तथैव च 17 भ - अयं श्लोकः भ - मातृकायां न वर्तते

कृष्णा दंष्ट्रोत्कटमुखी [1]ह्रस्वोदरशिरोरुहा ।
हीनाचारा बह्वपत्या [2]सौकरं सत्त्वमाश्रिता ॥ १३४

[3]स्थिरा [4]विभक्तपार्श्वोरुकटीपृष्ठशिरोधरा ।
[5]सुभगा दानशीला च [6]ऋजुस्थूलशिरोरुहा ॥ १३५

[7]कृशा चञ्चलचित्ता च स्निग्धवाक्छीघ्रगामिनी ।
कामक्रोधपरा चैव हयसत्त्वाङ्गना स्मृता[8] ॥ १३६

स्थूलपृष्ठाक्षि[9]दशना तनुपार्श्वोदरा स्थिरा[10] ।
हरिरोमाञ्चिता[11]रौद्री लोकद्विष्टा रतिप्रिया । १३७

किञ्चिदुन्नतवक्त्रा च जलक्रीडावनप्रिया ।
बृहल्ललाटा सुश्रोणी[12] माहिषं [13]सत्त्वमाश्रिता॥ १३८

कृशा तनुभुजोरस्का [14]निष्टब्धस्थिरलोचना ।
संक्षिप्तपाणिपादा च सूक्ष्मरोम[15]समाचिता ॥ १३९

भयशीला जलोद्विग्ना[16] बह्वपत्या [17]वनप्रिया ।
चञ्चला शीघ्रगमना [18]ह्यजसत्त्वाङ्गना स्मृता॥ १४०

---

रादि करोति स्वयं च तदात्मनि बहुमन्यते । (संक्षिप्तपाणीति) संक्षिप्तं परि-

---

1 च - पीवरोरु 2 भ - सौकरीं वृत्तिं 3 ड - स्फीता, ढ - स्थिता 4 भ - निचित 5 च - सुरूपा 6 भ - स्थूलाकुञ्चितमूर्धजा 7 ड - गूढा ड - दृढा 8 भ - प्रकीर्तिता 9 च - अस्थि 10 भ - स्निग्धत्वङ्मेदुराचया ड - उदरास्थिरा प - उदरा स्थिता 11 भ - रोमान्विता ड - खररोमाञ्चिता रौद्रा 12 भ - ललाटजघना 13 प - शीलं 14 ड - निष्टब्धेतर च - निष्टब्धतर 15 च - रूक्ष्म(सूक्ष्म? रूक्ष?)रोमा 16 ड - जडोन्मत्ता भ - अल्पकृष्णा च 17 भ - जन च - धन 18 भ - अजाशीला

[1]उद्धुन्धगात्रनयना विजृम्भणपरायणा।
[2]दीर्घाल्पवदना स्वल्पपाणिपादविभूषिता॥ १४१
[3]उच्चैःस्वना स्वल्पनिद्रा क्रोधना सुकृतप्रिया[4]।
हीनाचारा कृतज्ञा[5] च श्वशीला[6] परिकीर्तिता॥ १४२
[7]पृथुपीनोन्नतश्रोणी तनुजङ्घा सुहृत्प्रिया।
संक्षिप्तपाणिपादा च [8]दृढारम्भा प्रजाहिता॥ १४३
पितृदेवार्चनरता [9]सत्यशौचगुरुप्रिया।
[10]स्थिरा परिक्लेशसहा गवां सत्त्वं समाश्रिता[11]॥
नानाशीलाः स्त्रियो [12]ज्ञेयाः स्वं स्वं सत्त्वं समाश्रिताः।
विज्ञाय च यथासत्त्वमुपसेवेत ताः पुनः[13]॥ १४५
उपचारो यथासत्त्वं स्त्रीणामल्पोऽपि हर्षदः[14]।
महानप्यन्यथायुक्तो नैव तुष्टिकरो भवेत्॥ १४६
[15]यथा संप्रार्थितावाप्त्या[16] रतिः समुपजायते।

मितम्। शीलज्ञानस्योपयोगमाह विज्ञाय च यथासत्त्वमुपसेवेतेति। सत्त्वानुसारेण सेवायाः प्रयोजनमाह उपचारो यथासत्त्वमिति। एवं च सतीत्येतदेव व्यतिरेकेणाह महानप्यन्यथेति। महानिति पूर्णः। अन्यथेति अयथासत्त्वम्।

1 ड - उद्बद्ध 2 भ - श्वदीर्घ ड - दीप्ताल्प च - दीर्घान्त 3 च - उच्चैः स्वराल्पनिद्रा च भ - बहुवाक् स्वल्पनिद्रा च 4 च - बहुभाषिणी भ - सुकृतिप्रिया 5 य - अपकृष्टा 6 भचड - लीला 7 भ - पृथून्नतनितम्बा च 8 च - दृष्टारम्भा 9 च - शुचिसत्त्वा ड - नित्यशौचा 10 य - स्थिर 11 च - उपाश्रिता 12 भ- ज्ञात्वा रतिसत्त्वमवेक्ष्य च। नथोपचर्यं (ब - र्या) तत्त्वज्ञैर्यथा ता रतिमाप्नुयुः। उपचारो (ब - रं) यथा सत्त्वं प्रयुक्तो (ब - क्ते) हर्षवर्धनः (ब - ना) च - उपाश्रिताः 13 च - उपसर्पेद्यथागुणम् ड - उपसर्पेत्ततो बुधः 14 च - प्रयुक्तो हर्षवर्धनः ढ - हर्षितः 15 भ - मातृकायां श्लोकद्वयं न वर्तते 16 ड - वा स्यात्

स्त्रीपुंसयोश्च रत्यर्थमुपचारो विधीयते ॥ १४७

धर्मार्थं हि तपश्चर्या सुखार्थं धर्म इष्यते ।

सुखस्य मूलं प्रमदास्तासु [1]सम्भोग इष्यते ॥ १४८

कामोपभागो[2] द्विविधो नाट्यधर्मेऽभिधीयते[3] ।

बाह्याभ्यन्तरतश्चैव नारीपुरुषसंश्रयः[4] ॥ १४९

आभ्यन्तरः पार्थिवानां [5]स च कार्यस्तु नाटके[6] ।

बाह्यो वेश्यागतश्चैव[7] स च[8] प्रकरणे[9] भवेत् ॥ १५०

[10]तत्र राजोपभोगं[11] तु व्याख्यास्याम्यनुपूर्वशः ।

उपचारविधिं सम्यक्[12] कामतन्त्र[13]समुत्थितम् ॥

[14]त्रिविधा प्रकृतिः स्त्रीणां नानासत्त्वसमुद्भवा ।

---

पुरुषार्थान्तरे कस्मादित्यव्युत्पत्तिर्निर्ऋतेति वेदप्रामाण्यादि दर्शयति धर्मार्थं हीत्यादि । अस्येदानीं सामान्याभिनयस्य प्रकृत उपयोगं दर्शयति कामोपभोगो द्विविध इति । (नाट्यधर्म इति) नाट्योपाये इतिवृत्त इत्यर्थः । अभ्यन्तरमन्तःपुरं तत्र भवः (आभ्यन्तरः) । नाटक इति नाटिकायां चेत्यर्थः । अनुपूर्वश इति (वक्ष्यमाणग्रन्थे मुनिना) स्त्रीणां त्रैविध्यम्, राजोपचारे नायिकायाः कामोपपत्तिः, इङ्गितं इष्टवेदनम्, कामावस्थाः, विप्रलम्भोपचारः, दूतीप्रेषणम्, सन्देशः, रत्युपायचिन्ता, [कन्यामित्रम्], प्रच्छन्नकामितम्,

---

1 प - स्वो 2 ड - उपचारो 3 ड - विधीयते न - विविधो नाट्यधर्मो विधीयते 4 ज - संभवः 5 च - कर्तव्यः स च 6 भ - नाट्यके 7 ड - कृतश्चैव च - वेश्याङ्गनानां तु 8 ड - तु 9 भ - प्रकरणो 10 अयं श्लोकः च - मातृकायां न दृश्यते भ - वस्तु राजोपभोगस्थं 11 ज - चारं 12 भ - चैव 13 ड - सूत्र भ - कामं तत्र ज - समुद्भवम् 14 ड - द्विविधा

[1]बाह्या चाभ्यन्तरा चैव [2]स्याद्बाह्याभ्यन्तरापरा ॥
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गना स्मृता[3] ।
कृतशौचा तु[4] या नारी सा बाह्याभ्यन्तरा स्मृता ॥
अन्तःपुरोपचारे तु[5] कुलजा कन्यकापि वा ।
न हि राजोपचारे तु बाह्यस्त्रीभोग इष्यते ॥ १५४
आभ्यन्तरो भवेद्राज्ञो बाह्यो बाह्यजनस्य च ।
दिव्यवेशाङ्गनानां हि[6] राज्ञां भवति सङ्गमः ॥ १५५
[7]कुलजाकामितं यच्च तज्ज्ञेयं कन्यकास्वपि[8] ।
[9]या चापि वेश्या साप्यत्र यथैव कुलजा तथा ॥ १५६
[10]इह कामसमुत्पत्तिर्नानाभाव[11]समुद्भवा ।
स्त्रीणां वा पुरुषाणां वा उत्तमाधममध्यमा ॥ १५७

---

अन्तःपुरभोगः, [नि]वासकः इत्यादिना क्रमेणेत्यर्थः । राज्ञामभ्यन्तर एव नाटके भोगः, न तु राज्ञामेवेति । वेशो गणिकानां स्थानं तत्र भवाः वेश्याः । (कृतशौचेति) कृतं शौचं शुद्धशीलत्वमेकान्तावरुद्धत्वेन यस्याः, सा च वेश्या पुनर्भवा । कन्येति गणिका कुमार्यपीत्यर्थः । न हि राजोपचारे तु बाह्यस्त्रीभोग इत्यस्यापवादमाह दिव्यवेश्येत्यादि । यथा पुरूरवसः उर्वश्या ।

---

1 भ - बाह्याभ्यन्तरजा चैव तथा चोभयसंश्रिता 2 न - बाह्या चाभ्यन्तरा-परा च - स्यादबाह्योऽभ्यन्तरा परा 3 च - मता 4 च - च 5 ड - चारेषु 6 भ - अङ्गनाभिश्च 7 भ - कुलटाकामिकं (ब - का) 8 भ - इह 9 भ - यत्र (या च ?) वेश्या समा तत्र 10 अयं श्लोको बभ - मातृकयोर्न दृश्यते 11 ड - बीज

[1]श्रवणाद्दर्शनाद्रूपादङ्गलीलाविचेष्टितैः।
मधुरैश्च समालापैः[2] कामः समुपजायते[3] ॥ १५८

[4]रूपगुणादिसमेतं कलादिविज्ञानयौवनोपेतम्।
दृष्ट्वा पुरुषविशेषं नारी मदनातुरा भवति ॥ १५९

ततः कामयमानानां नृणां स्त्रीणामथापि च[5]।
कामभावेङ्गितानीह तज्ज्ञः समुपलक्षयेत् ॥ १६०

---

कामोपचार इति प्रस्तुतस्तत्र कामस्य कथमुत्पत्तिरित्याह श्रवणादिति सर्वत्र शेषः। सीतायाः श्रवणाद्रावणस्य, शकुन्तलादर्शनाद् दुष्यन्तस्य।

रूपं चित्रादि प्रतिकृतिः, ततो वत्सेशस्य दृष्टेऽप्याकारे कामोऽनुत्पद्यमानोऽङ्गलीलालक्षणाद्विचेष्टितादुपजायते, नष्टरागप्रत्यानयनं वा ततो भवति, यथा विशाखदेवस्य निबद्धेऽभिसारिकाबन्धितके(वञ्चितके?)वत्सेशस्य पद्मावतीभट्टशबरीवेषाद्याचरणरूपाल्लीलाचेष्टितात् कामावृत्तिराख्याता। एवं मधुरेऽप्यालापे मन्तव्यम्। माधुर्यमर्थद्वारेण स्वरूपतः। चकारेणान्यदपि निमित्तं दर्शयति। यथा तापसवत्सराजचरिते पद्मावतीं प्रति कामोत्पत्तिर्वत्सेश्वरस्य निमित्तमत्यन्तानुवृत्तिर्नाम। तथा चाह—

मयि मनः प्रणिधाय धृता जटा
न गणितः स्वजनो न नवं वयः।
अनुगमैरिति मामनुरागिणी
व्यवसितादपनेतुमिवेच्छति ॥ इति। (४-८)

कामभावः कामाख्यश्चित्तवृत्तिः, तत्कृतानीङ्गितानि शरीरविकारा इत्यर्थः,

---

1 भ - श्रवणस्पर्शनाद्रूपादङ्गभाव 2 ड - सप्रलापैश्च ढ - संप्रलापेश्च
3 ब - चीयते 4 अयं श्लोको भ - मातृकायां नास्ति 5 भ - वा

[1]ललिता [2]चलपक्ष्मा च [3]तथा च मुकुलेक्षणा ।
स्रस्तोत्तरपुटा चैव काम्या दृष्टिर्भवेदिह ॥ १६१

[4][ [5]वलितान्ता सलालित्यसंमितैर्व्यञ्जितैस्तथा[6] ।
दृष्टिः सा ललिता नाम स्त्रीणामर्धावलोकने ॥] १६२

ईषत्संरक्तगण्डस्तु सस्वेदलवचित्रितः[7] ।
प्रस्पन्दमानरोमाञ्चो मुखरागो भवेदिह[8] ॥ १६३

काम्येनाङ्गविकारेण[9] सकटाक्षनिरीक्षितैः[10] ।
तथाभरणसंस्पर्शैः[11] कर्णकण्डूयनैरपि[12] ॥ १६४

अङ्गुष्ठाग्रविलिखनैः[13] स्तननाभिप्रदर्शनैः[14] ।
नखनिस्तोदना[15]च्चैव[16] केश[17]संयमनादपि ॥ १६५

वेश्यामेवं विधैर्भावै[18]र्लक्षयेन्मदनातुराम् ।
कुलजायास्तथा चैव [19]प्रवक्ष्यामीङ्गितानि तु ॥ १६६

प्रहसन्ती[20]व नेत्राभ्यां प्रततं च[21] निरीक्षते ।
स्मयते [22]सा निगूढं च [23]वाचं चाधोमुखी वदेत् ॥

---

1 एतौ भ - मातृकायां न स्तः 2 भ - पक्ष्मविकारा 3 ड - सास्रा मुकुलितेक्षणा 4 अयं ढड - मातृकयोरेव दृश्यते 5 ड - फुल्लितान्ता 6 ड - लौकनैः 7 ड - च स्वेदबिन्दुविचित्रितः 8 ड - तु कामजः (ढ - दः) 9 भ - विहारेण 10 भ - निरीक्षणैः 11 ड - संस्पर्शात् 12 ड - कण्डूलनादपि ढ - कण्डूयनादपि 13 ड - अग्रेण लिखनात् भ - लेखनाच्चैव 14 भ - प्रदर्शनात् 15 भ - निस्तोदनात् 16 ड - चापि 17 भ - संचयनात् 18 भ - लासयेत् ब - लालयेत् 19 ड - विज्ञेयानीङ्गितानि वै (भ - तु) 20 च - च नेत्राणां पतनं च परीक्षयेत् 21 भ - या 22 ड - च 23 ड - वाक्यं

स्मितोत्तरा मन्दवाक्या स्वेदाकारनिगूहनी[1] ।
प्रस्पन्दिताधरा चैव चकिता[2] च कुलाङ्गना ॥ १६८
[3]एवंविधैः कामलिङ्गैरप्राप्तसुरतोत्सवा ।
[4]दशस्थानगतं कामं नानाभावैः[5] प्रदर्शयेत्[6] ॥ १६९
प्रथमे त्वभिलाषः[7] स्याद् द्वितीये चिन्तनं भवेत् ।
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम् ॥ १७०
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ।
उन्मादः सप्तमे ज्ञेयो भवेद्व्याधि[8]स्तथाष्टमे ॥ १७१
नवमे जडता चैव[9] दशमे मरणं भवेत् ।

---

अप्राप्तसुरतोत्सवेति प्राप्तसंभोगत्वे तु नैते विकाराः प्रादुर्भवन्ति । यदा तु काम उदितस्तदादेः प्राप्तसंभोगता कामावस्थानामुदय एव तथा च प्राप्तसंभोगतायामपि विप्रलम्भे *कुसमसदृक्षादिमहिमानं प्राप्ते कामिजनसंभोगे भवन्त्येवैता अवस्थाः । तथा च भट्टतोतेनोक्तम्—

कामावस्था न शृङ्गारः क्वचिदासां तदङ्गता । इति

पूर्वप्राप्तसंभोगतायामपि शृङ्गाराङ्गतेति यावत् । अप्राप्तसंभोगित्वेऽपि हि सागरिकावत्सराजयोर्दर्शितः शृङ्गारो रसाध्याये ।

अभिलाषात्मकः कामः क्रमादीदृशीर्दशाः प्रतिपद्यत इत्याह प्रथमे त्वभिलाष इत्यादि । अत्र व्यभिचारिण एव [केचित्] कामावस्था लक्षणान्तर-

---

1 प - निगूहिनी ड - निगूहना 2 म - कुलजाङ्गना भ - कुलाङ्गनाम्... सुरतोत्सवाम् 3 भ - विविधैः कामलिङ्गैश्च 4 ड - दशावस्थागतं 5 च - भावं 6 द - प्रकाशयेत् 7 ड - अभिलाषा 8 च - अथ ड - ततः 9 ड - प्रोक्ता

* कामसूत्रं—III - २. (कुसुमसधर्माणो हि योषितः)

स्त्रीपुंसयोरेष विधिर्लक्षणं च निबोधत ॥ १७२

[1]व्यवसायात्समारब्धः संकल्पेच्छासमुद्भवः ।
समागमोपायकृतः[2] सोऽभिलाषः प्रकीर्तितः ॥ १७३

निर्याति विशति च मुहुः[3] करोति चाकारमेव मदनस्य।
तिष्ठति च दर्शनपथे प्रथम[4]स्थाने स्थिता कामे ॥

केनोपायेन संप्राप्तिः कथं वासौ[5] भवेन्मम ।
दूती[6]निवेदितैर्भावै[7]रिति चिन्तां निदर्शयेत् ॥ १७५

आकेक[8]रार्धविप्रेक्षितानि वलयरशनापरामर्शः ।
[9]नीवी[10]नाभ्योः [11]संस्पर्शनं च कार्यं द्वितीये तु॥१७६

---

योगादिह पुनस्ताः । व्यवसायादिति काम्यजनज्ञानं तत्संकल्पपूर्वकेच्छा तत उद्भव उद्रिक्तत्वमस्येति समागमोपायस्य तद्विषयस्य चिन्ता विषयस्य द्वितीयावस्थात्मनः कृतं करणं यतो वक्ष्यति हि केनोपायेन संप्राप्यत इति चिन्तनीयाद्यवस्थासहचरितं कार्यं, वाग्व्यापाराद्युचितः शब्दश्चान्यसाहचर्यादित्याह निर्याति विशति चेत्यादि । मदनस्याकार अपाक्रियते येन दृष्ट्यादिविशेषेण दर्शनपथ इति तं यत्र पश्येत तेन वा दृश्येतेत्यर्थः । दूतीनिवेदितैर्भावैः मनोरथैरित्युपलक्षणं स्वकल्पितैरपीत्यर्थः आकेकरमिति विचलमविचलं विप्रेक्षितम् ।

---

1 भ - व्यवसाय 2 भ - परः 3 भ - निर्गच्छति प्रविशति च 4 म - स्थानस्थिते कामे 5 भच - संप्राप्यः कथं वा स ड - संभवेत् 6 भ - संपादितैः ब - संवादितैः 7 ड - वाक्यैः 8 ड - अक्षि 9 भ - नाभ्यूरुदर्शनं च तथा 10 ड - नाभ्यूरूणां स्पर्शः कार्यो 11 च - संदर्शनं च

मुहुर्मुहुर्निःश्वसितैर्मनोरथविचिन्तनैः ।
[1]प्रद्वेषाच्चान्यकार्याणामनुस्मृतिरुदाहृता[2] ॥ १७७
नैवासने न शयने धृतिमुपलभते स्वकर्मणि विहस्ता
[3]तच्चिन्तोपगतत्वात् तृतीयमेवं प्रयुञ्जीत ॥ १७८
अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टा[4]हसितेक्षितैः[5] ।
नास्त्यन्यः सदृशस्तेनेत्येतत् स्याद्[6] गुणकीर्तनम् ॥
गुणकीर्तनोल्लुकसनै[7]रश्रुस्वेदापमार्जनैश्चापि[8] ।
[9]दूत्यविरहविस्रम्भैरभिनययोगश्चतुर्थे तु ॥ १८०
आसने शयने चापि न तुष्यति न तिष्ठति[10] ।
नित्यमेवोत्सुका च स्यादुद्वेगस्थानमाश्रिता[11] ॥ १८१
चिन्तानिःश्वास[12]खेदेन [13]हृद्दाहाभिनयेन च ।
कुर्यात्तदेव[14] [15]मत्यन्तमुद्वेगाभिनयेन च[16] ॥ १८२
इह स्थित इहासीन इह चोपगतो मया ।

विहस्तेति अशक्ता । दूत्या अविरह इति समासः । उद्वेगाख्यं स्थानमवस्था । उद्वेगाभिनयो निर्वेदे दर्शितः । रुदितनिःश्वसितादिः पूर्वावस्थाया

1 ढ - प्रद्वेषणाच्च कार्याणां च - प्रद्वेषणात्त्वन्य 2 भ - अपीष्यते 3 न - तच्चित्त 4 भ - वाक्येष्ट 5 च - ईक्षणैः 6 भ - इत्यथैतत् 7 भ - उत्ककथनैः च - उल्लुकसूनैः 8 ड - अवमार्जनाद्यापि (भ - चैव) 9 भ - दूतीविहारविस्रम्भणैश्चतुर्थे त्वभिनयः स्यात् च - दूत्या 10 ड - हृष्यति भ - तिष्ठति न हृष्यति 11 च - एव तु भ - उद्वेगं तु विनिर्दिशेत् ड - एव तत् 12 ड - खेदैश्च हृत्ताप 13 भ - हृच्छोका 14 भ - तमेवं 15 ड - अत्यर्थं 16 भ - नयं बुधः

इति तैस्तैर्विलपितैर्विलापं संप्रयोजयेत्[1] ॥ १८३

[2]उद्विग्नात्यर्थमौत्सुक्याद्धृत्या च विलापिनी[3] ।
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता ॥ १८४

[4]तत्संश्रितां कथां युङ्क्ते सर्वावस्थागतापि हि ।
[5]पुंसः [6]प्रद्वेष्टि चाप्यन्यानुन्मादः संप्रकीर्तितः[7] ॥ १८५

तिष्ठत्यनिमिष[8]दृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम्
रोदिति [9]विहारकाले [10]नाट्यमिदं स्यात्तथोन्मादे ॥

सामदानार्थसंभोगैः [11]काम्यैः [12]संप्रेषणैरपि ।
सर्वै[13]र्निराकृतैः पश्चाद्[14] व्याधिः समुपजायते ॥

---

उत्तरावस्थान्तरीभवतीति दर्शयति उद्विग्ना सती विलापिनी भवतीति । सर्वावस्थागतापीति गुरुजनसन्निधावपीति, अनेनोन्मादत्वं स्फुटयति । विहारकाल इति क्रीडोचितेषु कालेषु रोदितीत्यर्थः । नाट्यमिति न तु पटशकलवक्रशरावाद्य*-त्रोन्मादोक्तमिति भावः । इयत्युन्मादपर्यन्ते प्राप्ते चित्तवृत्तिभवे कामे शरीरमप्य-न्यथाभवतीत्याह सर्वैर्निराकृतैः पश्चाद्व्याधिरिति । निराकृतैः विफलीभूतैः ।

---

1 भ - तु विनिर्दिशेत् ड - विलापस्त्विति दर्शितः (ढ - स्त्वभिदर्शितः) 2 अयं भ - मातृकायां न दृश्यते 3 च - अरत्या च विलापनी ड - रत्या चापि विलापिनी 4 भ - तत्संश्रयां ड - तत्संश्रयकथायुक्ता च - मातृकायामिदमर्धं न वर्तते 5 च - प्रद्वेष्टि चापरान्पुंसो यत्रोन्मादः स उच्यते 6 ड - प्रद्वेषितान्यश्चैष स्यात् 7 भ - स उन्मादो विधीयते 8 भ - अनियम 9 भ - विकार 10 य - लास्यं 11 भ - काम्य 12 च - संपेक्षणैः 13 भ - निरन्तरकृतैस्ततो व्याधिर्भवेदिह 14 च - सर्वैरवनाकारणात् (?)

---

* पटच्छेदकाशरावाद्य—क

मुह्यति हृदयं [1]क्वापि प्रयाति शिरसश्च वेदना तीव्रा ।
न धृतिं चाप्युपलभते ह्यष्टममेवं प्रयुञ्जीत[2] ॥ १८८

[3]पृष्टा न किंचित् प्रब्रूते न शृणोति न पश्यति ।
[4]हाकष्टवाक्या तूष्णीका जडतायां गतस्मृतिः ॥ १८९

अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका ।
श्वासग्रस्तानना चैव जडताभिनये भवेत् ॥ १९०

[5]सर्वैः कृतैः प्रतीकारैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया [6]जायते मरणं ततः ॥ १९१

एवं स्थानानि कार्याणि कामतन्त्रं समीक्ष्य तु[7] ।
[8]अप्राप्तौ यानि काम्यस्य[9] वर्जयित्वा तु नैधनम् ॥

[10]विविधैः पुरुषोऽ[11]प्येवं विप्रलम्भसमुद्भवैः[12] ।
भावैरेतानि कामस्य नानारूपाणि योजयेत्[13] ॥ १९३

मुह्यतीत्यत्र हेतुः, यतो हृदयं नावतिष्ठति । हा कष्टमिति एतद्व्यतिरेकेण तूष्णीका एतदेव भाष्यत इति यावत् । प्रतीकारैरिति समागमोपायैरित्यर्थः । नैधनं मरणम् । नानारूपाणीति अवस्था इत्यर्थः ।

---

1 भ - क्वापि हि गच्छति शिरश्च ड - दह्यत्यङ्गं 2 भ - अष्टमवामस्थिते कामे च - त्वभिनयेत् 3 भ - किञ्चिद्ब्रवीति नो पृष्टा 4 ड - तूष्णीं हाकष्टभाषा च नष्टचित्ता जडा स्मृता भ - विक्षिप्तनिस्सहाङ्गा च नष्टचिन्ता जडस्मृतिः 5 ड - प्रतीकारैः कृतैः सर्वैः (भ - स्मृतैः) 6 ड - भवेत्तु 7 भ - अवेक्ष्य तु च - तन्त्रसमीक्षया 8 भ - अप्राप्तानि हि कामस्य 9 ड - कामस्य 10 च - त्रिविधैः 11 ड - हि 12 भ - अनुसूचकैः 13 ड - कारयेत्

[1]एवं कामयमानानां स्त्रीणां नृणामथापि वा ।
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ॥ १९४
चिन्तानिःश्वासखेदेन [2]हृद्दाहाभिनयेन च ।
तथानुगमनाच्चापि तथैवाध्व[3]निरीक्षणात् ॥ १९५
आकाशवीक्षणाच्चापि तथा दीनप्रभाषणात् ।
स्पर्शनान्मोटनाच्चापि तथा [4]सापाश्रयाश्रयात् ॥
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ।
कामस्थानानि सर्वाणि भूयिष्ठं संप्रयोजयेत् ॥ १९७
[5]स्रजो भूषणगन्धांश्च गृहाण्युपवनानि च ।
[6]कामाग्निना दह्यमानः शीतलानि निषेवते ॥ १९८
[7]प्रदह्यमानः कामार्तो [8]बहुस्थानसमर्दितः ।
प्रेषये[9]त्कामतो दूतीमात्मावस्थाप्रदर्शिनीम्[10] ॥ १९९
सन्देशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् ।

---

पुरुषस्य सुलभोपायत्वान्मध्य एव समागमः शक्यक्रियः, न तु योषितामित्याशयेन कामावस्थाः स्त्रीषूपदिष्टाः, पुरुषेष्वतिदिष्टाः ।

स्रजो भूषणगन्धांश्चेत्यादिना यदुक्तं तद्यथायोगमवस्थासु योज्यम् ।

---

1 भ - मातृकायां श्लोकचतुष्टयं न वर्तते 2 ड - देहस्यायासनेन च 3 च - अर्धं 4 च - पापाश्रय ड - चोपाश्रय 5 ड - वासो भ - वासश्चन्दन 6 भ - भूयिष्ठं दह्यमानो हि 7 ड - प्रसह्यमानः 8 भ - नवस्थानसमन्वितः 9 च - कामदूतीं तु स्वावस्थादर्शनं प्रति भ - कामदूतीं तु निजावस्थां प्रदर्शयेत् कामुको... निवेदिनीम् 10 ड - प्रशंसिनीम्

[1]तस्येयं समवस्थेति कथयेद्विनयेन सा ॥ २००
[2]अथावेदित[3]भावार्थो रत्युपायं विचिन्तयेत् ।
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिते[4] ॥ २०१
[5]विधिं राज्ञोपचारस्य पुनर्वक्ष्यामि तत्त्वतः ।
अभ्यन्तर[6]गतं सम्यक् कामतन्त्रसमुत्थितम् ॥ २०२
सुखदुःखकृतान् भावान् नानाशील[7]समुत्थितान् ।
यान्यान् प्रकुरुते राजा तांस्तान् लोकोऽनुवर्तते ॥
न दुर्लभाः [8]पार्थिवानां स्त्र्यर्थमाज्ञाकृता गुणाः ।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् ॥ २०४
बहुमानेन [9]देवीनां वल्लभानां भयेन च ।

---

प्रच्छन्नकामितं नायिकान्तरेभ्यः सन्ध्रियमाणमित्यर्थः ।

ननु राज्ञां किमशक्यं येन दूतीप्रेषणादिप्रयासमनुभवन्तीत्याह न दुर्लभाः पार्थिवानामित्यादि । आज्ञाकृता गुणा उपायाः उप प्रलम्भादुदाहरणात् अय इत्यर्थः । राज्ञां ये उपाया इति सम्बन्धषष्ठी तेन बलार्थेऽभिमतनिषेधः । दाक्षिण्यादित्युभयविषयम्, पूर्वनायिकासु च दाक्षिण्यं, अभिलषणीयप्रमदाकृतं च दाक्षिण्यम्, तस्या राजविषयं प्रेमेत्यर्थः । कुतः प्रच्छन्नत्वमित्याह बहुमानेनेति कर्मषष्ठी । देव्यो हि प्राप्ताभिषेका अवश्यं राज्ञा बहुत्वेनोत्कृष्ट-

---

1 भ - इयं तस्य त्ववस्था हि निवेद्या प्रश्रयादिति ड - तस्याप्यवस्थेति निवेद्यं प्रश्रयादिभिः 2 च - अथ वेदित 3 भ - भावार्थैरभ्युपायं 4 भ - कामितैः 5 भ - तत्र राजोपचारस्य व्याख्यास्याम्यनुपूर्वशः । विधिमाभ्यन्तरं 6 ड - गतान् ... तन्त्रे समुत्थितान् 7 भ - शिल्प 8 भ - तु ते राज्ञां स्त्रीसंभोगकृता गुणाः च - दुर्लभः ... कृतो गुणः ड - नृपाणां तु स्त्रियो ह्याज्ञाकृता गुणाः 9 भ - चोरीणां

प्रच्छन्नकामितं [1]राज्ञा कार्यं परिजनं प्रति ॥ २०५
यद्यप्यस्ति नरेन्द्राणां[2] कामतन्त्र[3]मनेकधा ।
प्रच्छन्नकामितं यत्तु तद्धै रतिकरं भवेत् ॥ २०६
[4]यद्वामाभिनिवेशित्वं [5]यतश्च विनिवार्यते ।
दुर्लभत्वं च यन्नार्याः [6]सा कामस्य परा रतिः ॥ २०७
राज्ञामन्तःपुरजने दिवासंभोग इष्यते ।
वासोपचारो यश्चैषां[7] स रात्रौ परिकीर्तितः ॥ २०८

---

त्वेन माननीयाः । अनेकधेति विवाहितावरुद्धेत्यादिनेत्यर्थः । वामाभिनिवेशित्वमिति "सुलभावमानी हि मदन" इति विघ्नः, तथाप्यभिलष्यमाणं वस्तु प्राप्तं चेत् कोऽभिलाषः, तेन प्राप्तं प्राप्तमपहारितमिव गतं, गतं प्राप्तमिवेत्येवम् । (दुर्लभत्वमित्यादि) पराक्रमेण [विद्धि] विष्णुरयं काम उत्तमतमां प्रीतिं प्रतिप्रतनोति न खल यायामिव (भयादिव?) निवृत्तिः साध्या, अपि तु भौमात्मकं सुखं भोगस्त्वसति कामे तेन (केन?) प्रत्युत संभवनीयः‡ । रतिरिति तद्धेतुत्वादित्यर्थः ।

अथ स्पष्टकामितमाह राज्ञामन्तःपुरजने (दिवा)संभोग इति । संभोगः परस्परावलोकनप्रणयकलहसङ्गीतकादि । यथोक्तम्—"तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः"* इति । अन्तःपुरजनोऽत्र ऊढा, पुनर्भूः, अवरुद्धगणिका, कन्यकाप्रेष्याविषयं तु प्रच्छन्नकामितमुक्तम् ।

---

1 भ - राज्ञः 2 च - नृपाणां तु 3 भ - कामद्रव्यं 4 भ - संभाव्यते भयं यत्र यतश्चैव निवार्यते । दुर्लभं यत्तु तत्रासौ कामो रतिकरो भवेत् 5 च - यतश्चैव 6 ड - कामिनः सा रतिः परा 7 भ - चैव ‡ व्याख्येयमस्फुटा भ्रष्टपतिताक्षरत्वात् ।

---

* पूर्णः श्लोकः—
तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा
तद्गोष्ठ्यैव निशापि मन्मथकृतोत्साहैस्तदङ्गार्पणैः ।
तां संप्रत्यपि मार्गदत्तनयनां द्रष्टुं प्रवृत्तस्य मे
बद्धोत्कण्ठमिदं पुनः किमथवा प्रेमा समाप्तोत्सवः ॥ तापस १—१६.

[1]परिपाट्यां फलार्थे वा [2]नवे प्रसव एव वा ।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः[3] ॥ २०९
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः[4] ।
[5]प्रेष्याणामथवेष्टानां[6] कार्यं[7] चैवोपसर्पणम् ॥ २१०

---

प्रभूतान्तरपूर्वस्य वासकवृत्तान्तमाह—

परिपाट्यां फलार्थे वा नवे प्रसव एव वा ।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ॥ इति

परिपाटिर्यथाकल्पितानुपूर्वी अस्या एकेन भिन्नेन वारः, अस्या द्वाभ्यामित्यादि । तदपवादमाह फलार्थ इति ऋताविति यावत् । नव इति नवत्वे प्रसवे वृत्ते चिरविरहखिन्ना सुखायितं दुःखे तदीयबन्धुव्यापत्त्या दुःखिता आश्वासनीयेति । प्रमोद इति तदीयपुत्रोत्सवादौ 'उत्सवो हि माननीय' इत्युक्तम् । वासयति तत्र स्थाने रात्रमिति वासः । अत्र उचितः कामोपचारः फलार्थ इत्यस्य हेतोः सर्वापवादकत्वं दर्शयितुं धर्मवृत्तिना राज्ञा परिचार्यो द्वेष्या दुर्भगा अपि सेव्या इति निरूपयितुमाह—

उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः ।
प्रेष्याणामपि सर्वासां कार्यं (चैवोपसर्पणम्) ॥ इति

आर्तवकालो हि भूयानपि *फलतः परमिति भवति । यथोक्तम्—

ऋतुः षोडश तत्राद्याश्चतस्रो दशमात्परा
त्रयोदशी च निन्द्याः स्युरयुगाः कन्यकोद्भवाः ।
षष्ठ्यष्टमी च दशमी द्वाभ्यां वर्णैश्च साधिका
युग्मा पुत्राय रात्रिः स्यात् ॥ इति ।

---

1 भ - परिपाट्या कुलार्थे च नवप्रसवसंगमे 2 ड - नव...च 3 ड - इति । 4 भ - बुधैः 5 डभनम - द्वेष्याणां 6 भ - अवचेष्टानां 7 च - वेश्यानामपि कर्तव्यमिष्टानां

* परतः

तत्र वासकसज्जा च[1] विरहोत्कण्ठितापि वा।
स्वाधीनभर्तृका चापि[2] कलहान्तरितापि वा[3]॥ २११
खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका।
तथाभिसारिका चैव ज्ञेयास्त्वष्टौ तु नायिकाः[4]॥ २१२
उचिते वासके या तु रतिसंभोगलालसा।
[5]मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका॥ २१३
अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रियः।
[6]तदनागतदुःखार्ता विरहोत्कण्ठिता तु सा[7]॥ २१४
[8]सुरतातिरसैर्बद्धो यस्याः पार्श्वे तु नायकः[9]।

---

तत्रापि नक्षत्रविशेषपरिवर्जनम्। पुत्रश्च राज्ञां मुख्यफलम्, यथाह 'प्रजायै गृहमेधिनाम्' (रघु—१) इति। अत्र तु वृद्धपशुव्यो (पशवो?)वदन्ति—

मासपसूआ... ..(षण्)मासगब्भिणी एकदिअहज्जरमुहे... .. ।* (इति यत्तन्निषिद्धं स्मृतौ वैद्यके च।)

वासकभावाभावभावितान्नायिकाभेदान्दर्शयति अत्र (तत्र?) वासकसज्जेति। एताः क्रमेण लक्षयति उचिते वासक इत्यादिना। उचितः पूर्वोक्तेन नयेनायातः। लालसा साभिलाषा।

---

1 ड-वा 2 ड-चैव 3 च-तथा 4 भ-इत्यष्टौ नायिकाः स्मृताः 5 च-मङ्गलं 6 च-तस्यानुगम ड, अनागमन भ- तदनागम 7 न-मता 8 भ-सुरतविरसैर्बद्धा (?) ड-सुरतैश्चरितैः 9 च-पार्श्वगतः प्रियः। सामोदे गुणसंयुक्ता

---

* पूर्णा चास्फुटार्थेयं गाथा कोक्कोकवचनस्य मूलं स्यात्। यथा—
रङ्गादिश्रान्तदेहा चिरविरहवती मासमात्रप्रसूता
गर्भालस्या च नव्यज्वरयुततनुका त्यक्तमानप्रसन्ना।
स्नाता पुष्पावसाने नवरतिसमये मेघकाले वसन्ते
प्रायस्संपन्नरागा मृगशिशुनयना स्वल्पसाध्या रते स्यात्॥

[1]सान्द्रामोदगुणप्राप्ता भवेत् स्वाधीनभर्तृका ॥ २१५
ईर्ष्याकलहनिष्क्रान्तो यस्या नागच्छति प्रियः।
[2]सामर्षवशसंप्राप्ता[3] कलहान्तरिता भवेत् ॥ २१६
[4]व्यासङ्गादुचिते यस्या वासके नागतः प्रियः।
[5]तदनागमदुःखार्ता खण्डिता सा प्रकीर्तिता ॥ २१७
यस्या [6]दूतीं प्रियः प्रेष्य दत्त्वा संकेतमेव वा।
नागतः कारणेनेह[7] विप्रलब्धा तु सा भवेत्[8] ॥२१८
[9]नानाकार्याणि सन्धाय यस्या वै प्रोषितः [10]प्रियः।
सा(प्र?)रूढालककेशान्ता भवेत् प्रोषितभर्तृका ॥
[11]हित्वा लज्जां [12]तु या श्लिष्टा मदेन मदनेन च[13]।
अभिसारयते कान्तं सा भवेदभिसारिका ॥ २२०

---

स्वाभिलाषा। आमोदगुणो हर्षः सौभाग्याभिमानश्च। व्यासङ्गादित्यन्यनारीविषयादित्यर्थः। (प्र)रूढाः प्रलम्बीभूता अलकाः, केशान्तश्च कबरीभारः। प्ररूढ एकवेणीभूते यस्याः। अन्ये त्वकृतकर्मतया केशान्ते ललाटे रोम्णामुद्भेदमुत्प्ररूढं वर्णयन्ति। मदो मद्यकृतः, चकाराद् द्वयं वदन्मदनस्यैव प्राधान्यमाह। अभिसरः सहायः तस्य व्यापारेण प्रियतममतिक्रामति, "तत्करोति तदाचष्टे तेनातिक्रामति धातुरूपं" चेति स्पष्ट (स्थ-टेः?) इत्यस्य वृद्धिः। कुप्यन्ती

---

1 भ सामोदगुणसंप्राप्ता 2 भ - अमर्ष 3 च - संतप्ता 4 भ - अभिनवोचिते 5 ड - तस्यानागम च - तदनागमनार्ता तु खण्डितेत्यभिधीयते 6 च - दूत्या प्रियः...गत्वा ड - दूतीप्रियं 7 भ - पेत्र 8 भ - स्मृता 9 च - गुरुकार्यान्तरवशाद्यस्या विप्रोषितः 10 भ - अभिसंबन्धाद्यस्या विप्रोषितः ड - अर्थसंबन्धैर्यस्या विप्रोषितः 11 भ - या निर्लज्जेन संबद्धा (प - या नैर्लज्ज्येन) 12 ड - समाकृष्टा 13 च ड - वा प - या

आस्ववस्थासु [1]विज्ञेया नायिका नाटकाश्रया ।
एतासां [2]चैव वक्ष्यामि [3]कामतन्त्रमनेकधा ॥ २२१
चिन्तानिःश्वासखेदेन[4] [5]हृद्दाहाभिनयेन च ।
[6]सखीभिः सह संलापै[7]रात्मावस्थावलोकनैः ॥ २२२
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च ।
[8]निर्भूषणमृजात्वेन दुःखेन रुदितेन च ॥ २२३
[9]खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
तथा प्रोषितकान्ता च [10]भावानेतान् प्रयोजयेत् ॥
विचित्रोज्ज्वलवेषा तु[11] प्रमोदोद्द्योतितानना ।
उदीर्णशोभा च तथा[12] कार्या स्वाधीनभर्तृका ॥ २२५

---

प्रशान्तेत्यादयस्तु नायिकाभेदे नेहोक्ताः, तेषां वासकाभावनिवृत्तत्वाभावात् । नाटकाश्रया इति नाट्यविषया इत्यर्थः ।

तत्र विप्रलम्भजीवितं शृङ्गारेण वासकाभावभावितनायिकाभेदाश्रयं प्रथमं दर्शयति चिन्तानिःश्वासखेदेनेत्यादिना । सामान्यभूते सकलहृदयसंवादिनि मदनोपचारे चायमभिनय इत्यपि सामान्याभिनयः । भावानेतानिति पठितानुभावव्यभिचारिसमुचिता ये भावा व्यभिचारिस्थायिरूपा(णामि) हापठितमप्यनुभावजातं प्रदर्शयति यावत् । वासकसज्जा अभिसारिका च स्वावसरे स्वाधीनभर्तृकयैव तुल्ये इति पृथङ्नोक्ते ।

---

1 भ - सर्वासु 2 भ - संप्रवक्ष्यामि कामतन्त्रप्रयोजनम् 3 ड - यथायोगं प्रयोक्तृभिः ड - यथायोज्यं 4 च - खेदैश्च 5 च - हृदया भ - हृत्ताप 6 ड - सखीनां संप्रलापैश्च 7 भ - निज 8 य - निर्भूषणा न - विभूषणा च - निर्भूषणाङ्गी विमृजा 9 भ - खण्डितां...लब्धां...तामपि । ...कान्तां च भावैरेतैः प्रदर्शयेत् 10 डच - भावैरेवं 11 च - च 12 च - अतिशया

[1]वेश्यायाः कुलजायाश्च प्रेष्यायाश्च प्रयोक्तृभिः ।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ॥ २२६

समदा मृदुचेष्टा च तथा परिजनावृता ।
नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गना शनैः[2] ॥ २२७

संलीना स्वेषु गात्रेषु त्रस्ता [3]विनमितानना ।
अवकुण्ठनसंवीता गच्छेत्तु[4] कुलजाङ्गना ॥ २२८

मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा गच्छेत्प्रेष्या समुद्धतम्[5] ॥ २२९

[6]गत्वा सा चेद्यदा तत्र[7] पश्येत्सुप्तं प्रियं तदा[8] ।
[9]अनेन तूपचारेण [10]तस्य कुर्यात्प्रबोधनम् ॥ २३०

अलङ्कारेण कुलजा वेश्या गन्धैस्तु शीतलैः ।
प्रेष्या [11]तु वस्त्रव्यजनैः [12]कुर्वीत प्रतिबोधनम् ॥

---

अथाभिसारणस्वरूपमाह वेश्याया इत्यादि । भावविशेषैरिति वस्तुविशेषैरित्यर्थः । संलापो दूत्या सख्या सहोक्तिप्रत्युक्तिः । (अलङ्कारेणेति) अलङ्कारशब्दो नूपुरादि(वि)शिष्टः [तत्] ।

---

1 भ - वेश्यानां कुलजाया वा प्रेष्याया वा ड - वेश्याया ..जाया वा प्रेष्याया वाथवा नृपैः प - वेश्यायां कुलजायां च 2 ज जनैः 3 च - विप्रेक्षित ड - अवनमित भ - विक्षिप्तलोचना 4 च - च भ - गच्छेत 5 भ - प्रेष्याङ्गना तथा (ड - नवा) 6 भ - रहोगतं तु संप्राप्ता च - स्यादयं शयितो व्यक्तं ड - गत्वा सा वदति व्यक्तं 7 ज - व्यक्तं 8 च - यदा भ - सदा ड - ततः 9 भ - प्रिया यथोत्थापयति तथा वक्ष्याम्यहं पुनः 10 ड - कुर्याद्वै प्रति 11 ड - अथ वस्तु 12 च - बोधयेच्छयितं प्रियम्

[1]कुलाङ्गनानामेवायं [2]नोक्तः कामाश्रयो विधिः ।
सर्वावस्थानु[3]भाव्यं हि[4] यस्माद्भवति नाटकम् ॥
[5]नवकामप्रवृत्ताया क्रुद्धाया वा समागमे ।
[6]सापदेशैरुपायैस्तु वासकं संप्रयोजयेत्[7] ॥ २३३
नानालङ्कारवस्त्राणि गन्धमाल्यानि चैव हि[8] ।
[9]प्रियायोजितभुक्तानि निषेवेत मुदान्वितः[10] ॥ २३४

---

ननु राज्ञां वेश्यादिसंभोगो निह्नवकारापायसङ्कुलत्वात् किमिहानेन दर्शितेनेत्याशङ्क्याह सर्वावस्थानुभाव्य हि कार्यं नाटकमिति नाट्य इति यावत् । सर्वावस्था अनुभाव्या प्रत्यक्षायमाणत्वं नेया, यत्र प्रकरणादौ वेश्यासंभोगोऽप्यस्तीत्युक्तं दशरूपके (अध्या—१८) यदि तर्हि सर्वतः प्रकारो नाटके प्रदर्श्यस्तदा वासके यदा प्रकटप्रकार उक्तः ।

एवं व्याजप्रकारोऽपि वाच्य इत्याशयेनाह नवकामप्रवृत्ताया इति । नवे पुरुषसम्भोगे या प्रवृत्ता प्रथमसमागमनीया वेश्या पूनर्भूर्गान्धर्वविवाहविवाह्या कन्या वा तस्याः समागमे चिकीर्षिते, सव्याजैः उपायैः वासको व्याजश्च यथा तथैव प्रकटं नाङ्गीकरोति, नायिकान्तरेभ्यश्च झटिति भीरुर्नायको भवति । अवरुद्धापि खण्डिता कलहान्तरिता वा वासकमनङ्गीकुर्वती व्याजतोऽङ्गीकार्यते । तत्र नायिकाहृदयग्रहणोचितविदग्धतानिमित्तं नायकस्योपचारमाह नानालङ्कारेत्यादि ।

---

1 ड - मातृकायामाधिकः पाठः—निर्भर्त्सनपरं प्रायस्तथाश्वसनपेशलम् । निष्ठुरं मधुरं चैव सखीनामपि जल्पनम् 2 च - प्रोक्तः 3 ड - स्थान 4 च - तु 5 च - भय ड - न च 6 भ - नानोपायैः समाधाय 7 च - संप्रकल्पयेत् 8 भ - यानि यानि च माल्यानि धूपगन्धाम्बराणि च 9 "प्रिया" आरभ्य... "समुद्भवे" इत्यन्तस्य पाठस्य स्थाने भ मातृकायां तु—हर्षात् सुखानि वस्तूनि निषेवेत स्मरातुरः । नार्या नित्यं विशेषेण प्रमोदरससंभवः चड - नित्यं सुखान्युदात्तानि 10 ड - मदान्विता य - मुदान्विता च - सेवेत मदनान्वितः

न तथा भवति मनुष्यो[1]
मदनवशः कामिनीमलभमानः ।
द्विगुणोप[2]जातहर्षो भवति
यथा सङ्गतः प्रियया ॥ २३५

विलासभावेङ्गित[3]वाक्य[4]लीला-
[5]माधुर्यविस्तारगुणोपपन्नः ।
परस्परप्रेमनिरीक्षितेन
समागमः कामकृतस्तु[6] कार्यः ॥ २३६

[7]ततः प्रवृत्ते मदने उपचारसमुद्भवे ।
[8]वासोपचारः कर्तव्यो नायकागमनं प्रति ॥ २३७

---

ननु प्राप्ता चेत् प्रमदा तर्हि निवृत्तकामः, तत् कोऽयमुपचारप्रतिभर इत्याशङ्क्याह न तथा भवतीति । मदनः कामभवः इति काम एव । मदि हर्षग्लपनयोरिति पठति, तेन समागमे द्विगुणीभवति कामः, ततश्चोपचारे यत्न उचित इत्याह विलासभावेति । विलासः स्त्रीणां च व्याख्यातः 'स्थानासनगमनाना'मिति, (२२-१५) (स्त्रियाः), 'धीरसंचारिणी दृष्टिः (२२-३५) इति (पुरुषस्य) च । तत्प्रधानभावाः चेष्टितानि । इङ्गितं प्रेमसूचका व्यापाराः व्याख्याताः 'काम्येनाङ्गविकारेणे'त्यादि, 'चकिता भवेत्' इत्यन्तेन (२२-१६७-१७२) ।

वाक्यलीलेति अङ्गासाध्यादिषूक्ता । माधुर्यं "सर्वावस्थाविशेषे" ष्विति

---

1 च - विशेषो 2 ढ - चार 3 ड - प्रथित 4 ड - काव्य 5 च - विशेषमाधुर्य 6 ड - गतश्च 7 ड - नार्याऽप्यर्थविशेषेण प्रमोदरससंभवः । 8 भ - उपचारस्तु

गन्धमाल्ये[1] गृहीत्वा तु चूर्णवास[2]स्तथैव च।
[3]आदर्शो लीलया गृह्यश्छन्दतो वा पुनः पुनः॥ २३८
वासोपचारे नात्यर्थं भूषणग्रहणं भवेत्।
रशनानूपुरप्रायं स्वनवच्च[4] प्रशस्यते[5]॥ २३९
नाम्बरग्रहणं रङ्गे न स्नानं [6]न विलेपनम्।
नाञ्जनं नाङ्गरागश्च[7] [8]केशसंयमनं तथा॥ २४०
[9]नाप्रावृता नैकवस्त्रा न रागमधरस्य तु[10]।
उत्तमा मध्यमा वापि [11]कुर्वीत प्रमदा क्वचित्॥ २४१
अधमानां भवेदेष [12]सर्व एव विधिः सदा।

---

(२२-२९)नृणां च, "अभ्यासात् करणानां" (२२-३६)इति। एषां विस्तारगुणेन कविवर्णनाकृतेनोपपन्न एतस्मादुपचारस्तसम्यगुद्भवो यस्य। चूर्णः पटवासः। वासो वस्त्रम्। नात्यर्थमिति खेदावहत्वात्। रात्रावदृश्यत्वात्तु दरिद्राणां दीपशून्यं वासगृहं दृष्टवतां हेतुत्वेन स्वनवत्त्वं, चेति हेतौ यतः प्रशस्तेन सुरतलीलोपयोगिना शब्देन युक्तम्। नाम्बरग्रहणं रङ्गे इत्यादिना प्रसङ्गतो निषेधमाह। वासोपचारसिद्ध्ये तु रङ्गेऽप्येतदुपचारोपयोगि कर्तव्यमिति हि कोप-

---

1 च - माल्यं 2 भ - वासान् 3 च - स्थापयेन्नायककृते कुर्याच्चात्मप्रसाधनम् भ - आदर्शः संगृहीतव्यः कृतार्थापि पुनः पुनः (ड - कृतार्थो) 4 भ - तु 5 ड - चैव यद्भवेत् 6 च - नानुलेपनम् 7 च - रागं च 8 च - न च केशोपसंग्रहः भ - न केशरचनं ड - स्त्रनकेशग्रहौ न च 9 ड - नापावृता 10 भ - च 11 ड - प्रयोक्तव्याङ्गना च - प्रकुर्यात् 12 भ - विधिः प्रकृतिसंभवः

[1]कारणान्तर[2]मासाद्य तस्मादपि न कारयेत् ॥ २४२

प्रेष्यादीनां च नारीणां नराणां वापि नाटके ।
भूषणग्रहणं [3]कार्यं पुष्पग्रहणमेव च ॥ २४३

[4]गृहीतमण्डना [5]चापि प्रतीक्षेत प्रियागमम् ।
[6]लीलया मण्डितं वेषं कुर्याद्यन्न विरुध्यते ॥ २४४

[7]विधिवद्वासकं कुर्यान्नायिका नायकागमे ।
[8]प्रतीक्षमाणा च ततो नालिकाशब्दमादिशेत् ॥ २४५

---

संभावनयेति नाम्बरग्रहणमिति सामान्योक्तावपि प्रकारादुत्तमाया मध्यमायाश्चेति गम्यते । अधमायाश्च भवत्येतद्रङ्गेऽपि । एवं निषेधमधमासु पुनर्विधिमुक्त्वा प्रकृतमुपचारमेवाभिसन्धत्ते भूषणग्रहणमित्यादि । उक्तपूर्वेऽत्रोपचारे आदरं दर्शयति विधिवद्वासकं कुर्यादिति वासकोचितमुपचारमित्यर्थः ।

ननु समाप्त उपचारे यदि प्रियो नागतः किं कुर्यादित्याह प्रतीक्षमाणेति । नालिकाशब्दमादिशेदिति इयांश्च कालो गतः किमित्यादि न प्राप्तः स्यादिति,

---

1 च - तासामपि ह्यसभ्यं यन्न तत्कार्यं प्रयोक्तृभिः । प्रमदाभिर्नरैर्वापि नानाभावं तु नाटके भ - तासामपि तु संभोगो न कार्यस्तु प्रयोक्तृभिः । वेश्यादीनां तु नारीणां नराणां चापि नाटके 2 ड - सामान्यं 3 भ - कृत्वा पुष्पाणां ग्रहणं भवेत् 4 ड - निर्युक्तमण्डना चापि (भ - निर्वृत्त...वापि 5 च - किंचित् 6 इदं श्लोकार्धं च ड - योरेव वर्तते 7 ज - वासोपचारं कृत्वैवं नायिका नायकागमम् 8 च - वीक्षमाणा प्रियपश्यं (?) शृणुयान्नाडिकाध्वनिम् ड - शृणुयान्नाडिकाघोषं प्रतीक्षेदासनास्थिता (भ - आसनस्था समुत्सुका

श्रुत्वा तु नालिकाशब्दं[1] नायकागमविक्लबा ।
[2]विषण्णा वेपमाना च गच्छेत्तोरणमेव च ॥ २४६

[3]तोरणं वामहस्तेन कवाटं दक्षिणेन च[4] ।
[5]गृहीत्वा तोरणाश्लिष्टा संप्रतीक्षेत नायकम् ॥ २४७

[6]शङ्कां चिन्तां भयं चैव प्रकुर्यात्तोरणाश्रिता ।
अदृष्ट्वा रमणं नारी विषण्णा च[7] क्षणं भवेत् ॥

दीर्घं चैव [8]विनिःश्वस्य [9]नयनाम्बु निपातयेत् ।
[10]सन्नं च हृदयं कृत्वा [11]विसृजेदङ्गमासने ॥ २४९

व्याक्षेपाद्विमृशेच्चापि नायकागमनं प्रति ।
तैस्तैर्विचारणोपायैः[12] शुभाशुभसमुत्थितैः[13] ॥ २५०

गुरुकार्येण[14] मित्रैर्वा मन्त्रिणा[15] राज्यचिन्तया ।
[16]अनुबद्धः प्रियः किं नु[17] वृतो[18] वल्लभयापि वा ॥२५१

---

ततोऽप्यनागतेऽयं विधिरित्याह श्रुत्वा तु नालिकशब्दमिति तैस्तैर्विचारणोपायै-रिति यदुक्तं तत्रोदाहरणम् । अनागतोपायानाह गुरुकार्येणेत्यादि । अनुभाववर्ग-

---

1 च - नादं ङ - घोषं 2 ङ - वेपन्ती सन्नहृदया तोरणाभिमुखी व्रजेत् 3 च - वामेन तोरणं ग्राह्यं (भ - प्राप्य) 4 च - तु 5 च - हस्तेन संमुखीभूय उद्वीक्षेत प्रियागमम् (भ - आवेष्ट्य पश्चात्तु) ङ - हस्तेनाधोमुखी भूयः प्रतीक्षेत प्रियागमम् 6 च - शुभाशङ्कां भयं चैव कुर्यात् तोरणसंस्थिता भ - सशङ्का चैव रूपं च कुर्यात् तोरणमाश्रिता 7 च - तु 8 भ - तु निश्वस्य 9 भ - अश्रु चैव ङ - आस्नं चैव ढ - आस्यं चैव 10 भ - आर्तं 11 भ - विमुञ्चेत् 12 च - विचारणैश्चापि (ङ - श्चैव) 13 भ - समन्वितैः 14 ङ - कार्यैश्च 15 च - मन्त्रिणां भ - मन्त्राणां 16 न - अनुबद्ध प - सानुबन्धः 17 च - तु 18 च - धृतो

[1]उत्पातान्निर्दिशेच्चापि शुभाशुभसमुत्थितान् ।
निमित्तैरात्मसंस्थैस्तु स्फुरितैः स्पन्दितैस्तथा॥ २५२
शोभनेषु तु[2] कार्येषु निमित्तं वामतः स्त्रियाः ।
[3]अनिष्टेष्वथ सर्वेषु निमित्तं दक्षिणं भवेत् ॥ २५३
सव्यं नेत्रं ललाटं [4]च भ्रूनासोष्ठं तथैव च ।
ऊरुबाहुस्तनं चैव स्फुरेद्यदि समागमः ॥ २५४
[5]एतेषामन्यथाभावे [6]दुर्निमित्तं विनिर्दिशेत् ।
दर्शने दुर्निमित्तस्य मोहं गच्छेत्क्षणं ततः ॥ २५५
[7]अनागमे नायकस्य [8]कार्यो गण्डाश्रयः करः ।
[9]भूषणे चाप्यवज्ञानं रोदनं च समाचरेत् ॥ २५६
[10]अथ चेच्छोभनं तस्यान्निमित्तं [11]नायकागमे ।
सूच्यो नायिकयासन्नो गन्धाघ्राणेन नायकः ॥ २५७

---

स्त्वसूयाखेदार्थचिन्तादिव्यभिचारिसंभवो यथायोगं योज्यः । उत्पातः सहसाऽशुभसूचको महाभूतपरिस्पन्दः स च परस्थः । स्फुरितं चलनं स्पन्दितमेतदितित्वेते स्वदेहस्थे इति भेदेनोक्ते । नेत्रमित्यादि सव्यं वाममिति मन्तव्यम्

---

1 ड - आकारं दर्शयेदेव (ड - श्चापि तम्) इदं श्लोकार्धं भ - मातुकायां न वर्तते 2 ड - च 3 च - दुरुक्तेषु तु कार्येषु (भ - विज्ञेयं) 4 च - च भ्रूरधरोष्ठः (भ-ष्टं) ड - च भ्रूरथोष्ठं 5 च - अतोऽन्यथा स्पन्दमाने (ड - नं 6 ड - अनिष्टं चापि (भ - दुरुक्तं) ज - अनिष्टं च च - दुरितं दक्षिणे भवेत् 7 भ - अप्राप्ते चैव कर्तव्यः प्रिये गण्डाश्रितः करः (च - र्पितः 8 ड - हस्तो गण्डाश्रितो भवेत् 9 भ - प्रसाधने त्ववज्ञानं 10 भ - ततश्चेच्छोभनं पश्येत् (च - श्च शो) 11 च - वै प्रियागमे

दृष्ट्वा चोत्थाय संहृष्टा[1] प्रत्युद्गच्छेद्यथाविधि[2] ।
[3]ततः कान्तं निरीक्षेत प्रहर्षोत्फुल्ललोचना ॥ २५८
सखीस्कन्धार्पितकरा कृत्वा स्थानकमायतम् ।
दर्शयेत ततः कान्तं सचिह्नं सरसव्रणम् ॥ २५९
यदि स्यादपराद्धस्तु [4]कृतस्तैस्तैरुपक्रमैः ।
उपालम्भकृतैर्वाक्यै[5]रुपालभ्यस्तु नायकः ॥ २६०
मानापमानसम्मोहैरवहित्थभयक्रमैः[6] ।
वचनस्य समुत्पत्तिः स्त्रीणामीर्ष्याकृता[7] भवेत् ॥ २६१
विस्रंभस्नेहरागेषु [8]सन्देहे प्रणये तथा ।
परितोषे च [9]घर्षे च दाक्षिण्याक्षेपविभ्रमे[10] ॥ २६२

---

तथा बाहू । अन्यथाभाव इति दक्षिणस्फुरणे । प्रत्युद्गच्छेदिति नायिकेति प्रथमया योज्यम् ।

एवमियता वासकसज्जया वागङ्गसत्त्वव्यामिश्रः सामान्याभिनयः प्रियसंप्राप्त्यवधिर्दर्शितः । अथ खण्डितादीनां संदर्श्यते यदि स्यादपराद्धस्त्विति तैस्तैरिति मानावहित्थवस्त्रभङ्गाभिष्यन्दादिभिः । अन्यथाभाषणे कोपादुचिते तदपवादमाह विस्रम्भेत्यादि कस्मिंश्चित् कार्ये निरूप्ये विस्रम्भसात्मिका कार्या, शरीरापाटवादि पश्यतो वार्ताप्रश्नादौ स्नेहः, तद्दशाद्योऽनुरागो लक्षितः,

---

1 च - हृष्टाङ्गी 2 च - हि नायकम् 3 सार्धश्लोकस्य स्थाने भ - मातृकायां "न तथा भवति" (श्लो-२२५) ग्रन्थोऽस्ति ; चभब - मातृकासु सार्धश्लोको न वर्तते 4 भ - नरः ड - ततः 5 भ - अभिभाष्यः स (च - तु) 6 च - अवहित्थैर्यथाक्रमम् ड - क्रमैः 7 भ - कृते 8 ड - संमोहे 9 च - हर्षे 10 च - पातने प - विस्मये

धर्मार्थकामयोगेषु[1] प्रच्छन्नवचनेषु च* ।
हास्ये [2]कुतूहले चैव संभ्रमे व्यसने तथा ॥ २६३

[3]स्त्रीपुंसयोः क्रोधकृते पृथङ्मिश्रे तथापि वा ।
अनाभाष्योऽपि संभाष्यः प्रिय एभिस्तु कारणैः ॥

यत्र स्नेहो [4]भवेत्तत्र ह्रीर्ष्या मदनसम्भवा ।
चतस्रो योनयस्तस्याः[5] कीर्त्यमाना निबोधत ॥ २६५

वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च ।
एतेषां [6]संप्रवक्ष्यामि लक्षणानि यथाक्रमम् ॥ २६६

---

कृतापराधः सत्यतो न वेति सन्देहः, प्रणयः प्रार्थना, अपत्याद्यभ्युदयः परितोषः कलास्थित्यादि (कलाशिल्पादि ?) निकृतिपक्षेण स्पर्धा संघर्षः, पक्षस्य सखीजनादेर्यदा कार्यः प्रियेण सम्पाद्यः पश्यति तदा सखीकार्यविवादविषयाद्दाक्षिण्यम् , इन्द्रजालादिकृते विस्मयः, धर्मार्थकामोपयोगिनि व्रतगृहकृत्यकौमुदीहर्षोत्सवादावश्यं कर्तव्ये चाप्रियं प्रति स्मरणाकर्तव्या, तेन वा स्मरणम्, उपालम्भद्वारेण किमयं वदेदिति परीक्षणम्, यथा नायकोऽत्यादरात् किंचित्पृच्छति तत्कुतूहलम्, सर्वो यदा हसति तदा हास्यम्, अग्न्याद्युत्पातः संभ्रमः, वसु(बन्धु ?)वियोगादि व्यसनम्, एतेष्वनाभाषणे सर्वथैव निस्स्नेहता स्यात् । क्रोधकृत इति युगपदित्यर्थः ।

अपराद्ध इत्युक्तं तत्रापराधं दर्शयितुमुपक्रमं करोति यत्र स्नेह इति । योनयो हेतवश्चत्वारः—वैमनस्यं, व्यलीकं, विप्रियं, मन्युरिति, तान् क्रमेण

---

1 ब - योग्येषु 2 भ - कुसुमिते 3 भ - हास्योपस्थानसंप्राप्तौ दोषप्रक्षेपनिह्नवे (च - दोषोप) 4 च - भयं तत्र यत्रेर्ष्या तत्र मन्मथः (ड - मदनस्ततः) भ - तत्र हर्षो यत्रेर्ष्या मदनस्ततः 5 भ - तत्र 6 च - च समुत्पत्तिं प्रयोगं च निबोधत भ - चैव वक्ष्यामि यद्यत्तत्र विधीयते

* स्मरणे च परीक्षणे—इति व्याख्यातृपाठः स्यात् .

निद्राखेदालसगतिं[1] सचिह्नं सरसव्रणम् ।
एवंविधं प्रियं दृष्ट्वा वैमनस्यं [2]भवेत् स्त्रियाः॥ २६७

[3]निद्राभ्यसूयितावेक्षणेन रोषप्रकम्पमानाङ्ग्या ।
साध्विति सुष्ठ्वति [4]वचनैः शोभत इत्येवमभिनेयम्

बहुधा वार्यमाणोऽपि[5] यस्तस्मिन्नेव दृश्यते[6] ।
[7]संघर्षमत्सरात्तत्र व्यलीकं जायते स्त्रियाः ॥ २६९

कृत्वोरसि वामकरं दक्षिणहस्तं[8] तथा विधुन्वन्त्या ।
चरणविनिष्ठम्भेन[9] च कार्योऽभिनयो व्यलीके तु[10] ॥

जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया ।
उक्त्वैवं योऽन्यथा कुर्याद्विप्रियं तत्र जायते[11] ॥ २७१

दूतीलेखप्रतिवचनभेदनैः क्रोधहसितरुदितैश्च ।
विप्रियकरणेऽभिनयः सशिरःकम्पैश्च कर्तव्यः[12] ॥

---

लक्षयति निद्राखेदालसगतिमित्यादिना (सुरते) गतया निद्रया । (असूयितेति) यदसूयितेनावेक्षणं तेन । (बहुधेति) यतो नायिकातो वार्यते तस्यामेव दृश्यत इति सम्बन्धः । (संघर्षेति) सम्यक् कृतो घर्षः संघर्षः । (उक्त्वैवमित्यादि)

---

1 भ - रतिं 2 भ - विधीयते 3 च - तीव्रासूयितवचनाद्रोषाद्बहुशः प्रकम्पमानोष्ठी भ - निद्राघूर्णितनयने रोषस्फुरितोष्ठकम्पितापाङ्ग्या ड - निद्रासूयितवदना रोषाद्बहुशः प्रवेपमानाङ्गी 4 च - वाक्यैः शोभनमित्यभिनयं युञ्ज्यात् भ - वाक्यैः शोभन इत्येवं 5 ड - अवधीर्यमाणो 6 ड - तत्रैव हि तिष्ठति (भ - दृश्यते) 7 ड - संहर्षात्तत्र मात्सर्याद्व्यलीकमुपजायते (च - तु भवेत् स्त्रियाः) भ - संहर्षेतु त्वमात्सर्यें...ततः । 8 च - रुषा विधुन्वाना 9 च - विनिक्षेपेण च तस्मिन् कुर्वंति साभिनयम् 10 भ - व्यलीककृतः 11 च - तद्विप्रियमिति स्त्रियाः भ - एतद्वै विप्रियं भवेत् 12 च - कम्पः प्रयोक्तव्यः

प्रतिपक्षसकाशात्तु यः सौभाग्यविकत्थनः[1]।
उपसर्पेत् सचिह्नस्तु मन्युस्तत्रोपजायते[2]॥ २७३
वलयपरि[3]वर्तनैरथ सुशिथिलमुत्क्षेपणेन रशनायाः।
मन्युस्त्वभिनेतव्यः सशङ्कितं बाष्पपूर्णाक्ष्या[4]॥ २७४
दृष्ट्वा स्थितं प्रियतमं
[5]सशङ्कितं सापराधमतिलज्जम्।
ईर्ष्यावचनसमुत्थैः
खेदयितव्यो [6]ह्युपालम्भैः॥ २७५
न च निष्ठुरमभिभाष्यो[7]
न चाप्यतिक्रोधनस्तु परिहासः[8]।
बाष्पोन्मिश्रैर्वचनै[9]-
रात्मोपन्यासससंयुक्तैः॥ २७६

---

प्रतिज्ञातस्यापरिपालनं विप्रियम्। दूतलेखादिमुखेन यानि प्रसादनार्थं प्रति-वचनानि तेषां भेदः दूषणमनङ्गीकरणम्। (वलयेत्यादि) मन्युना तत्क्षण एव तनुत्वं गात्रे भवतीति वलयानां परिवर्तनं, वाससो रशनायाश्चोत्क्षेप इति।

केचित्सहृदयास्त्वाहुः—मन्युना सखीजनमध्य एवास्याबहुमानलक्षणा भवत्यप्रतिपत्तिरिति तत्कृतानि च वलयस्य परिवर्तनं योज(लोच?)नभ्रमणादिकं,

---

1 ड - विकत्थनैः 2 च - च मन्युस्तत्र भवेत् स्त्रियाः 3 च - वर्तनेन च सशिथिल... भ - वर्तनेन च तथा समुत्क्षेपणेन 4 च - मोक्षैश्च 5 भ साशङ्कं ड - अशङ्कितं 6 भ - अपि 7 च - अतिभाष्यो भ - प्रवाच्यो 8 भ - अति-क्रुद्धया स परिभाष्यः च - परिहार्यः 9 भ - वाक्यैः

मध्याङ्गुल्यङ्गुष्ठाग्रविच्यवात्पाणिनोरसि कृतेन[1] ।
उद्वर्तितनेत्रतया [2]प्रततैरभिवीक्षणैश्चापि ॥ २७७
कटिहस्तविवर्तनया[3] विच्छिन्नतया तथाञ्जलेः करणात्[4] ।
[5]मूर्धभ्रमणानिहञ्चितनिपातसंश्लेषणाच्चापि[6] ॥ २७८
अवहित्थवीक्षणाद्वा[7] अङ्गुलिभङ्गेन[8] तर्जनैर्ललितैः[9] ।
[10]एभिर्भावविशेषैरनुनयनेष्वभिनयः कार्यः ॥ २७९
शोभसे साधु दृष्टोऽसि गच्छ त्वं किं[11] विलम्बसे ।
मा[12] मां स्प्राक्षीः प्रिया यत्र[13] तत्र या ते हृदि स्थिता ॥
गच्छेत्युक्त्वा परावृत्य विनिवृत्तान्तरेण तु[14] ।
केन चिद्वचनार्थेन प्रहर्षं योजयेत्पुनः[15] ॥ २८१

---

रशनोत्क्षेपणं यन्त्रोत्क्षेपणं चेति । मध्याङ्गुल्यङ्गुष्ठाग्रविच्यवादिति तत्स्थं मूलं व्यापारं स्मारयति । (कटीति) कटीपार्श्वगतस्य हस्तस्य विवर्तमानाया अञ्जलेर्हस्तस्य पताकाभ्यां तु संश्लेषादित्यस्य विश्लेषणम्, अवहित्थेन गाम्भीर्येण यद्वीक्षणं, तेन चायतं स्थानकमाक्षिप्तम् । तत्र हि तस्य विनियोग उक्तः (१२-१६४)। निरपेक्षभावता संभवतीत्याह गच्छेत्युक्त्वेति । विनिवृत्तिप्राधान्य-

---

1 भ - अधरस्थेन 2 भ - तथा प्रततवीक्षणेनापि (ड - णाश्चापि) 3 ड - निविष्टतया न - निवर्तनया 4 भ - स्फुरदधरतया तथा जडीभावात् च - अङ्गुलैः करणात् 5 भ - अर्ध 6 च - निहंचं वियतः संदर्शनाच्चापि भ - निपातसंदर्शनाच्चापि (न - निधात ड - नखादि) 7 च - क्षणेन च ड - क्षणैश्चापि भ - क्षणादपि 8 भ - भङ्गाच्च च - साङ्गुलिभङ्गेन 9 भ - तर्जनाच्चापि ड - लिखितैः 10 भ - एषोऽभिनयः प्रयोक्तव्यः (ड - अस्य) च - अयमेतेष्वभिनयः 11 च - कस्मात् 12 च - सां भ - मा मा तिष्ठ 13 भ - तव या हृदयोत्थिता (च - दि संस्थिता) 14 च - पुनः प्रतिनिवृत्य च भ - परावृत्ता विनिवृत्योत्तरेण तु 15 च - संप्रयोजयेत्

रभसग्रहणाच्चापि[1] हस्ते वस्त्रे च मूर्धनि।
कार्यं [2]प्रसादनं नार्या ह्यपराधं[3] समीक्ष्य तु॥ २८२
हस्ते वस्त्रेऽथ केशान्ते नार्याप्यथ गृहीतया।
कान्तमेवोपसर्पन्त्या[4] कर्तव्यं मोक्षणं शनैः॥ २८३
गृहीतयाथ केशान्ते हस्ते वस्त्रे[5]ऽथवा पुनः।
[6]हुं मुञ्चेत्युपसर्पन्त्या वाच्यः स्पर्शालसं प्रियः॥ २८४
पादाग्रस्थितया नार्या [7]किंचित्कुड्मितोत्कटम्।
अश्वक्रान्तेन कर्तव्यं केशानां मोक्षणं शनैः॥ २८५
[8]अमुच्यमाने केशान्ते [9]संजातस्वेदलेशया।
हं हु मुञ्चापसर्पेति वाच्यः[10] स्पर्शालसाङ्गया॥ २८६
गच्छेति रोषवाक्येन गत्वा प्रतिनिवृत्य च।
केन चिद्वचनार्थेन [11]वाच्यं यास्यसि नेति च॥ २८७
विधूननेन हस्तेन[12] हुंकारं [13]संप्रयोजयेत्।
स चावधूनने [14]कार्यः शपथैर्व्याज एव च॥ २८८

---

मुत्तरं येनासौ विलम्बते। अपराधमिति, अल्पेऽपराधे मूर्धनि मध्ये हस्ततले भूषितवस्त्रे। व्याज इति व्रतोपवासोऽद्य मया प्रस्तुत इत्यादि।

---

1 भ - वापि 2 ड - प्रणमनं 3 ड - अपराद्धं...च 4 भ - अपसर्पन्त्या 5 च - वस्त्रेषु 6 - भ यथा प्रियो न पश्येद्धि स्पर्शो ग्राह्यस्तथा स्त्रिया (ब - र्शौ) च - ग्राह्यः स्पर्शस्तथा नार्या न पश्येद्दयितो यथा 7 च - तथावाकुञ्चिताङ्गया (ढ - थैवा) 8 च - विमुच्य ढ - आमुच्य 9 ज - नार्या सस्वेद 10 भ - वासः 11 भ - वासो च - आलापं संप्रयोजयेत् ड - चालापं योजयेत्सुमान् 12 च हस्तस्य 13 ड - स्त्री 14 ड - कार्यं शपथैर्वाच्यः भ - कुर्याच्छपथान् व्याजमेव च च - कार्यः शपथे

अक्ष्णोः संवरणे[1] कार्यं पृष्ठतश्चोपगूहनम् ।
नार्यास्त्वपहृते वस्त्रे [2]दीपच्छादनमेव च ॥ २८९
तावत् [3]खेदयितव्यस्तु यावत्पादगतो[4] भवेत् ।
ततश्चरणयोर्याते[5] कुर्याद्दूतीनिरीक्षणम् ॥ २९०
[6]उत्थाप्यालिङ्गयेच्चैव नायिका नायकं ततः ।
[7]रतिभोगगता[8] दृष्ट्वा शयनाभिमुखी व्रजेत्[9] ॥ २९१
एतद्गीतविधानेन सुकुमारेण योजयेत् ।
यदा शृङ्गारसंयुक्तं रतिसंभोगकारणम् ॥ २९२
यदा चाकाशपुरुष[10]परस्थवचनाश्रयम् ।
भवेत्काव्यं[11] तदा ह्येष [12]कर्तव्योऽभिनयः स्त्रिया ॥
यदन्तःपुरसंबन्धं [13]काव्यं भवति नाटके ।
शृङ्गाररससंयुक्तं [14]तत्राप्येष विधिर्भवेत् ॥ २९४

---

ननु वस्त्रापहारशयनादि रङ्गे निषिद्धमिति (किं) तेनोक्तेन, सत्यं लास्यदाने (स्थाने?) तु तस्योपयोगः । इह तु कामोपचारप्रसङ्गादित्युक्तं, तदाह एतद्गीतविधानेनेति, न च नाट्येऽस्य सर्वात्मनानुपयोगः तथाहि यथा भाणकादौ । आकाशपुरुष इति (प्रविष्टपात्रेण) भावितः प्रधानोऽप्रविष्टः पुरुषो भवति तदा इदमिदं मया दृश्यत इति ब्रूयात् । एवं परस्थं वा यदा व्याख्यायते न च प्रत्यक्षत्वेनैतदुपयुज्यत इति दर्शयति यदन्तः पुरसंबन्धमिति ।

---

1 ज - संवननं भ - संवरणं 2 ज - नीवी भ - अधश्छादनं 3 भ - छादयितव्यः 4 ड - हतो 5 भ पाते तु च - पाते 6 भ - संयोज्य स्पर्शनं च - स्पर्शस्य ग्रहणं कृत्वा ज - उत्क्षिप्य 7 भ - उत्थाप्य विधिना 8 ज - हता 9 च - भवेत् 10 भ - आकारमात्रेण ड - पुरुषं 11 ड - कार्यं च काव्ये 12 भ - कार्यस्तु 13 ड - कार्यं च - कार्यं नाटकसंश्रयम् 14 च - तदापि

न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता[1]।
केनचिद्वचनार्थेन [2]अङ्कच्छेदो विधीयते ॥ २९५
[3]यद्वा शयीतार्थवशादेकाकी सहितोऽपि वा।
[4]चुम्बनालिङ्गनं चैव तथा गुह्यं च यद्भवेत् ॥ २९६
दन्तच्छेद्यं नखच्छेद्यं नीवीस्रंसनमेव च।
[5]स्तनान्तरविमर्दं च रङ्गमध्ये न कारयेत् ॥ २९७
भोजनं सलिलक्रीडा तथा लज्जाकरं च यत्।
एवंविधं भवेद्यद्यत्तत्तद्रङ्गे न कारयेत्[6] ॥ २९८
[7]पितापुत्रस्नुषाश्वश्रू[8]दृश्यं यस्मात्तु नाटकम्।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ॥ २९९
वाक्यैः सातिशयैः [9]श्रव्यैर्मधुरै[10]र्नातिनिष्ठुरैः।
हितोपदेशसंयुक्तैस्तज्ज्ञः कुर्यात्तु[11]नाटकम् ॥ ३००

---

नन्वेवं सर्वमत्र प्राप्तमिति ननूत्पलचेटादौ दृश्यते शयनमित्याशङ्क्याह यद्वा शयीतेति नात्र शयननिषेधस्तात्पर्यम्, अपि तु चुम्बनादिनिषेध इति भावः। पितापुत्रेत्यादि। ततश्च रसो भज्येत, स हि साधारणान्योन्यानुप्रवेशप्राण इति प्रत्यर्पि(प्रतिपदं?) वदामः। एतत्सामान्याभिनयमध्ये वाचिकोऽप्यभिनयो-

---

1 भ - नाट्यधर्मीं तु पश्यता 2 भ - तस्यच्छेदं प्रयोजयेत् च - छेदमत्र 3 च - यदा स्वपेदर्थवशात 4 च - चुम्बनालिङ्गनादीनि रङ्गमध्ये न कारयेत् भ - चुम्बनं लोकधर्मं च 5 च स्तनाधर 6 भ - योजयेत् 7 च - पितृ 8 भ - पूज्यैः 9 भ - श्राव्यैः 10 ड - न च च - न तु 11 च - प्राज्ञः कुर्वंति ड - जननैस्तज्ज्ञैः कार्यं तु

[एवमन्तःपुरस्कृतः कार्यस्त्वभिनयो बुधैः]।
समागमेऽथ नारीणां वाच्यानि मदनाश्रये॥ ३०१
प्रियेषु वचनानीह यानि तानि निबोधत।
प्रियः[1] कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम्॥
नन्दनश्चेत्यभिप्रीते[2] वचनानि भवन्ति हि।
दुःशीलोऽथ[3] दुराचारः शठो वामो विकत्थनः[4]॥
निर्लज्जो निष्ठुरश्चैव [5]प्रियः क्रोधेऽभिधीयते।
यो विप्रियं न कुरुते [6]न चायुक्तं प्रभाषते॥ ३०४
[7]तथार्जवसमाचारः [8]स प्रियस्त्वभिधीयते।
अन्यनारीसमुद्भूतं चिह्नं [9]यस्य न दृश्यते॥ ३०५
[10]अधरे वा शरीरे वा स कान्त इति भाष्यते।
[11]संक्रुद्धेऽपि हि यो नार्या नोत्तरं प्रतिपद्यते[12]॥ ३०६
परुषं वा[13] न वदति[14] विनीतः सोऽभिधीयते।
हितैषी रक्षणे [15]शक्तो न मानी न च मत्सरी॥ ३०७

ऽस्तीत्याशयेनाह प्रियेषु वचनानीति।

1 भ - कान्तस्तथा नाथो दा॰ः 2 भ - अनिप्रीतो भ - अभिहितो ड - अभिप्रेतो च - अभिजने 3 भ - स्यात् 4 भ - विरूपकः 5 च - प्रियं क्रोधेऽभिनिर्दिशेत ड - प्रायः क्रोधे विधीयते (ढ - अभि) क्रोधवाक्या भवन्ति हि 6 च - नानायुक्तं भ - न चायुक्तप्रभाषणम् 7 भ - तथाऽवक्र 8 भ - प्रिय इत्युच्यते हि यः (ड - बुधैः) च - प्रिय इति 9 च - यत्र 10 भ - देहे वाप्यधरे वापि 11 ड - संक्रुद्धोऽपि 12 ड - नोत्तरोत्तरभाषणम् भ - प्रतिभाषते 13 भ - यो 14 भ - स दास इति कीर्तितः 15 भ - सक्तो च - युक्तो

[1]सर्वकार्येष्वसंमूढः [2]स नाथ इति संज्ञितः ।
सामदानार्थसंभोगैस्तथा लालनपालनैः ॥ ३०८

नारीं [3]निषेवते यस्तु स [4]स्वामीत्यभिधीयते ।
नारीप्सितैरभिप्रायैर्निपुणं शयनक्रियाम् ॥ ३०९

करोति यस्तु संभोगे [5]स जीवितमिति[6] स्मृतः ।
कुलीनो धृतिमान्दक्षो दक्षिणो वाग्विशारदः ॥ ३१०

श्लाघनीयः सखीमध्ये नन्दनः [7]सोऽभिधीयते ।
एते वचनविन्यासा रति[8]प्रीतिकराः स्मृताः ॥ ३११

तथा चाप्रीतिवाक्यानि [9]गदतो मे निबोधत ।
निष्ठुरश्चासहिष्णुश्च[10] मानी धृष्टो विकत्थनः ॥ ३१२

[11]अनवस्थितचित्तश्च दुःशील इति स स्मृत[12]ः ।
ताडनं बन्धनं चापि यो विसृज्य समाचरेत् ॥ ३१३

तथा परुषवाक्यश्च दुराचारः स तन्यते[13] ।
वाचैव मधुरो यस्तु कर्मणा नोपपादकः[14] ॥ ३१४

[15]योषितः किञ्चिदप्यर्थं स शठः परिभाष्यते ।

---

नारीप्सितैरिति न तु स्वोचितैरिति यावत् । (रतिप्रीतीति) रतौ सत्यां

---

1 ड - सम्यक् 2 भ - स स्वामी परिकीर्तितः ड - यः स स्वामीति कीर्तितः 3 भ - सज्जयते ड - संभजते 4 डभ - नाथ इति संज्ञितः 5 ड - जीवितः सोऽभिसंज्ञितः 6 च - जीवित इति 7 भ - नाम स स्मृतः 8 ड - स्मृति 9 भ - वदतो 10 भ - यो 11 भ - उत्तरोत्तरवादी च 12 च - कथ्यते 13 च - उच्यते भ - संज्ञितः 14 भ - नोपपादयेत् 15 च - योषितां

वार्यते यत्र यत्रार्थे [1]तत्तदेव करोति यः ॥ ३१५
[2]विपरीतनिवेशी च स वाम इति संज्ञितः ।
[3]सरसव्रणचिह्नो यः स्त्रीसौभाग्यविकत्थनः ॥ ३१६
[4]अतिमानी तथा स्तब्धो [5]विकत्थन इति स्मृतः ।
वार्यमाणो दृढतरं यो नारीमुपसर्पति ॥ ३१७
सचिह्नः सापराधश्च स निर्लज्ज इति स्मृतः[6] ।
[7]योऽपराद्धस्तु सहसा[8] नारीं सेवितुमिच्छति ॥ ३१८
अप्रसादनबुद्धि[9]श्च [10]निष्ठुरः सोऽभिधीयते ।
[11]एते वचनविन्यासाः प्रियाप्रियविभाषिताः ॥ ३१९
[12]नर्तकीसंश्रिताः कार्या बहवोऽन्येऽपि नाटके ।
एष गीतविधाने तु सुकमारे विधि[13]र्भवेत् ॥ ३२०
[14]शृङ्गाररससंभूतो रतिसंभोगखेदनः ।
यश्चैवाकाशपुरुषं परस्थवचनाश्रयम् ॥ ३२१

---

या प्रीतिः परितोषः, रतौ क्रोधोऽपि हि भवति परितोषश्च सुतादावुभयमप्युपात्तम् । सहसेत्यप्रसाद्य । अन्येऽपीति उदाहरणमेतादित्यर्थः ।

पूर्वोक्तमेवोपसंहरति एष गीतविधान इति शृङ्गारे रसे आकाशपुरुषादौ ।

---

1 च - तं तमेव भ - तमेव कुरुतेऽसकृत् 2 भ - भवेदभिनिवेशी च - विपरीतनिषेवी 3 य - सरसो व्रण 4 च - अभि 5 भ - स विरूप 6 भ - विभाष्यते 7 च - सापराधस्तु 8 च - रभसात् भ - रहसा 9 भ - वृत्तिः 10 भ - स धृष्ट इति संज्ञितः 11 भ - वाच्यावाच्येष्वविन्यासाः प्रियाप्रियविभाषिताः । तां तामवस्थामासाद्य विपरीता भवन्ति हि 12 ड - नानावस्थां समासाद्य विपरीतां समाचरेत् 13 च - मारविधिः, ड - मारो विधिः भ - मारो भवेद्विधिः 14 च - शृङ्गारे ड - शृङ्गाररति

शृङ्गार [1]एवं वाच्यं स्यात्तत्राप्येष क्रमो[2] भवेत्।
यद्वा पुरुषसंबन्धं कार्यं भवति नाटके॥ ३२२
शृङ्गार[3]रससंयुक्तं तत्राप्येष क्रमो भवेत्।
एवमन्तःपुरगतः प्रयोज्योऽभिनयो भवेत्॥ ३२३
दिव्याङ्गनानां तु विधिं व्याख्यास्याम्यनुपूर्वशः।
नित्यमेवोज्ज्वलो वेषो नित्यं प्रमुदितं मनः॥ ३२४
[4]नित्यमेव सुखः कालो [5]देवानां ललिताश्रयः।
[6]न चेर्ष्या नैव च क्रोधो नासूया न प्रसादनम्[7]॥
[8]दिव्यानां दृश्यते पुंसां शृङ्गारे योषितां तथा[9]।
ये भावा मानुषाणां स्युर्यदङ्गं यच्च चेष्टितम्॥ ३२६
[10]सर्वं तदेव कर्तव्यं दिव्यैर्मानुषसङ्गमे।
[यदा मानुषसंभोगो[11] दिव्यानां योषितां भवेत्॥३२७

---

एवमिति प्रीत्या कोपेन वा, यदा वाच्यवचनं स्यात् तत्राप्येष एव वचन क्रमः। पुरुषसंबन्धमिति प्रत्यक्षपुरुषयुक्तमित्यर्थः। दिव्यवेश्याङ्गनाभिस्तु राज्ञां भवति संभोग इति तत्र सामान्याभिनयमाह नित्यमेवेत्यादि। अत्र श्लोकद्वये यद्यपीत्यध्याहारेण ये भावा इत्यत्र च तथापीत्यध्याहारेण सङ्गतिः कार्या।

---

1 ङ - रस 2 ङ - विधिः 3 ङ - रति 4 च - सुखकालः सदा नित्यं 5 च - देवीनां 6 च - ईर्ष्या न स्यान्न 7 च - प्रसाधनम् 8 ङ - दृश्यते दिव्यपुंसां हि (च - देव) 9 च - प्रति 10 भ - तत्सर्वं मानुषीं प्राप्य कार्यं दिव्यैरपि द्विजाः (च - कर्तव्यं दैवतैरपि) 11 च - संयोगो

[1]तदा सर्वाः प्रकर्तव्या [2]ये भावा मानुषाश्रयाः]
शापभ्रंशात्तु दिव्यानां तथा चापत्यलिप्सया[3] ॥
[4]कार्यो मानुषसंयोगः शृङ्गाररससंश्रयः[5] ।
पुष्पैर्भूषणजैः शब्दैरदृश्या[6]ऽपि प्रलोभयेत् ॥ ३२९
पुनः संदर्शनं दत्वा क्षणादन्तरिता[7] भवेत् ।
[8]वस्त्राभरणमाल्याद्यैर्लेखसंप्रेषणैरपि ॥ ३३०
ईदृशैरुपचारैस्तु[9] [10]समुन्माद्यस्तु नायकः ।
उन्मादनात्समुद्भूतः[11] कामो रतिकरो भवेत् ॥ ३३१
स्वभावोपगतो यस्तु नासावत्यर्थभाविकः[12] ।
एवं राजोपचारो हि कर्तव्योऽभ्यन्तराश्रयः ॥ ३३२

---

विप्रलम्भो हि जीवितेऽभियान इति भावः । समुन्माद्य इत्यत्र हेतुमाह उन्मादनादिति एतच्च विक्रमोर्वश्यां स्फुटमेव दृश्यतां इति शिवम् ।

---

1 च - सर्वं एव तदा कार्याः ड - तदा सर्वं प्रकर्तव्यं 2 च - भावा मानुषसंश्रयाः 3 च - अङ्गनानां यदा भवेत् भ - शापभ्रंशावतीर्णानां तथा चापत्यमिच्छताम् 4 च - मानुषैः सहसंयोगः 5 ड - तथाचैवोपसर्पणम् च - देव 6 च - विप्र भ - अदृश्यास्तु विलोभयेत् भ - अदृश्याऽपि या भवेत् 7 च - अन्तर्हिता भ - पुनरन्तर्हिता 8 भ - दिव्याभरण 9 च - अभ्युपगमैः भ - अभ्युपायैस्तु 10 य - समं मान्यस्तु 11 च - समुत्पन्नः 12 च - भावकः ड - लोके नास्त्यसौ डम्बभावितः भ - गतं चापि नात्यर्थमधिको भवेत्

बाह्य[1]मप्युपचारं तु प्रवक्ष्याम्यथ वैशिके।

इति भारतीये नाट्यशास्त्रे सामान्याभिनयो
नामाध्यायो द्वाविंशः[2]।

---

सामान्याभिनयः सोऽयं ग्रन्थिस्थानेषु सङ्गतः।
कृतोऽभिनवगुप्तेन शिवस्मरणशालिना॥

इति महामाहेश्वराभिनवगुप्तविरचितायां नाट्यवेदवृत्तावभिनवभारत्यां
सामान्याभिनयो द्वाविंशः॥

---

1 च - अभ्युपचारं च व्याख्यास्याम्यथ 2 ड - चतुर्विंशोऽध्यायः
च - त्रयोविंशतितमः भ - एकविंशोऽध्यायः

श्रीः

# नाट्यशास्त्रम्

## त्रयोविंशोऽध्यायः[1]

—·—

विशेषयेत्कलाः सर्वा यस्मात्तस्मात्तु वैशिक[2]ः ।
[3]वेशोपचारे साधुर्वा वैशिक[4]ः परिकीर्तित[5]ः ॥ १
[6]यो हि सर्व[7]कलोपेतः सर्वशिल्पविचक्षण[8]ः ।
स्त्रीचित्तग्रहणाभिज्ञो[9] वैशिकः स भवेत्पुमान् ॥ २

---

अभिनवभारती—त्रयोविंशोऽध्यायः

पुंसामशक्तापि तदेकभावमादर्शयन्ती बहुभावपूर्णा ।
वेश्यामतिर्निर्वृतिधाम यत्स्था तस्मै नमस्तात्परमेश्वराय ॥

सामान्याभिनयशेष एव वैशिक इत्युपसंहृतं वृत्तपूर्वेऽध्याये—बाह्यमप्युपचारं तु प्रवक्ष्याम्यथ वैशिके—इति, वैशिको वक्तव्य इति सङ्गतिः । तदुपक्रममाणो...माद्येन तावन्निरुक्तमाह विशेषयेदिति । विशेषणं जानाति, तेनातिकामयतीति च धात्वर्थो लक्षणमिति हि तद्विदो वैशेषिका (वैशिका ?)ः । (वैशिकः) वेश्याकामुकः, स च सर्वान् कामान् विशेषयत्यतिवैदग्ध्यात् । अथ व्याकरणोचितमस्य निर्वचनमाह वेश्योपचारे साधुर्वेति । वेशो वेश्या उपचारस्तत्रभव इत्यर्थः । भवार्थमेव विभजति साधुरित्यनेन । तस्मादसौ कलासु विशेषज्ञ इत्याह यो हि सर्वकलोपेत इति ।

---

1 भ - द्वाविंशः, य - चतुर्विंशः, जादिषान्तेषु—पञ्चविंशः 2 ब - वैशिकम् च - वैशिके 3 न - वेश्योपचरणाद्वापि ड - वेशोपचारतो वापि 4 बभ - वैशिकं 5 बभ - कीर्तितम् ड - समुदाहृतः (ढ - तम) 6 च - यस्तु 7 ड - गुण 8 च - प्रयोजकः 9 च - ग्राहकश्चैव

गुणास्तस्य तु विज्ञेयाः स्वशरीरसमुत्थिताः[1] ।
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः ॥ ३
शास्त्रविच्छि[2]ल्पसम्पन्नो रूपवान् प्रियदर्शनः ।
विक्रान्तो [3]धृतिमांश्चैव[4] वयोवेष[5]कुलान्वितः ॥ ४
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः ।
अशङ्कितः प्रियाभाषी चतुरः शुभदः[6] शुचिः ॥ ५
कामोपचारकुशलो[7] दक्षिणो देशकालवित् ।
[8]अदीनवाक्यः [9]स्मितवान् वाग्मी दक्षः प्रियंवदः ॥ ६
[10]स्त्रीलुब्धः संविभागी च श्रद्दधानो दृढस्मृतिः[11] ।
गम्यासु चाप्यविस्रम्भी मानी चेति[12] [13]हि वैशिकः ॥
[14]अनुयुक्तः शुचिर्दक्षो[15] दक्षिणः प्रतिपत्तिमान् ।
भवेच्चित्राभिधायी[16] च [17]वयस्यस्तस्य[18] तद्गुणः ॥ ८
विज्ञानगुणसम्पन्ना [19]कथिनी लिङ्गिनी तथा ।

---

आहार्याः शास्त्रज्ञतादयः । सहजा रूपलावण्यादयः । गम्यासु चाप्यविस्रम्भीति सहसैव नाभियुक्तः, अपि तु स्फुटभावमन्वेष्यति । भवेत् चित्राभिधायीति वक्रोक्तिकुशलः । तस्येति वैशिकस्य । कथिनी बृहत्कथादिलम्भ[न]कथनाकर्णनकुशला । लिङ्गिनी चित्रकरी । प्रातिवेश्या

---

1 च - समुद्भवाः 2 च - शील 3 च - वृत्तिमान् ज - मतिमान् 4 य - वाग्मी 5 य - गुण 6 च - सुभगः य - शुभगः 7 च - कृतज्ञो 8 च - अदीन 9 य - दक्षश्च श्रुतिमान्मतिमांस्तथा 10 च - अलुब्धः 11 ढ - व्रतः 12 च - चैव 13 ढ - स 14 य - अनुरक्तः 15 ढ - दान्तः 16 च - छिद्रापिधायी (प - भि ढ - वि) ज - छिद्रपिधायी न - चित्रविधायी ब - छिद्रावघाती 17 च - वयस्याः...गुणाः 18 ढ - षड्गुणाः 19 भ - कथिका ज - रङ्गोपजीविनी चापि प्रतिपत्तिविचक्षणा (ढ - ना)

[1]प्रातिवेश्या सखी दासी कुमारी कारुशिल्पिनी[2] ॥ ९

धात्री पाषण्डिनी चैव तथा रङ्गोपजीविनी[3] ।

प्रोत्साहनेऽथ[4] कुशला[5] मधुरकथा दक्षिणाथ[6] कालज्ञा ॥

[7]लडहा संवृतमन्त्रा दूती त्वेभिर्गुणैः कार्या[8] ।

तयाप्युत्साहनं[9] कार्यं [10]नानादर्शितकारणम् ॥ ११

यथोक्तकथनं चैव तथा भावप्रदर्शनम् ।

[11]न जडं [12]रूपसम्पन्नं नार्थवन्तं न चातुरम् ॥ १२

---

निकटावसथस्था । पाषण्डिनी व्रतिनी । रङ्गोपजीविनी रजकस्त्री चारणस्त्री । प्रोत्साहने कुशलेत्यादीनि सर्वासां विशेषणानि । उतः सह प्रोत्साहः प्रोत्साहनमिति द्वौ णिचौ । प्रोत्साहयति नायिका तु नायकस्तया प्रोत्साहयति संमुखीकारयतीत्यर्थः ।

तस्या व्यापारान्तरमाह यथोक्तेति संमुखीकरणं सन्देशार्पणं काम्याया भावपरीक्षणं चेति द्वितयमनया कार्यमित्यर्थः । जडः करणीयं न शक्नोति कर्तुं प्रत्युत्पन्नमतिसाध्यानि कृत्यानीत्याह । रूपेणार्थेन वा युक्तः स्वार्थतामाहरेत् । आतुरो हि दृश्यमान एव जुगुप्सां जनयति, स च रतेर्निरपेक्ष इत्यातुरो न कामदूतः । नानादर्शितकारणं कृत्वा प्रोत्साहनमित्युक्तं तानि

---

1 ढ - प्रतिवेश्या 2 ढ - दारुशिल्पिका 3 ढ - दूत्यस्त्वीक्षणिकास्तथा 4 च - नेषु 5 च - कुशलां...कथां...दक्षिणां ..ज्ञाम्...हां...त्रां...दूतीं...धां कुर्यात्. 6 ढ च 7 य - लटहा 8 च - दूतीमेवंविधां कुर्यात् 9 य - प्रोत्साहनं 10 च - अनुरागानुकीर्तनम् ढ - नानादर्शन 11 भ - जननी च - मृजारूपवयोऽपेतमर्थवन्तं जडं तथा । दूतं वाप्यथ दूतीं वा न कुर्याद्वैशिकाश्रये 12 ढ रूपवन्तं च

दूतं [1]वाप्यथवा दूतीं बुधः कुर्यात्कदाचन[2] ।
कुलभोगधनाधिक्यैः कृत्वाऽधिकविकत्थनम्[3] ॥ १३

[4]दूती निवेदये[5]त्काममर्थांश्चैवानुवर्णयेत् ।
[6]न चाकामप्रवृत्तायाः [7]क्रुद्धाया वापि सङ्गमः ॥ १४

[8]नानुपायः प्रकर्तव्यो दूत्या हि[9] पुरुषाश्रयः ।
उत्सवे रात्रिसञ्चार उद्याने [10]मित्रवेश्मनि ॥ १५

धात्रीगृहेषु सख्या वा [11]तथा चैव निमन्त्रणे[12] ।
व्याधितव्यपदेशेन शून्यागारनिवेशने[13] ॥ १६

[14]कार्यः समागमो नृणां [15]स्त्रीभिः प्रथमसङ्गमे ।
एवं समागमं कृत्वा सोपायं विधिपूर्वकम्[16] ॥ १७

[17]अनुरक्तां विरक्तां वा [18]लिङ्गाकारैस्तु लक्षयेत् ।

---

कारणान्याह कुलभोगेत्यादि । उत्सव इति स्वगृह एव रात्रिचारप्रधानो य उत्सवः । प्रथमसङ्गम इति गान्धर्वविवाहे वेश्यापुनर्भूसङ्गमे चेत्यर्थः ।

---

1 ज - वापि हि दूतीं वा 2 य - कथञ्चन 3 ढ - आधिक्यं कार्यं चैव विकत्थनम् (च - वावि) य - विकल्पनम् 4 ज - आभिः 5 य - काम्यं ढ - कार्यमर्थानां च प्रभाषणम् 6 ढ - नवकाम 7 च - क्रुद्धायां वा समागमः 8 य - नानापायैः ढ - नानोपायैः 9 च - अभिपुरुषाश्रये य - तु 10 य - ज्ञाति 11 च - क्षये सखीगेहे 12 ढ - निमन्त्रणैः 13 ढ - समाश्रये 14 ढ - एवं समागमः कार्यो नृणां 15 य - एषु च - एष 16 य - नानोपायविधानजम् प - स्वोपायं विधिसंमितम् 17 य - अनुरक्तं विरक्तं च चिह्नैः समुपलक्षयेत् ढ - चिह्नैः समुपलक्षयेत् 18 ञ - लिङ्गाचारैस्तु

स्वभावभावातिशयैर्नारी या मदनाश्रया[1] ॥ १८
करोति निभृतां[2] लीलां नित्यं[3] सा मदनातुरा।
[4]सखीमध्ये गुणान् ब्रूते स्वधनं च प्रयच्छति[5] ॥ १९
[6]पूजयत्यस्य मित्राणि द्वेष्टि शत्रुजनं सदा[7]।
[8]गमागमे सखीनां या हृष्टा भवति चाधिकम् ॥ २०
तुष्यत्यस्य कथाभिस्तु[9] सस्नेहं च निरीक्षते।
सुप्ते [10]तु पश्चात् स्वपिति [11]चुम्बिता प्रतिचुम्बति ॥
उत्तिष्ठत्यपि पूर्वं च तथा क्लेशसहापि च[12]।
[13]उत्सवे मुदिता या च व्यसने या च दुःखिता ॥ २२
एवंविधैर्गुणैर्युक्ता त्वनुरक्ता तु सा स्मृता[14]।
विरक्तायास्तु चिह्नानि[15] चुम्बिता नाभिचुम्बति[16] ॥ २३

---

(स्वभावेति) स्वभावे भावे सुरते येऽतिशया नखरदनसहिष्णुतादयस्तै-रुपलक्षिता अनुरक्तेति संबन्धः। मित्राणि शत्रुजनमिति नायकस्येति शेषः। पश्चात्संवेशनं पूर्वमभ्युत्थानं च। तेन विना किमत्र सुखमिति दर्शयति उत्सवे

---

1 ड - या नारी मदनार्दिता 2 च - अनिभृतां ज - अनिभृतं 3 च - ज्ञेया 4 च - गुणान् सखीमुद्वदति य - गुणान् सखीनामाख्याति 5 य - प्रददाति च 6 य - संपूजयति च - पूजयत्यपि मित्राणि शत्रुपक्षं च निन्दति 7 ड - तथा 8 य - समागमं प्रार्थयते हृष्टे हृष्यति चाधिकन् च - चैवाहि हृष्यति ड - हृष्ट्वा हृष्यति चाधिकम् ड - च 9 प - अन्यकथाभिश्च 10 च - च 11 य - प्रथमं परिबुध्यते। परिक्लेशांश्च सहते चुम्बिता प्रतिचुम्बति 12 ढ - वा ज - रतिक्लेशं सहत्यपि 13 य - समा दुःखे सुखे च स्यान्न क्रोधमुपयाति च 14 य - ज्ञेया रक्तेति वैशिकैः ढ - यानुरक्ता तु सा भवेत् च - रक्ता ज्ञेया हि वैशिकी. 15 ड - लिङ्गानि 16 य - चुम्बितास्यं प्रमार्जति (च - ष्टिं हि)

[1]अनिष्टां च कथां ब्रूते प्रियमुक्तापि कुप्यति ।
[2]प्रद्वेष्टि चास्य मित्राणि भजतेऽरिजनं तथा ॥ २४
शेते पराङ्मुखी [3]चापि शयने पूर्वशायिनी ।
सुमहत्युपकारे[4]ऽपि न तोषमुपयाति च[5] ॥ २५
क्लेशं न सहते [6]चापि तथा कुप्यत्यकारणात्[7] ।
[8]या स्यादेवंप्रकारा तु विरक्तां तां विनिर्दिशेत् ॥ २६
[9]हृदयग्रहणोपायमस्या व्यापारचेष्टितम् ।
अर्थप्रदर्शनं चैव [10]उपदानं पुनर्भवेत ॥ २७
[11]अकारणमुपन्यासस्तथैव व्याधितापि च ।

व्यसन इति नायकस्य । अनिष्टां कथां ब्रूते इति पक्षतादपि (पूर्वकृतामिति ?)। हृदयं गृह्यते यैरुपायैः अस्या इति रक्ताया व्यापारचेष्टितमिति तदीय हृदय-ग्रहणव्यापारतात्पर्यत्वं कामतन्त्रे चेष्टितम् । अर्थस्य प्रदर्शनमिदं ममास्तीति । उपन्यासः (उपदानं ?) अर्थस्य, दास्यामीति । उपन्यासः अन्यमुखेन काचि-दनुरक्तस्याङ्गनास्तीति कथनम् । (व्याधितेति) विचित्रा आधयो यस्य तस्य भावः । ततो हेतोरसेवनम् । विचित्राभिप्रायदर्शनव्याजेन तन्निकटादपसर्प-

1 य - करोत्यनिष्टां च कथां 2 य - मित्राणि चास्य प्रद्वेष्टि शत्रुपक्षं प्रशं-सति (ड - तस्य शत्रुं) 3 ड - चैव शय्यायां (य - स्था) 4 ड - चारे 5 य - तुष्यति कथंचन 6 च - वापि 7 ज - अकारणे 8 ज - यस्यामेवं विकारास्तु (ड - प्र प - प्रकारस्तु) 9 य - हृदयग्रहणं चैव तथा ड - हृदयग्रहणानि स्युः व्यापारस्य विचेष्टितम् (च - अस्यां व्यापारचेष्टितम्) 10 च - तदा सद्भावदर्श-नम् । अर्थोपन्यास एवं स्यादपन्यासस्तथैव हि (ड - अर्थदानं......च) भ - परि-त्यागोऽथ नितरां 11 ड - व्याधितायाः परित्यागो भावोपक्षेप एव च (न - पीडि) ...दारिद्र्यात्...

व्याजात्यागोऽथ निकटाद्भावोपक्षेप एव च ॥ २८

दारिद्र्याद्व्याधितो दुःखात्पारुष्याद्दुःश्रवा[1]त्तथा ।
प्रवासगमनादेव[2] ह्यतिलोभादतिक्रमात् ॥ २९

[3]अतीवाभिगमाच्चापि तथा विप्रियकारणात्[4] ।
एभिः स्त्री पुरुषो वापि कारणैस्तु विरज्यते ॥ ३०

भावग्राहीणि नारीणां कार्याणि मदनाश्रये ।
[5]तुष्टिमेति यथा नारी प्राप्यते पुरुषैरथ ॥ ३१

लुब्धामर्थप्रदानेन कलाज्ञानेन पण्डिताम् ।
चतुरां लडहत्वेन[6] ह्यनुवृत्त्या च[7] मानिनीम् ॥ ३२

[भूषणग्रहणाच्चापि शृङ्गारमुखरो[8] भवेत्[9]] ।
पुरुषद्वेषिणीमिष्टैः कथायोगैरुपक्रमैः[10] ॥ ३३

---

णम् इति यावत् (व्याजात्परित्याग इति) । एषोऽन्यत्र रागीत्यन्यमुखेनाभिधानं भावोपक्षेपः । रक्ताया अप्येतानि विरागकारणानीत्याह दारिद्र्यादित्यादिभ्यः, अपत्यमरणादेः, अश्राव्यत्वं यद्वचनं पारुष्यं ततो यत एवं तेनास्यापि रागं रक्षेदिति भावग्राहीणीति । प्राप्यत इति सेव्यत इति यावत् । पुरुषैरिति कुशलैरिति भावः ।

अस्याः कथं तुष्टिरित्याह लुब्धामित्यादि । पण्डितामिति कलाविदाम् । लडहत्वेन प्रागल्भ्येन ।

---

1 य - दुःश्रुतात् 2 ड - माना च - गमनोन्मानात् 3 ड - अतिवेलागमत्वाच्च 4 ड - सेवनात् 5 ड - या न च प्रीयते न - यैर्न कुप्यति या नारी क्रुद्धो वापि प्रसीदति 6 ड - क्रीडनत्वेन च - चैव चातुर्यैः 7 ड - तु म - तु कामिनीम् 8 ढ - मुखतो 9 श्लोकार्धं ज - ञढडमातृकास्वेव वर्तते 10 ज - कथाभिः परिसान्त्वयेत्

[1]उपक्रीडनकैर्बालां [2]भीरुमाश्वासनेन च ।
गर्वितां नीचसेवाभिरुदात्तां शिल्पदर्शनैः ॥ ३४

सर्वासामेव नारीणां त्रिविधा प्रकृतिः स्मृता ।
उत्तमा मध्यमा [3]नीचा वेश्यानां तु स्वभावजाः[4] ॥

या विप्रियेऽपि तिष्ठन्तं प्रियं वदति नाप्रियम्[5] ।
[6]न दीर्घरोषा च तथा [7]कलासु च विचक्षणा ॥ ३६

[8]शीलशोभाकुलाधिक्यैः[9] पुरुषैर्या च काम्यते ।
कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी[10] ॥ ३७

गृह्णाति कारणाद्दोषं [11]विगतेर्ष्या ब्रवीति च ।
कार्यकालविशेषज्ञा [12]सुरूपा सा स्मृतोत्तमा ॥ ३८

[13]पुरुषैः काम्यते या तु तथा कामयते च तान् ।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी[14] ॥ ३९

---

नीचसेवाभिरिति पादस्पर्शनादिभिः । शिल्पदर्शनैरिति विस्मयहेतुभिरित्यर्थः । प्रतिपदमशक्यो भेदसंग्रह इत्याशयेनाह सर्वासामेवेति उत्तममध्यमाधमानां प्रत्येकमिति यावत् ।

---

1 ज - बालामपि क्रीडनकैर्भीरुमाश्वासचाटुभिः 2 ड - भीतां 3 य - चैव तृतीया चाधमा स्मृता 4 ज - निबोधत 5 य - न वदत्यप्रियं प्रियम् 6 य - न चिरं क्रोधमायाति दोषं प्रच्छादयत्यपि (न - बान्) ड - अदीर्घ 7 ड - कलाशिल्प 8 य - काम्यते पुरुषैर्या तु कुलभोगधनाधिकैः (च - शोभा ड - आदिकैः) 9 म - आधिक्याः 10 च - धारिणी 11 य - गतेर्ष्या प्रब्रवीति न - दोषं गतेर्ष्या प्रब्रवीति 12 य - सुभगा 13 य - पुंसः कामयते या तु पुरुषैर्या च काम्यते (च - तु) 14 ज - अत्यसूयिका

यौवन[1]भेदास्त्वेते विज्ञेया नाटकेषु चत्वारः ।
पुनरेव [2]तु पुरुषाणां च कामतन्त्रे प्रवक्ष्यामि ॥ ५२

चतुरोत्तमौ तु मध्यस्तथा[3] च नीचः[4]प्रवृत्तकश्चैव ।
[5]स्त्रीसंप्रयोगविषये ज्ञेयाः पुरुषास्त्वमी पञ्च ॥ ५३

[6]समदुःखक्लेशसहः प्रणयक्रोधप्रसादने कुशलः ।
[7]योऽर्थी नात्मच्छन्दो दक्षश्चतुरः[8]स बोद्धव्यः ॥ ५४

यो विप्रियं न कुरुते [9]नार्याः किंचिद्विरागसंज्ञातम्[10] ।
[11]अज्ञातेप्सितहृदयः[12]स्मृतिमान्धृतिमान् स तु ज्येष्ठः[13]॥

मधुरस्त्यागी रागं न[14]याति मदनस्य चापि वशमेति ।
अवमानितश्च नार्या विरज्यते चोत्तमः स पुमान्[15]॥

[16]सर्वार्थैर्मध्यस्थो भावग्रहणं करोति यो नार्याः[17] ।
किंचिद्दोषं दृष्ट्वा विरज्यते मध्यमः स भवेत्[18]॥ ५७

---

उपचारार्थं पुरुषभेदो ज्ञेय इत्याशयेनाह चतुरोत्तमावित्यादि । पञ्च क्रमेण लक्षयति समदुःख इति । अज्ञातेप्सितहृदय इति गम्भीर इत्यर्थः । ज्येष्ठ

---

1 य - लम्भा ह्येते 2 य - च पुरुषगुणान् कामिततन्त्रे (ढ - तु) 3 य - तथाऽधमः संप्रवृत्तकः 4 ड - प्रवर्तकः 5 य - स्त्रीणां प्रयोग 6 य - दुःखक्लेशसहिष्णुः प्रियवाग्दाता 7 ड - प्रत्युपचारे निपुणो (च - रत्युप) 8 ड - तु 9 य - धीरोदात्तः प्रियंवदो मानी 10 प - संजननम् 11 य - अज्ञातहृदयतत्त्वः 12 च - ज्ञेयः स्मृतिमान् 13 ब - तथा चैव 14 ढ - नयति च...नापि 15 य - असौ भवेज्ज्येष्ठः (च - स च) 16 प - सर्वावस्थास्वपि सद 17 च - नारीणाम् 18 ड पुरुषः

[1]काले दाता ह्यवमानितोऽपि न क्रोधमतितरामेति ।
दृष्ट्वा[2]व्यलीकमात्रं विरज्यते मध्यमोऽयमपि ॥५८

अवमानितोऽपि नार्या
निर्लज्जतयाभ्युपेत्याविकृतास्यः[3] ।
[4]अन्यतरं संक्रान्तां
स्नेहपरावृत्तभावश्च ॥ ५९

अभिनवकृते[5] व्यलीके प्रत्यक्षं रज्यते दृढतरं यः ।
[6]मित्रैर्निवार्यमाणो विज्ञेयः सोऽधमः पुरुषः[7] ॥ ६०

[8]अविगणितभयामर्षो मूर्खप्रकृतिः प्रसक्तहासश्च[9] ।
एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु ॥ ६१

रतिकलहसंप्रहारे-
ष्वकर्कशः[10] क्रीडनीयकः स्त्रीणाम्[11] ।
एवंविधस्तु[12]तज्ज्ञै
र्विज्ञेयः संप्रवृत्तस्तु[13] ॥ ६२

---

इति यावत् । नन्वन्यदीयं कार्यवशात्संक्रामेदित्याह स्नेहेति अन्यदीयेन स्नेहेन प्रेम्णा परावृत्तः तद्विषयो भावोऽभिप्रायो यस्याः ।

---

1 अयं श्लोको भ - मातृकायां नास्ति 2 ड - अप्यलीक 3 य - निर्लज्जः समुपसर्पति तथैव ड-उपसर्पति य एनाम् 4 य - अन्यनरं संक्रान्तामारूढस्नेहभाव<u>तया</u> (न-श्च) ड - संक्रान्तान्तमन्यः भ - संक्रान्तान्तिकमन्यव्यावृत्तस्नेहभावरसः 5 य - कृत 6 य - सुहृदापि 7 य - नाम 8 ब - अविगलित ज - अवगणित 9 ड - प्रकृष्टभावश्च (ड - हृष्ट) ब - प्रमुक्तहासश्च 10 च - हारेषु कर्कशः 11 न - नीयकस्त्रीणाम् 12 न - विधिज्ञैः च विधिज्ञः प्रवृत्ततो नाम विज्ञेयः 13 ड - स्यात्

नानाशीलाः[1] स्त्रियो ज्ञेया गूढार्थहृदयेप्सिताः[2] ।
विज्ञाय तु यथा[3]सत्त्वमुपसर्पेत्तथैव ताः[4] ॥ ६३

भावाभावौ विदित्वाऽथ तत्र[5] तैस्तैरुपक्रमैः ।
पुमानुपचरेन्नारीं कामतन्त्रं समीक्ष्य तु ॥ ६४

साम [6]चोपप्रदानं च [7]भेदो दण्डस्तथैव च ।
उपेक्षा चैव कर्तव्या नारीणां विषयं प्रति ॥ ६५

तवास्मि मम चैवासि[8] दासोऽहं त्वं च मे प्रिया ।
आत्मोपक्षेपणकृतं[9] [10]यत्तत्सामेति कीर्तितम् ॥ ६६

काले काले प्रदातव्यं धनं विभवमात्रया ।
[11]यन्निमित्तान्तरकृतं प्रदानं नाम तत्स्मृतम्[12] ॥ ६७

---

ननु किमनेन स्त्रीणां भावज्ञानेनेत्याह नानाशीला इति अर्थनमर्थः अभिप्रायः गूढाभिप्रायं हृदयमासाम् । यथासत्त्वमिति यथाशयम् । भावाभावाविति अनुरागविरागौ नारीणां विषये बन्धनं स्वीकारः तं प्रतीति तस्मिन्साध्ये सामादयः उपेक्षान्ताः पञ्चोपाया इत्यर्थः । तान् क्रमेण व्याचष्टे तवास्मीत्यादि । आत्मन उपक्षेपो निजभावप्रदर्शनम्, काले दिवसे दातव्यमिति

---

1 ढ - लीलाः 2 न - गूढार्थहृदयाश्च ताः 3 च - तत्त्वं 4 च - ततश्च ताः न - तु ताः पुनः 5 य - तु ततः ड - च ततः 6 ड - चैव 7 य - दण्डो भेदः 8 य - चैव त्वं 9 न - युतं 10 य - तत्सामेति हि संज्ञितम् ड - तत्सामेत्यभिधीयते 11 य - निमित्तान्तरसंभूतं ज - नियुक्तान्तर ड - सनिमित्तान्तर 12 ड - भवेत्

भेदः स्यात्तत्प्रियस्येह सोपायं दोषदर्शनम् ।
बन्धनं ताडनं [1]चापि दण्ड इत्यभिधीयते ॥ ६८
मध्यस्था[2]मानयेत्साम्ना [3]लुब्धां चोपप्रदानतः ।
अन्यावबद्धभावां च भेदेन[4] प्रतिपादयेत् ॥ ६९
दुष्टाचारे समारब्धे [5]त्वन्यभावसमुत्थिते ।
दण्डः पातयितव्यस्तु[6] मृदुताडनबन्धनैः ॥ ७०
[[7]नायकः पुरुषो वाच्यो नायिकां ताडयेन्न ताम् ।
ताडयेत्तां बुधो नारीं रज्ज्वा वेणुदलेन वा ॥] ७१
सामादीनां प्रयोगे तु परिक्षीणे यथाक्रमम् ।
न [8]स्याद्या च समापन्ना तामुपेक्षेत बुद्धिमान् ॥ ७२

---

नियमे न सति निमित्तविशेषकृतेन प्रमोदव्यसनादिनिबन्धनेन दानेन वर्तयतीत्यर्थः । तस्या योऽन्यः प्रियः तस्य दोषास्तथा दृश्यन्ते यथा तया सत्यत्वेन प्रतीयेरन्निति भेदः तदाह सोपायमिति । चतुर्णामुपायानां स्वं स्वं विषयमाह मध्यस्थामिति किञ्चित् स्निह्यन्तीमित्यर्थः । आनयेत् स्वीकुर्यात् । प्रतिपादयेदिति आत्मनि संमुखीभावं गमयेत् । दुष्टाचार इति देशात्पलायनं पुरुषान्तरगृह एव वास इत्यादिके । तत्रापि च स्त्रीषु निरपेक्षः स्यादिति मृदुताडनबन्धनैरिति । उपेक्षाया विषयमाह सामादीनामिति दण्डेनापि हि तत्साम्मु-

---

1 य - वाऽपि 2 न - मानयेत् 3 ड - लुब्धामर्थं न - लुब्धां चार्थं
4 प - भावायां भेदनं 5 ड - मध्यभावे 6 य - हि 7 अयं ज - मातृकायामेव दृश्यते 8 न - भावाद्वशमापन्नां (च - भवेद्वशं) ड - भवेद्वशगा या तु

मुखरागेण नेत्राभ्यां विज्ञेया[1] भावचेष्टितैः ।
द्वेष्यो वापि प्रियो वापि मध्यस्थो वापि योषिताम् ॥
अर्थहेतोस्तु वेश्यानां [2]प्रियो वा यदि वाप्रिया ।
[3]गम्य एव नरो नित्यं मुक्त्वा दिव्यनृपस्त्रियः ॥ ७४
द्वेष्यं तु प्रियमित्याहुः प्रियं प्रियतरं [4]तथा ।
सुशीलमिति[5] दुश्शीलं गुणाढ्यमिति निर्गुणम्[6] ॥
प्रहसन्ती च नेत्राभ्यां यं दृष्ट्वोत्फुल्लतारका ।
प्रसन्नमुखरागा[7]च्च लक्ष्यते भावरूपणैः ॥ ७६
[8]भावाभावौ विदित्वैव निरस्तैस्तैरुपक्रमैः ।
यत्नादुपचरेन्नारीं कामतन्त्रं प्रतीक्ष्य तु ॥ ७७

---

स्वयं त्यजति या तस्याः किञ्चिदुपेक्षेत बुद्धिमानित्युक्तम् । किं संबुध्यत इत्याह मुखरागेणेत्यादि । वेश्याचित्तं तु दुर्लक्षमिति प्रयत्नपरीक्ष्यमित्याशयेनाह अर्थहेतोस्त्विति । किं सर्वासां वेश्यानामयं विधिः नेत्याह मुक्त्वा दिव्यनृपस्त्रिय इति । ननु वचने वेश्याहृदयमुपलक्षेतेत्याह द्वेष्ये तु प्रिय इत्याहुरिति । तुरप्यर्थे ।

ननु किमस्वकार्यहृदया एव ताः, नेत्याह उपचारबलत्वादिति अर्थकाममयादित्यर्थः मध्ये वा नो सेवया (?) । ननु यद्येवंभूताः कथं ताः काम्यन्ते

---

1 न - त्वङ्ग 2 ड - अप्रियो यदि वा प्रियः 3 ड - गम्यो हि पुरुषो नित्यं (ढ - नाम्नो भ - नरो भवति नित्यं तु 4 ज - अप्यप्रियं 5 न - इव य - सुशील इति 6 ड - निर्गुणं गुणवानिति 7 च - रागा 8 ड - मातृकायामयं न वर्तते

उपचार[1]बलत्वाच्च विप्रलम्भात्तथैव च[2] ।
तासु निष्पद्यते कामः काष्ठादग्निरिवोत्थितः[3] ॥ ७८

योषितामुपचारोऽयं यथोक्तो वैशिकाश्रयः[4] ।
कार्यः प्रकरणे सम्यग्यथायोगं[5] च नाटके ॥ ७९

एवं [6]वेश्योपचारोऽयं तज्ज्ञैः कार्यो[7] द्विजोत्तमाः ।
अत ऊर्ध्वं[8]प्रवक्ष्यामि प्रकृतीनां तु लक्षणम्[9] ॥ ८०

इति भारतीये नाट्यशास्त्रे त्रयोविंशोऽध्यायः[10] ।

---

जनैरित्याशङ्क्याहत्यैतदेवाह उपचारबलत्वाच्चेति । यतो हृदयग्रहणोचितमुपचारं निन्दती मध्ये च विप्रलम्भयन्ती तस्मात् काम उत्सुको भवति । कामाभिनिवेशी स इत्युक्तम् । काष्ठादग्निरिति प्रत्युत दुश्चिकित्स इत्यर्थः ।

वैशिकपुरुषाधिकारे प्रवृत्तमध्यायं प्रकृते उपयोजयति योषितामिति । नाटक इति दिव्यवेश्यानां तत्र भावात् पताकानायकादिगतत्वेन चेति शिवम् ।

अध्यायो वैशिकः सोऽयं त्रयोविंशतिपूरणः ।
कृतोऽभिनवगुप्तेन भद्रग्रन्थिपदक्रमः ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तविरचितायां नाट्यवेदवृत्तावभिनवभारत्यां वैशिकस्त्रयोविंशोऽध्यायः ॥

---

1 य - छलत्वाच्च ड - फलत्वाच्च 2 च - लम्भकृतेन च 3 भ - इव हुताशनः 4 ज - आश्रये 5 ब - योग्यं 6 न - वेशोप 7 न - ज्ञेयो 8 च - परं 9 ज - चित्रस्याभिनयं प्रति 10 ब भ य न मातृकासु अध्यायविभाग एव नास्ति म - त्रयोविंशः च - चतुर्विंशः अन्यस्मिन् पञ्चविंशः

श्रीः

# नाट्यशास्त्रम्

## चतुर्विंशोऽध्यायः*

[1]समासतस्तु प्रकृतिस्त्रिविधा परिकीर्तिता।
पुरुषाणामथ स्त्रीणामुत्तमाधममध्यमा ॥ 1

अभिनवभारती—चतुर्विंशोऽध्यायः

त्रिधा विकल्पनं यस्यां पुमान् यत्रोपचर्यते ।
तां वन्दे प्रकृतिं शम्भोः शक्तित्रयविजृम्भणात् ॥

इह कामोपचारः पूर्वं दर्शितः कामश्च स्त्रीपुरुषहेतुक इत्युक्तम्। स्त्रीणां च पुंसां च यद्यपि विचित्राः स्वभावास्तथापि ते प्रतिपदमशक्यकलना इति प्रकृतित्रयेण ते सर्वे शक्यसंग्रहा इति प्रकृतित्रयं वक्तव्यम्। तथा चाह समासत इति कामोपचारश्च शृङ्गारपर्यवसायी नायकविशेष एवेति नायकभेदा वक्तव्याः। तस्य च नायकस्यान्तःपुरो बहिर्वा किन्नामधेयः कियान्वा परिवार इति सर्वं कविना ज्ञातव्यं नटेन च। तदेवं प्रकृतिनायकपरिवारभेदानभिधाय कोऽयमध्यायोऽस्याभिचारमारभ्यते प्रकृत्यादिभेदोपचारो हि

* अस्याध्यायस्य पाठक्रमो बहुधा भिद्यते जाद्यादर्शेषु चतुस्त्रिंशतितम इत्यवनद्धभूमिकाध्याययोर्मध्येऽयं पठ्यते चनमयभादिषु चतुर्विंश एव बहुपाठभेदोऽप्ययं निर्वचनवाक्यसाम्येन द्विधाऽत्र दीयते प्रथमं वृत्तिकारपाठानुसारी बनमभादर्शपाठः, अनन्तरमनुबन्धरूपेण चफ - पाठस्तु निवेश्यते पाठान्तरप्रदर्शनसौलभ्यात् काश्यां मुद्रितकोशः पूर्वं पाठं, काव्यमालायां मुद्रितस्तु द्वितीयं क्रममनुवर्तते ।

1 अत ऊर्ध्वं प्रवक्ष्यामि प्रकृतीनां तु लक्षणम्—इति चतुस्त्रिंशाध्यायप्रारम्भे (ज, ठ, ड, ढाद्यादर्शेषु) वर्तते । वृत्तिकारीयपाठे तदर्धं वैशिकाध्यायान्त एव पठितम्। बनभादिष्वयमध्यायो वैशिकेनैव संमेलितः ।

[1]जितेन्द्रियज्ञानवती नानाशिल्पविचक्षणा ।
दक्षिणाधमहालक्ष्या [2]भीतानां परिसान्त्वनी ॥ २
नानाशास्त्रार्थसंपन्ना गाम्भीर्यौदार्यशालिनी ।
[3]स्थैर्यत्यागगुणोपेता ज्ञेया प्रकृतिरुत्तमा ॥ ३
[4]लोकोपचार[5]चतुरा शिल्पशास्त्रविशारदा ।
[6]विज्ञानमाधुर्ययुता मध्यमा प्रकृतिः स्मृता ॥ ४
[7]रूक्षवाचोऽथ दुःशीलाः कुसत्त्वाः[8] स्थलबुद्धयः ।
क्रोधना घातकाश्चैव [9]मित्रघ्नाश्छिद्रमानिनः[10] ॥ ५
पिशुनास्तूद्धते[11] वाक्यैरकृतज्ञास्तथालसाः ।
मान्यामान्या[12] विशेषज्ञा स्त्रीलोलाः [13]कलहप्रियाः ॥

---

स्त्रीणां नपुंसकस्य (काम) विरहत्वादुपचारः स्नेहव्यवहार इत्यध्यायसङ्गतिः । तत्र प्रकृतिव्यवहारं तावदाह समासतस्त्विति । तुर्व्यतिरेके—पूर्वं विस्तरेण स्वभावो दर्शितोऽधुना तु संक्षेपत इति ।

(लोकोपचारेति) । लोकोपचारो व्यवहार (स्तस्मिन् च तु) पतत्यवश्यम्) । कृतमुपकारं ये विस्मरन्त्यकृतज्ञास्ते । मान्यामान्ययोरविशेषज्ञा इति समासः ।

---

1 भ - नरशीलगुणोपेता ह्युत्तमाधममध्यमाः ।
तस्मात्पृथक्पृथग्भावैर्विज्ञेयाः प्रकृतीर्बुधैः ॥

2 द - दीनानां 3 द - धैर्य 4 भ - किंचिल्लोकोपकारज्ञा 5 द - कार 6 भ - साधारणगुणोपेता 7 द - रूक्षा 8 द - शल्प भ - स्वल्प 9 भ - कुस 10 द - घातकाः भ - दर्शनाः 11 द - ता 12 द - मान्य 13 म - कुहक

सूचकाः पापकर्माणः परद्रव्यापहारिणः ।
एभिर्दोषैस्तु संपन्ना भवन्तीहाधमा नराः ॥ ७

एवं [1]तु शीलतो नृणां प्रकृतिस्त्रिविधा स्मृता ।
[2]स्त्रीणां पुनश्च प्रकृतिं व्याख्यास्याम्यनुपूर्वशः ॥ ८

[3]मृदुभावा चाचपला स्मित[4]भाषिण्यनिष्ठुरा ।
गुरूणां वचने दक्षा सलज्जा विनयान्विता ॥ ९

रूपाभि[5]जनमाधुर्यैर्गुणैः स्वाभाविकैर्युता ।
[6]गाम्भीर्य धैर्यसंपन्ना विज्ञेया प्रमदोत्तमा ॥ १०

नात्युत्कृष्टैरनिखिलैरेभिरेवान्विता गुणैः ।
अल्पदोषानुविद्धा च मध्यमा प्रकृतिः स्मृता[7] ॥ ११

---

पुनश्चेति पूर्वं यद्यप्युक्ता तथापीत्यर्थः । तत्र हि कामोपचाराभिप्रायेण प्रकृतित्रैविध्यं व्याख्यातम् । इह तु सर्वव्यवहारविषयमिति विशेषो दृश्यते । (तत्र तु) विषयभेदादुत्तमादित्वं (सत्त्वसमुद्भवत्वात) रस्याः स्निग्धा इत्यादय आहाराः सात्त्विकस्य प्रिया इत्युच्यन्ते । तत्र हि सत्त्वमाहारविषयमेव सहधूमाभ्यवहारादिति । कृतकटुकाहारव्रतो मुनिर्न सात्त्विक इति नापि चोरो (?) घृतगुड (प) योन्नभोजी सात्त्विक इति । वचने दक्षासती गुरूणां विषये सलज्जा । नात्युत्कृष्टैरतिश्रेष्ठताहीनैः, अनिखिलैः असमग्रैः । सङ्कीर्ण

---

1 म - हि शिल्प 2 भ - एवमेव तु बोद्धव्या स्त्रीणामपि यथाक्रमम् 3 भ - स्मितभाषिणी 4 भ - हासिनी 5 न - नय 6 भ - गंभीरा धीरसत्त्वा वा प्रोत्तमा प्रकृतिः स्मृता 7 भ - मध्या प्रकृतिरिष्यते

अधमा प्रकृतिर्या तु पुरुषाणां प्रकीर्तिता।
विज्ञेया सैव नारीणामधमानां समासतः॥ १२

[1]नपुंसकस्तु विज्ञेयः संकीर्णोऽधम एव च।
प्रेष्यादिरपि विज्ञेया संकीर्णा प्रकृतिर्द्विजाः[2]॥ १३

शकारश्च विटश्चैव ये चान्येप्येवमादयः।
संकीर्णास्तेऽपि विज्ञेया ह्यधमा नाटके बुधैः[3]॥ १४

एता ज्ञेयाः प्रकृतयः पुरुषस्त्रीनपुंसकैः[4]।
आसां तु संप्रवक्ष्यामि विधानं शीलसंश्रयम्॥ १५

[5]अत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः।
[6]मध्यमोत्तमप्रकृतौ नानालक्षणलक्षिताः॥ १६

धीरोद्धता धीरललिता धीरोदात्तास्तथैव च।
धीरप्रशान्तकाश्चैव नायकाः परिकीर्तिताः॥ १७

देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ॥ १८

---

इति। कश्चिन्मिश्रप्रकृतिः कश्चिदधमप्रकृतिरेव। प्रेष्याश्च संकीर्णा इति स्वामिचित्तानुरोधात्। विटोऽप्येवं शकरोऽप्य(नुभूत) विभक्तत्वादुत्तममध्यमचेष्टितमाचरति सङ्कीर्णः। परमार्थतस्तु प्रेष्यविटशकारा अधमा एव।

प्रकृतिभेदमभिधाय नायकभेदमाह अत्र चत्वार इति। सुरतविषये संबन्धिग्रहणे। विग्रहं वा सन्धिना दूषयतीति विदूषकः विप्रलम्भनत्वे (कथा)

---

1 भ - नपुंसकं...यं...र्णमधमं तथा 2 न - द्विधा 3 भ - ह्यधमाश्चैव विज्ञेयास्तेपि नाटके 4 द - काः 5 द - तत्र न - अथ 6 द - मध्योत्तमाया

धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ।
एतेषां तु पुनर्ज्ञेयाश्चत्वारस्तु विदूषकाः ॥ १९
लिंगी द्विजो राजजीवी शिष्यश्चेति यथाक्रमम् ।
देवक्षितिभृतामात्यब्राह्मणानां प्रयोजयेत् ॥ २०
विप्रलंभसुहृद्दोमी संकथालापपेशलाः ।
व्यसनी प्राप्य दुःखं वा युज्यतेऽभ्युदयेन यः ॥ २१
[1]तथा पुरुषमाहुस्तं प्रधानं नायकं बुधाः ।
यत्रानेकस्य [2]भवतो व्यसनाभ्युदयौ पुनः[3] ॥ २२
सपुष्टौ यत्र तौ स्यातां न भवेत्तत्र नायकः ।
दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा ॥ २३
एतास्तु नायिका ज्ञेया नानाप्रकृतिलक्षणाः ।
धीरा च ललिता च स्यादुदात्ता निभृता तथा ॥ २४

विनोदने (नैः) दूषयन्ति विस्मारयन्ति । यथाक्रममिति क्रमिकमौचित्यमत्र यथोचितं योजना, तद्यथा लिङ्गी ऋषिः देवानाम्, द्विजो वीरः सेनापते, राजा जीवी राज्ञः, शिष्यो ब्राह्मणस्य । तेषां व्यापारमाह विप्रलम्भसुहृद इति विदूषकः ।

नन्वेकपुरुषसंभव इतिवृत्ते को नायक इत्याह व्यसनीति । प्राप्यदुखं चेति । पूर्वमेव न व्यसनपतितो व्यसनी वा अयमपि तु सुखीभूत्वा दुखं प्राप्तः ।

नन्वेतल्लक्षणमात्रेतिवृत्तेऽनेकस्यापि रामचरित इव सुग्रीवविभीषणयोरपीत्याह यत्रानेकस्येति । एवं नायकभेदं निरूप्य नायिकाभेदमाह दिव्या-

1 कथा 2 न - जायेते 3 न - समौ

दिव्या राजांगनाश्चैव गुणैर्युक्ता भवन्ति हि।
उदात्ता निभृता चैव भवेत्तु कुलजांगना॥ २५
ललिते चाभ्युदात्ते च गणिकाशिल्पकारिके।
[प्रकृतीनां तु सर्वासामुपचाराद् द्विधा स्मृताः॥ २६
बाह्यश्चाभ्यन्तरश्चैव तयोर्वक्ष्यामि लक्षणम्।
तत्र राजोपचारो यो भवेदाभ्यन्तरो हि सः॥ २७
ततो वाक्योपचारस्तु यस्य बाह्यः स उच्यते।
अथ राजोपचारे च राज्ञामन्तःपुराश्रितम्॥ २८
स्त्रीविभागं प्रवक्ष्यामि विभक्तमुपचारतः।]
राजोपचारं वक्ष्यामि ह्यन्तःपुरसमाश्रयम्॥ २९
महादेवी तथा देव्यः स्वामिन्यः स्थापिता अपि।
भोगिन्यः शिल्पकारिण्यो नाटकीयाः सनर्तकाः॥ ३०
अनुचारिकाश्च विज्ञेयास्तथा च परिचारिकाः।
तथा संचारिकाश्चैव तथा प्रेषणकारिकाः॥ ३१
महत्तर्यः प्रतीहार्यः कुमार्यः स्थविरा अपि।
आयुक्तिकाश्च नृपतेरयमन्तःपुरो जनः॥ ३२

---

चेति। अथ परिवारभेदमाह राजोपचारमित्यादि। महादेवीप्रभृत्यायुक्तिकान्तः सप्तदशकः स्त्रीगणः, नपुंसकादिवर्गोऽष्टादश। अत एव वक्ष्यति एतद्द्वादशविधं प्रोक्तमन्तःपुरमिति, तद्विषयः परिवार इत्यर्थः। महादेवीत्येकत्वं-

अत्र मूर्धाभिषिक्ता या कुलशीलसमन्विता[1] ।
गुणैर्युक्ता वयस्स्था च मध्यस्था क्रोधना तथा ॥ ३३

[2]मुक्तेर्ष्या नृपशीलज्ञा सुखदुःखसहा समा[3] ।
शान्तिस्वस्त्ययनैर्भर्तुस्सततं मङ्गलैषिणी ॥ ३४

[4]शान्ता पतिव्रता धीरा अन्तःपुरहिते रता ।
एभिर्गुणैस्तु संयुक्ता महादेवीत्युदाहृता ॥ ३५

एभिरेव गुणैर्युक्तास्तत्संस्कारविवर्जिताः ।
गर्विताश्चातिसौभाग्याः पतिसंभोगतत्पराः ॥ ३६

शुचिनित्योज्ज्वलाकाराः पतिपक्षाभ्यसूयकाः ।
वयोरूपगुणाढ्या यास्ता देव्य इति भाषिताः ॥ ३७

सेनापतेरमात्यानां भृत्यानामथवा पुनः ।
भवेयुस्तनया यास्तु प्रतिसम्मानवर्जिताः ॥ ३८

शीलरूपगुणैर्यास्तु संपन्ना नृपतेर्हिताः ।
स्वगुणैर्लब्धसम्माना स्वामिन्य इति ताः स्मृताः ॥ ३९

---

विवक्षितम् । महादेवीनां क्रमेण लक्षणान्याह अत्र मूर्धाभिषिक्तेत्यादि । सर्वेषां मूर्धनि प्रधानस्थानेत्यभिषिक्ता । वयसि मध्यमे तिष्ठतीति मध्यस्था । (अन्तःपुरेति) अन्तःपुरिके बाह्ये च वर्गे अन्तःपुराय हितं कौशल्यसंपादनम् । देव्य इति । महादेवी तु शृङ्गारोचिता नातीव भवति साभिमुख्यमभिप्रयातीत्याशयेन वासवदत्तादिषु कवयो देवी वाचोयुक्त्या व्यवहरन्ति ।

---

1 न - विभूषिता दर्शनोया 2 न - अभीष्टानुरक्ता 3 न - तथा 4 न - शुचिः

रूपयौवनशालिन्यः[1] कर्कशा विभ्रमान्विताः ।
रतिसंभोगकुशलाः प्रतिपक्षाभ्यसूयिकाः ॥ ४०
दक्षा भर्तुश्च चित्तज्ञा गन्धमाल्योज्ज्वलास्सदा ।
नृपतेश्छन्दवर्त्तिन्यो न ह्रीर्ष्यामानगर्विताः[2] ॥ ४१
उत्थिताश्च प्रमत्ताश्च त्यक्तालस्या न निष्ठुराः ।
[3]मान्यामान्यविशेषज्ञाः स्थापिता इति ताः स्मृताः ॥
[4]कुलशील[5]लब्धपूजामृदवो नातिचोद्भटाः ।
मध्यस्था निभृताः क्षान्ता भोगिन्य इति ताः स्मृताः[6] ॥
नाना[7]कलाविशेषज्ञा नानाशिल्पविचक्षणाः ।
गन्धपुष्पविभागज्ञा लेख्यालेख्यविकल्पिकाः ॥ ४४
शयनासनभागज्ञाश्चतुरा [8]मधुरास्तथा ।
दक्षाः सौम्याः स्फुटाः श्लिष्टा निभृताः शिल्पकारिकाः ॥
ग्रहमोक्षलयज्ञा या रसभावविकल्पिकाः ।[9]
चतुरा नाट्यकुशलाश्चोहापोहविचक्षणाः ॥ ४६

---

(स्वगुणैरिति समानं) लम्भिता गुणैर्योजिता (कलाशीलव)योभिः । कर्कशा सौभाग्यगर्वेण ।

---

1 न - शालिन्यः 2 न - ईर्ष्याकोपागमहते 3 न - अप्रमत्ता विवेकिन्यः 4 न - रूप 5 न - कुलैः पूजा 6 न - विश्रुताः 7 ट - काल 8 न - मुदिता 9 ट - स्वरताललयज्ञाश्च तथाचार्योपसेविताः न - परभावेङ्गितज्ञाश्च

रूपयौवनसंपन्ना नाटकीयास्तु ताः स्मृताः ।
हेलाभावविशेषाढ्या सत्त्वेनाभिनयेन च ॥ ४७

माधुर्येण च संपन्ना ह्यातोद्यकुशला तथा ।
अङ्गप्रत्यङ्गसंपन्ना[1] चतुष्षष्टिकलान्विता ॥ ४८

चतुराः प्रश्रयोपेताः स्त्रीदोषैश्च विवर्जिताः ।
[2]सदा प्रगल्भा च तथा त्यक्तालस्या जितश्रमा ॥ ४९

नानाशिल्प[3]प्रयोगज्ञा नृत्तगीतविचक्षणा ।
[4]अथ रूपगुणौदार्यधैर्य[5]सौभाग्य[6]शीलसंपन्ना ॥ ५०

[7]पेशलमधुरस्निग्धानुनादिकलचित्रकण्ठा च[8] ।
समागतासु नारीषु[9] रूपयौवनकान्तिभिः ॥ ५१

न दृश्यते गुणैस्तुल्या यस्याः सा नर्तकी स्मृता ।
सर्वावस्थोपचारेषु या न मुञ्चति पार्थिवम् ॥ ५२

विज्ञेया दक्षिणा दक्षा नाट्यज्ञैरनुचारिका ।
शय्यापाली छत्रधारी[10] तथा व्यजनधारिणी ॥ ५३

संवाहिका गन्धयोक्त्री[11] तथा चैव प्रसाधिका ।
तथाभरणयोक्त्री च माल्यसंयोजिका तथा[12] ॥ ५४

---

1 न - संयुक्ता 2 न - प्रियंवदा सलज्जा च प्रगल्भा विजितश्रमा 3 न - शील 4 न - अनु 5 न - वीर 6 न - संयुता 7 न - अनुवादिकलायुक्ता रक्तकण्ठा मनोरमा 8 ट - नीक.लत्रकण्ठी च 9 न - बह्वीषु 10 न - छत्राधिकारिण्यः 11 न - अथ गन्धज्ञा 12 न - तथा माल्यविचक्षणा.

एवं विधा भवेयुर्याः ता ज्ञेयाः परिचारिकाः ।
नानाकक्ष्या विचारिण्यः तथोपवनसंचराः ॥ ५५
देवतायतनक्रीडा प्रासादपरिचारिकाः ।
यामकिन्यस्तथा चैव याश्चैवं लक्षणाः स्त्रियः ॥ ५६
संचारिकास्तु विज्ञेया नाट्यज्ञैः समुदाहृताः[1] ।
प्रेषणेऽकाम[2]संयुक्ते [3]गूह्यगुह्यसमुत्थिते ॥ ५७
नृपैर्यास्तु नियुज्यन्ते ताः ज्ञेयाः परिचारिकाः[4] ।
सर्वान्तःपुररक्षासु स्तुति[5]स्वस्त्ययनेन च ॥ ५८
या वृद्धिमभिनन्दन्ति ता विज्ञेया महत्तराः ।
सन्धिविग्रहसंबद्धनानाचारसमुत्थितम् ॥ ५९
[6]निवेदयन्ति याः कार्यं प्रतिहार्यस्तु ताः स्मृताः ।
अप्राप्त[7]रससंभोगा न संभ्रान्ता न चोद्धटाः[8] ॥ ६०
निभृताश्च सलज्जाश्च कुमार्यो बालिकाः स्मृताः[9] ।
पूर्व[10]राजनयज्ञा याः पूर्वराजाभिपूजिताः ॥ ६१
पूर्वराजानुचरितास्ता वृद्धा इति सुज्ञिताः[11] ।

---

अथेत्यपिचेत्यर्थः । यामकिन्यः प्रतिदहरं जाग्रति याः ।

---

1 द - उपचारतः त - भोगवारिताः 2 न - काम्य 3 द - गुह्यागुह्य
4 ट - प्रेषणकारिकाः 5 ट - रक्षायामाशीः 6 ट - राज्ञो हरन्ति 7 ट - रति
8 ट - अविश्रान्ता न चोत्कटाः 9 ट - इति कीर्तिताः त - पालिकाः स्मृताः
10 ट - राजेन संज्ञा त - रक्त 11 ट - स्थविरा इति ताः स्मृताः

भाण्डागारेष्वधिकृता[1]श्चायुधाधिकृतास्तथा ॥ ६२
फलमूलौषधीनां च [2]तथा चैवान्ववेक्षिकी ।
गन्धाभरणवस्त्राणां माल्यानां चैव चिन्तिका ॥ ६३
बह्वाश्रये तथा युक्ता [3]ज्ञेया ह्यायुक्तिकास्तु ताः ।
इत्यन्तःपुरचारिण्यः स्त्रियः प्रोक्ताः समासतः ॥ ६४
[4]विशेषणविशेषेण तासां वक्ष्यामि वै द्विजाः ।
अनुरक्ताश्च भक्ताश्च नानापार्श्वसमुत्थिताः ॥ ६५
या नियुक्ता नियोगेषु कार्येषु विविधेषु च ।
न चोद्भटा असंभ्रान्ता न लुब्धा नापि निष्ठुराः ॥ ६६
दान्ताः क्षान्ताः प्रसन्नाश्च जितक्रोधा जितेन्द्रियाः ।
अकामा लोभहीनाश्च स्त्रीदोषैश्च विवर्जिताः ॥ ६७
[5]सा त्वन्तःपुरसंचारे योज्या पार्थिववेश्मनि ।
कारुकाः कञ्चुकीयाश्च तथा वर्षवराः पुनः ॥ ६८

---

विशेषणमिति विशेषमन्याभ्यः, आयुक्तिकानां वक्ष्यामीत्यर्थः । आकाम्य इति परस्य कामयितुमनर्हा अशक्याश्च कामिता हि । सर्वे शंसन्ति आयोजनेष्विति ।

---

1 ट - गारनियुक्ता याः  2 ट - बीजानां चान्व  3 ट - ह्यसक्ता च  4 ट - विशेषणं तु शेषाणां  त - विशेषाणां

5 [एवं विधास्तु कर्तव्या नियोगिन्यो नियोक्तृभिः ।
अतः परं प्रवक्ष्यामि तृतीयं प्रकृतिं द्विजाः ॥
यस्मान्नपुंसकं नाम द्वितीया प्रकृतिः स्मृता ।]

औपस्थायिकनिर्मुण्डा [1]स्त्रीणां प्रेषणकर्मणि ।
रक्षणं च कुमारीणां बालिकानां प्रयोजयेत् ॥ ६९
अन्तःपुराधिकारेषु राजचर्यानुवर्त्तिनाम् ।
सर्ववृत्तान्तसंवाहाः पत्यागारे नियोजयेत् ॥ ७०
विनीताः स्वल्पसत्त्वा ये क्लीबा वै स्त्रीस्वभाविकाः ।
जात्या न दोषिणश्चैव ते वै वर्षवराः स्मृताः ॥ ७१
ब्राह्मणाः कुशला वृद्धाः कामदोषविवर्जिताः ।
प्रयोजनेषु देवीनां प्रयोक्तव्या नृपैः सदा ॥ ७२
एतदष्टादशविधं प्रोक्तमन्तःपुरं मया ।
अतः परं प्रवक्ष्यामि बाह्यं पुरुषसंभवम्[2] ॥ ७३
राजा सेनापतिश्चैव पुरोधा मन्त्रिणस्तथा ।
सचिवाः प्राड्विवाकाश्च कुमाराधिकृतास्तथा ॥ ७४

---

अथ बाह्यपरिवारमाह राजेति । युवराजोऽत्र राजशब्देनोक्तः । (अमात्य-

---

[1] [म - अभ्यगारास्तथैव च ।
अपुमांसोऽथ ये ज्ञात्वा स्त्रीलीलाधारिणश्च ये ।
अन्तःपुरचरास्तेऽपि कार्याः कार्यनियोगिनः ॥
द्वारस्थांस्नातकान् कुर्यादायाचारसमन्वितान् ।
प्रेषणेष्वार्यरूपेण कञ्चुकीयान् प्रयोजयेत् ॥
अन्तःपुराणां रक्षार्थं योज्या वर्षवरा नृपैः ।]
[ज्ञानविज्ञानसंपन्नाः स्त्रीसंभोगविवर्जिताः ।
अमत्सरा ये पुरुषाः काञ्चुकीयास्तु ते स्मृताः ॥]

[2] म - पुरुषांस्तु बहिश्चरान्

एके चान्ये च बहवो मान्या ज्ञेया नृपस्य तु ।
विशेषमेषां वक्ष्यामि लक्षणेन निबोधत ॥ ७५
बलवान् बुद्धिसंपन्नः सत्यवादी जितेन्द्रियः ।
दक्षः प्रगल्भो धृतिमान् विक्रान्तो मतिमाञ्छुचिः ॥
दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवाङ्मृदुः ।
लोकपालव्रतधरः [1]कर्ममार्गविशारदः ॥ ७७
उत्थितश्चाप्रमत्तश्च वृद्धसेव्यर्थशास्त्रवित् ।
परभावेङ्गिताभिज्ञः शूरो रक्षासमन्वितः ॥ ७८
ऊहापोहविचारी च नानाशिल्पप्रयोजकः ।
नीतिशास्त्रार्थकुशलस्तथा चैवानुरागवान् ॥ ७९
धर्मज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन्नृपः ।
कुलीना बुद्धिसंपन्ना नानाशास्त्रविपश्चिताः ॥ ८०
स्निग्धाः परैरहार्यश्च न प्रमत्ताश्च देशजाः ।
अलुब्धाश्च विनीताश्च शुचयो धार्मिकास्तथा ॥ ८१
पुरोधो मन्त्रिणस्त्वेभिर्गुणैर्युक्ता भवन्ति हि ।
बुद्धिमान्नीतिसंपन्नस्त्यक्तालस्यः प्रियंवदः ॥ ८२

---

इति) अमेति सहार्थे सहभवाः सहचारिणोऽमात्या इत्येकोऽर्थः । अनुरागवानिति प्रजासु, प्रजास्वयत्नानुरक्ताः, अनुरागोऽहि सार्वगुण्यमिति कौटल्यः

---

1 म - शूरो दाक्षिण्यसंयुतः । कलाज्ञश्चाप्रमत्तश्च वृद्धसेव्यथ नीतिवित् ।

पररन्ध्रविधिज्ञश्च यात्राकालविशेषवित् ।
अर्थशास्त्रार्थकुशलो[1] ह्यनुरक्तः कुलोद्भवः ॥ ८३
देशवित्कालविच्चैव [2]कर्तव्यः क्षितिपैः सदा ।
व्यवहारार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः ॥ ८४
[3]मध्यस्था धार्मिका धीराः कार्याकार्यविवेकिनः ।
क्षान्ता दान्ता जितक्रोधा सर्वत्र समदर्शिनः ॥ ८५
ईदृशः प्राड्विवाकास्तु स्थाप्या धर्मासने द्विजाः ।
उत्थिताश्चाप्रमत्ताश्च त्यक्तालस्या जितश्रमाः ॥ ८६

---

अव्यसनिभिः स्त्रीमद्यमृगयाक्षादावसक्ताः । (अर्थशास्त्रस्येति) अर्थशास्त्रस्य योऽर्थ एकवाक्यतातात्पर्यादिना तज्जानाति । परैरहार्या इति अभेद्याः । ज्ञानं अर्थशास्त्रस्य, (तस्य) विधौ (ज्ञानं) विज्ञानं तदधिष्ठानकौशलं लक्ष्यलक्षणज्ञा इति यावत् । (प्राड्विवाक इति) पृच्छति विवादपदे निर्णयमिति प्रायो विवदितारस्तेषां विवेक उच्यते यैस्तैः प्राड्विवाकः, पृच्छेः क्विबचीति क्विपि दीर्घे प्राडिति रूपम् । विपूर्वस्य ब्रूतेर्घञि विवाक इति । तयोऽ-

---

1 म - तत्त्वज्ञो

2 म - भवेत्सेनापतिर्द्विजाः ।

कुलीना बुद्धिसंपन्ना नानाशास्त्रविपश्चितः ।
स्निग्धाः परैरहार्याश्च न प्रमत्ताश्च देशजाः ॥
अलुब्धाश्च विनीताश्च शुचयो धार्मिकास्तथा ।
पुरोधोमन्त्रिणस्त्वेभिर्गुणैर्युक्ता भवन्ति हि ॥
दक्षाः प्रियंवदा भक्ताः शुचयः श्रमवर्जिताः ।
विनीताः कुशला दान्ताः प्रभवः सचिवाः स्मृता

3 म - वाग्मिनो

स्निग्धाः क्षान्ता विनीताश्च मध्यस्था निपुणास्तथा।
नयज्ञा विनयज्ञाश्च ऊहापोहविचक्षणाः॥ ८७
[1]सर्वशास्त्रार्थसंपन्नाः कुमाराधिकृतास्तथा।
बृहस्पतिमतादेषां गुणांश्चाभिकांक्षयेत्॥ ८८
विज्ञेयं चोपहार्यं च सभ्यानां च विकल्पनम्।
इत्येष वो मया प्रोक्तः [2]प्राड्विवाकविनिर्णयः[3]॥ ८९

---

त्वार्थशास्त्रं नयहेतुत्वात्। एवं विनयोऽत्र धर्मशास्त्रम्। कुमाराणां राजपुत्राणां रक्षार्थमधिकृताः।

एतच्चैषां संक्षेपेण स्वरूपमुक्तं वितत्य तु तत्प्रधानेभ्य एव शास्त्रेभ्योऽवधारयेदिति दर्शयति बृहस्पतिमतादिति बार्हस्पत्यौशनसादेरित्यर्थः। एषामिति राजसेनापत्यादीनां कुमाराधिकृतपर्यन्तानां यदेतैर्ज्ञातव्यमुपहरणीयं वा संपाद्य तदपि बार्हस्पत्यादेरभिलक्षयेदिति संबन्धः।

ननु कियन्तः प्राड्विवाका इत्याह सभ्यानां चेति। तन्मतादेव जानीयादित्यर्थः। प्रजानां मात्स्यन्यायाद्रक्षितुं राज्ञोऽधिकारः, मात्स्यो न्यायश्च विवादनिर्णयेन रक्ष्यते। तत्र च प्राड्विवाका एव प्रधानम्। तथा च प्राड्विवाको राजस्थानीय इति लोके प्रसिद्धम्। प्रधाने च व्यपदेशं कुर्वन्नुपसंहरति इत्येष वो मया प्रोक्तः प्राड्विवाकविनिर्णय इति। राजोपयोगीति बाह्याभ्यन्तरपरिवारनिर्णय इति यावत्।

---

1 म - क्रमायाता हितासक्ताः कुमाराधिकृताः स्मृताः। 2 म - सर्वप्रकृतिलक्षणम् 3 म - ज्ञानविज्ञानवेदिनः। स्वदेशजा विनीताश्च शुचयो धार्मिकास्तथा।

अत ऊर्ध्वं प्रवक्ष्यामि चित्राभिनयनं पुनः ॥

इति भारतीये नाट्यशास्त्रे पुंस्त्र्युपचारो नामाध्याय-
श्चतुर्विंशः ॥

---

अध्यायान्तरमासूत्रयति अत ऊर्ध्वमिति । पुनःपुनरयमभिप्रायो यद्यपि सामान्याभिनये चित्राभिनयोऽस्ति तथापि रसस्वभावविशेषो दर्शितः। शृङ्गार-तद्व्यभिचार्यादीनां हि प्राधान्यं पूर्वमेव दर्शितम् । चित्राभिनये तु रसाद्युप-योगिबाह्यवस्तुविषयमेवाभिनयानां भावनारूपं मिश्रीकरणात्मकं समानी-करणमुच्यते । तेन चित्राभिनयः सामान्याभिनयविशेषभूत एवेति शिवम् ॥

चतुर्विंशोऽयमध्यायः किञ्चित्कृतविवेचनः ।
मयाभिनवगुप्तेन शिवदास्यैकशालिना ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तविरचितायां
नाट्यवेदवृत्तावभिनवभारत्यां स्त्रीपुंसोपचारोऽध्यायश्चतुर्विंशः

•

श्रीः

# नाट्यशास्त्रम्

## पञ्चविंशोऽध्यायः

अंगाद्यभिनयस्यैव यो विशेषः क्वचित् क्वचित् ।
[1]अनुक्त उच्यते चित्रः[2] स चित्राभिनयस्स्मृतः ॥ १

---

अथ पञ्चविंशोऽध्यायः

वागङ्गसत्त्वचेष्टाचित्राभिनयप्रयोगरचनचणः ।
संसारनाट्यनायकपुरुषाकारः शिवो जयति ॥

सामान्याभिनयस्य चित्राभिनयः शेष इत्युक्तम् । केवलसामान्याध्याये रसात्मकप्रधानं पदार्थविशेषमभिनयानां समानीकरणम् । इह तु तदुपयोगी विभावादिविषयम् । किञ्चैक एवाभिनयः पूर्वं यो निरूपितः स एव कार्यान्तरालाभे तद्विरुद्धमर्थमभिनयतीति चित्र उच्यते । तद्वैदग्ध्यमध्याये निरूप्यत इति सङ्गतिः । तदेतदाह अङ्गाद्यभिनयस्यैवेति । अङ्गमिति करणाङ्गहारास्तेषामभिनयत्वं नोक्तम् । तर्हि वक्ष्यते—

शिखिसारसहंसाद्या स्थले ये च स्वभावतः ।
रेचकैरङ्गहारैश्च तेषामभिनयः............... ॥ इत्यादि ।

आदिग्रहणे विभावादि विभावोऽपि विभावस्याभिनय इति वक्ष्यते । अभिनीयतेऽनेनेत्यभिनयः । तस्य च विशेषः उत्तमोत्तमेत्यादिना वक्ष्यते । अभिनीयत इति चाभिनयः । यो ह्यन्येनाभिनय उक्तः स इहाभिनयान्तरस्याप्यभिनयत्वेनोक्तो यथा "अलपद्मकपीडाभिः सर्वार्थग्रहण" मिति । अङ्गाभिनयस्येति समाहारे वृत्तिस्तस्य विशेषो य उच्यत इति संबन्धः । क्वचिदिति । न सर्वत्र ।

---

1 भ - अव्यक्त  2 ज - बक्षात्त

उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ[1] ।
उद्वाहितेन शिरसा तथा चोर्ध्व[2]निरीक्षणात् ॥ २
प्रभातं गगनं रात्रिः प्रदोषं दिवसं तथा ।
ऋतून् घनान् वनान्तांश्च विस्तीर्णांश्च जलाशयान् ॥
दिशो ग्रहान् सनक्षत्रान् किञ्चित् स्वस्थं च यद्भवेत्[3] ।
[4]तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः[5] ॥ ४
[6]एभिरेव करैर्भूयस्तेनैव शिरसा पुनः ।
अधो निरीक्षणेनाथ भूमिस्थान् संप्रदर्शयेत् ॥ ५
स्पर्शस्य [7]ग्रहणेनैव तथोल्लुकसनेन च ।
चन्द्रज्योत्स्नां सुखं वायुं [8]रसं गन्धं च निर्दिशेत् ॥

---

अत्राभेदतः अस्मात्क्वचिदनुक्तोऽसौ विशेषः क्वचित्तूक्त एव "स्वस्तिकविच्युतिकरणा"(९-२१) दित्यादि । य एवासावधिको विशेषः तदेव चित्रमभिनयम् । यतः संपादयति तत उपचारात् । चित्राभिनयस्तत्र तत्र प्रभातादयः सर्वलोकसाधारणा इति तद्विषयस्याभिनयस्य सहकारियोगेन चित्रत्वं दर्शयितुमाह उत्तानौ तु करौ कृत्वेति । (९-१३६) "स्वस्तिकविच्युतिकरणाद्दिशो घनाः खं वनं समुद्राश्च । ऋतवो महीतलोघं विस्तीर्णं चाभिनेयं स्या" दित्युक्तम् । संयुक्तहस्ते स्वस्तिके । अत्रोत्तानत्वं पार्श्वस्थता शिरसो उद्वाहनं दृष्टेरूर्ध्वता इत्यादिविशेष उच्यते । एवमुत्तरत्र योज्यम् । नानादृष्टीति । कदाचिद्विस्मिता क्वचिच्च विहीनेत्यादिक्रमेण ऊर्ध्वं स्वविरुद्धमधस्स्थं त्वित्थमभिनेयमित्याह अधोनिरीक्षणेनेति । स्वस्थमित्युक्तं गगने च मृगाङ्कादयः पदार्थास्ते कथमभिनेया इत्याह स्पर्शस्य ग्रहणेनैवेति ।

---

1 ज - पताकौ स्वस्तिकस्थितौ 2 ज - उच्च 3 ब - स्वस्थं दिव्यार्थमेव च
4 ब - अनेनाभिनयेन ह्यनेकान् भावान् प्रदर्शयेत् । ज - अभिनेयं तत्र सर्वं 5 च - भावरसार्द्रतः 6 ब - अनेनैव क्रमेणेह नानाभावसमाश्रयम् 7 च - ग्रहणात्...... उल्लुकसनादपि 8 च - रसगन्धौ

वस्त्रानिकुण्ठनात्सूर्यं रजोधूमानिलांस्तथा[1] ।
भूमितापमथोष्णं च कुर्याच्छायाभिलाषतः ॥ ७
ऊर्ध्वाकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् ।
उदयास्तगतं चैव विस्मयार्थैः प्रदर्शयेत् ॥ ८
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च ।
गात्रस्पर्शैस्सरोमाञ्चैस्तेषामभिनयो भवेत् ॥ ९
यानि स्युस्तीक्ष्णरूपाणि तानि चाभिनयेत्सुधीः ।
असंस्पर्शैस्तथोद्वेगैस्तथा मुखविकुण्ठनैः ॥ १०
गम्भीरोदात्तसंयुक्तानर्थानभिनयेद्बुधः ।
[3]साटोपैश्च सगर्वैश्च गात्रैः सौष्ठवसंयुतैः ॥ ११

---

"किञ्चिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च ।

तथांसगण्डयोः स्पर्शादिति ।।" (२२-२८) उल्लकवदंसना यस्योर्ध्वं विधूननं । रज इति धूलिः । उदयास्तमयोः पूर्वपश्चिमयोः पर्वतयोः गतं सूर्यं स्यायोऽभिनयोऽर्थोऽभिनयत्वेन प्रयोजनं येषामिति विस्मयाभिनयैर्निदर्शयेदिति यावत् । सर्वग्राहकं लक्षणमाह यानि सौम्यार्थयुक्तानीति । सौम्यं येषां प्रयोजनं एतदेव स्फुटयति सुखप्रधानस्य भावस्य कृतं संपत्तिर्येभ्यः सुखप्रधानो भावः सोम इव सौम्यसुखायेत्वाद्यः । विकुण्ठनैः सङ्कोचनैः । गम्भीरोदात्तसंयुक्तानिति भावप्रधानो निर्देशः । तेन यद्विषयं गांभीर्यमुदायुक्तत्वं च । आदावत्र शाखाविस्तरः गन्धर्व इत्यात्मनिर्देशादिगम्भीरोदात्तप्रसंगाद्राजोचितहाराभिनय.........पवीतदेशस्थमरालमिति । आद्या धनुर्नताकुञ्चितोऽङ्गुष्ठकः शेष-

---

1 ज - अनलान् ब - अनिलौ 2 ज - मये चैव गम्भीरार्थैः ब - संभ्रमेण
3 ब - साहसैश्च

यज्ञोपवीत[1]देशस्थमराले [2]हारमादिशेत् ।
[3]स्वस्तिकौ विच्युतौ हारस्रग्दामार्थान् निदर्शयेत् ॥
भ्रमणेन प्रदेशिन्या दृष्टेः परिगमेन च ।
[4]अलपद्मकपीडाया: सर्वार्थग्रहणं भवेत् ॥ १३
[5]श्रव्यं श्रवणयोगेन दृश्यं दृष्टिविलोकनैः[6] ।
आत्मस्थं परसंस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥ १४
विद्युदुल्काघनरवाविस्फुलिंगा[7]र्चिषस्तथा ।
त्रस्तांगाक्षिनिमेषैश्च तेऽभिनेयाः प्रयोक्तृभिः ॥ १५

---

भिन्नोर्ध्ववलिता ह्यन्तराले भारो देहस्य भूषणमपहारो वक्षसः पुनरपि तमेव गत्वा सर्वग्रहणं तथैव लोकस्येति कर्णोर्द्धं सूचीमुखस्य ताडनः परितो भ्रमणेन गमनविशेषमाह । भ्रमणेन प्रदेशिन्याः दृष्टेः सर्वार्थेऽभिनयेऽभिनयान्तरमप्याह अलपद्मकपीडादिरिति । अलपद्मकशब्देन तदङ्गुल्यः पीडा करतलेन तासां संयोगः, तत्र च बहुत्वं विवक्षितं तेनायमर्थः "आवर्तिन्यः करतल"(९-९१) इति यः अलपल्लव उक्तस्तस्य क्रमेण कनीयः स्यादिति काङ्गुलीति हस्ततलेन संयोजयेदिति । सर्वार्थाभिनयः । एतच्च रूपमलपद्मस्य माङ्गल्योक्तम् । अथ यदा कात्स्न्येन सर्वशब्दः प्रवर्तते । तद्यथा सर्वः शब्द इत्यादौ तदा विशेषसहकारिणमाह श्रव्यं श्रवणयोगेनेति । (२२-७६)"कृत्वा साचीकृत्या ता दृष्टिं शिरःपार्श्वानतमित्याश्रवणयोगः तत्सहितशब्दविषयः सर्वाभिनयः विद्युदादिविषये येऽभिनया उक्ताः। तद्यथा "सूची विरलांगुली विद्युति चक्रं च तद्विद्युता"(९-६६) इत्युक्तत्वात् । तेषां विशेषमाह त्रस्तेति । वस्तुतासाभिनयोऽगानामक्ष्णोश्च

---

1 च - देशे तु कृत्वारालौ करावुभौ 2 व - हस्तं 3 व - हारार्थहारयोगेषु
4 घ - पीडनाच्चालपद्मस्य 5 ज - श्राव्यं 6 ज - उपपातनात् 7 ज - द्योतयः

उद्वेष्टितपरावृत्तौ करौ कृत्वा नतं शिरः ।
असंस्पर्शो तथानिष्टे जिह्मदृष्टेन कारयेत्[1] ॥ १६

वायु[2]मुष्णं तमस्तेजो मुख[3]प्रच्छादनेन च ।
रेणुतोयपतंगांश्च [4]भ्रमरांश्च निवारयेत् ॥ १७

कृत्वा स्वस्तिकसंस्थानौ[5] पद्मकोशावधोमुखौ ।
सिंहर्क्षवानरव्याघ्रश्वापदांश्च निरूपयेत्[6] ॥ १८

स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने ।
खटकस्वस्थिकौ चापि प्रतोद[7]ग्रहणे स्मृतौ ॥ १९

---

निमेषः संकोच इति । विद्युदादिव्यङ्ग्यमप्यभिनयमाह उद्वेष्टितपरावृत्ताविति । परावृत्तौ समन्तादुद्वेष्टितौ क्रमात् मुक्तकनीयस्याङ्गुलिगुणावित्येवं प्राग्भावे मुष्टिः पश्चाद्भागे तु पराङ्मुखोऽरालोभ इति । तत्रा सादिवुः स्थितमेवात्र जिह्म-दृष्टेनेति । जिह्मया दृष्ट्या "लंबिता कुञ्चितपुटा शनैस्तिर्यङ्निरीक्षणैः निगूढा गूढतारा च जिह्मा दृष्टि"(८-८३)रिति "सिंहव्याघ्रेष्वभिनय" (९-१२१) इत्यूर्णनाभस्य कर्मोक्तम् । तत्र विशेषमाह कृत्वा स्वस्तिकसंस्थानाविति । पद्मकोशाविस्तत्रोत्तराभावे चोक्ते एतत्प्रकृतत्वात् "पद्मकोशस्य हस्तांगुल्यः कुञ्चिता" इत्यूर्णनाभः । अन्ये पद्मकोशस्यैव तमनुक्तं कर्मेत्याहुः । त्रिपताकस्या-नुक्तं कर्म दर्शयति—स्वस्तिकौ त्रिपताकौ च गुरूणां पादवन्दन इति । खटका-मुखस्य कर्मोक्तं "मन्थानशरापकर्षणपुष्पापचयप्रतोदकार्याणीति" (९-६३) । तत्र प्रतोदकृत्ये विशेषमाह खटकस्वस्तिकौ चापि प्रतोदग्रहण इति ॥

---

1 ज - असंस्पर्शोस्तथानिष्टं मा स्पृशेति च निर्दिशेत् 2 प - ऊष्मं नभ 3 च - सं 4 ज - तमो भङ्गांश्च च - पतङ्गानां भ्रमराणां च वारणम् 5 ज - संस्थौ तु 6 ज - रूपयेद् द्विजसत्तमाः 7 च - प्रग्रहादिषु

एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त चाष्टधा[1] ।
नव वा दश वापि स्युर्गणनाङ्गुलिभिर्भवेत्[2] ॥ २०

दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च ।
पताकाभ्यां तु हस्ताभ्यां प्रयोज्यास्ताः[3] प्रयोक्तृभिः ॥

[4]दशाख्यगणनायास्तु परतो या भवेदिह ।
वाक्यार्थेनैव साध्यासौ परोक्षाभिनयेन च ॥ २२

छत्रध्वजपताकाश्च निर्देश्या दण्डधारणात् ।
[5]नानाप्रहरणं चाथ निर्देश्यं धारणाश्रयम् ॥ २३

---

अथ सर्वव्यवहारोपयोगिसंख्याभिनयं प्रदर्शयन्नुक्तपूर्वाणामेव हस्ताना-मनुक्तं कर्म दर्शयति । एतदुक्तं भवति "सूचीमुखप्रदेशिन्या त्रिपताकांगुलिकां-गुलांगुलिविधौ ऊर्ध्वंलताष्टकांगुलिचतुष्कोण मुकुलहस्तविकासतया चैकादितया पञ्चता संख्या, षडादिका तु द्वाभ्यां यथा मुकुले सूच्यास्येन षट् यावन्मुकुले यौ दशपर्यन्ता गणना यावतीति दशपर्यन्ता गणना यावत् ततः परन्तु बहुत्वा-भिनय एवेत्याह दश इत्यादि । दशभिराख्या येषां तेऽत्र विंशत्यादयः विंशेति हि विंशति तस्मादत्र पताकाभ्यामभिनय इत्याह दशाख्येति । आख्या-शब्दोऽवधिवाची । आख्यति प्रतते भावा यावतीति । दशपर्यन्ता गणना यावतीति दशपर्यन्ता गणना यावत्ततः परा सा संक्षेपेणाभिनेया बहुत्वमात्रेण वाक्यार्थशब्दोऽत्र संक्षिप्तमुपलक्षयति । पदार्था हि तत्र संक्षिप्यन्ते । एतच्च परोक्षाभिनये । प्रत्यक्षे त्वेकैकस्य निर्देशेनैव गणनेति यावत् । आयतदण्ड-ग्रहणमिति(९-६२) । खटकामुखस्य सामान्येन कर्मोक्तम् । तद्विशेष्यं दर्शयितुमाह छत्रध्वजपताकाश्चेति । दण्डधारणे एव तत्प्रकारमन्तर्भूतमित्यर्थः । चकारेणा-भिनयान्तरमप्यत्र सूचयति । अथशब्दे च । तद्यथा शिरस उपर्यधोमुखः

---

1 ज - वा  2 ज - गण्डान्यङ्गुलिभिर्बुधाः  3 ज - अभिनेयाः  4 ज - संख्यायास्तु दशभ्यस्तु परतोऽभ्यधिका यदा । वाचिकेनैव साध्याः  5 ज - सधारणैश्च रूपाणि नानाप्रहरणान्यपि

एकचित्तो ह्यधोदृष्टिः किञ्चिन्नतशिरास्तथा[1] ।
मध्यहस्तश्च सन्दंशः स्मृते[2] ध्याने वितर्किते ॥ २४
उद्वाहितं शिरः कृत्वा हंसपक्षौ प्रदक्षिणौ ।
[3]अपत्यरूपणे कार्याबुच्छ्रयो च प्रयोक्तृभिः ॥ २५
उद्वाहितं शिरः कृत्वा हंसवक्त्रं तथोर्ध्वगम् ।
प्रसादयञ्च यं मानं दीर्घसत्वं च निर्दिशेत् ॥ २६
अरालं च शिरस्स्थाने समुद्वाह्य तु वामकम् ।
गते निर्वृत्ते ध्वस्ते च श्रान्तवाक्ये च योजयेत् ॥
सर्वेन्द्रियस्वस्थतया प्रसन्नवदनस्तथा[4] ।
विचित्र[5]भूतलालोकैः शरदन्तु[6] विनिर्दिशेत् ॥ २८
गात्रसंकोचनाच्चापि सूर्याग्निपटुसेवनात्[7] ।
हेमन्तस्त्वभिनेतव्यः पुरुषैर्मध्यमाधमैः[8] ॥ २९

पताकछत्ते पञ्चांगुल्यूर्ध्वध्वजे सूचीमुख्यांगुलिपताकायां मुष्टिशिखरकपित्थ-मृगशीर्षकाद्या यथायोगं प्रहरणेषु योगध्याने स्तोक इति(९-११४) कचिद्विस्मिता अपूर्वशालिसंपद्दर्शनात् कचित् “ग्लानाभीष्टादर्शना”दित्यादि दृष्टिभेदादि चाद्यो व्यसनसंभवस्तस्मिन्निमित्ता यावस्थान्तरप्राप्तिः ततो हेतोरिति संबन्धः। रूक्षस्येति । उद्वेजनस्य प्रावृड्वर्षारालस्य यथा प्रथमे भागे वर्षितुं प्रावृड्मेघा-

1 प - शिरः किंचिन्नतं भवेत् ज - शनैराकम्पयेच्छिरः 2 ज - सन्दंशं कुर्यात् 3 ज - अपत्याभिनयं कार्यमुच्छ्रयश्च 4 ज - प्रसादेन मुखस्य च 5 ज - कुसुम 6 ज - न्त्वभि 7 ज - तथा शुल्काभिलाषतः प - तथाग्न्य 8 म - उत्तमैः

शिरोदन्तोष्ठकम्पेन गात्रसंकोचनेन च ।
कूजितैश्च सशीत्कारैरधमश्शीतमादिशेत् ॥ ३०
अवस्थान्तर[1]मासाद्य कदाचित्तूत्तमैरपि[2] ।
शीताभिनयनं कुर्याद्देवा[3]द्व्यसनसंभवम् ॥ ३१
[4]ऋतुजानां तु पुष्पाणां गन्धाघ्राणैस्तथैव च ।
रूक्षस्य वायोः स्पर्शाच्च शिशिरं रूपयेद्बुधः ॥ ३२
[5]प्रमोदजननारम्भैरुपभागैः पृथग्विधैः[6] ।
वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात्[7] ॥ ३३
स्वेद[8]प्रमार्जनैश्चैव भूमितापैः सवीजनैः[9] ।
उष्णस्य वायोः स्पर्शेन ग्रीष्मं त्वभिनयेद्बुधः ॥ ३४
कदम्बनीपकुटपैः शाद्वलैः सेन्द्रगोपकैः ।
[10]मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत् ॥ ३५

---

यत्रेति । निर्घातः आकाशस्फोटः शब्दो गर्जिनादन्य एव चिह्नमिति पुष्प-पुष्पादिशेषषड्विशेष इति । तत्कालोचितो वस्त्वाभरणप्रसाधनादिः यस्मिन्निति वक्तव्ये संबन्धमात्रापेक्षया षष्ठी कर्मेति क्वचिद्रूपानुसरणमित्यादिरूपं यथा क्वचिदातपः क्वचिच्चन्द्रोद्योतः । भावानां विभावैरभिनयो यथा क्रोधस्य परस्थस्य

---

1 ज - संप्राप्तः 2 ज - उत्तमोऽपि कदाचन 3 ज - शीतवातस्य निर्देशं कुर्याद्...संभवे 4 ज - अनिलस्य सुखस्पर्शादृतुजानां तथैव च । गन्धाघ्राणेन पुष्पाणां 5 ज - आमोदजननैर्गन्धैः 6 ज - ससंभ्रमैः 7 ज - नैः 8 ज - अवमार्जनाच्चापि 9 ज - तापोपवीजनैः । स्पर्शनादृतुवायोश्च 10 ज - मेघैर्म-यूरनादैश्च प्रावृषं संनिरूपयेत् । गम्भीरैर्मेघनादैश्च

मेघौघनादैर्गम्भीरैर्धाराप्रपतनैस्तदा ।
विद्युन्निर्घातघोषैश्च वर्षारात्रं समादिशेत् ॥ ३६

यद्यस्य[1] चिह्नं वेषो वा कर्म वा रूपमेव वा ।
निर्देश्यः स ऋतुस्तेन इष्टानिष्टार्थदर्शनात्[2] ॥ ३७

एतानृतूनर्थवशाद्दर्शयेद्धि[3] रसानुगान् ।
सुखिनस्तु सुखोपेतान् दुःखार्थान् दुःखसंयुतान् ॥

यो येन भावेनाविष्टः सुखदेनेतरेण वा ।
स तदाहितसंस्कारः सर्वं पश्यति तन्मयम् ॥ ३९

[4]भावाभिनयनं कुर्याद्विभावानां निदर्शनैः ।
तथैव चानुभावानां भावसिद्धिः प्रवर्तिता[5] ॥ ४०

विभावेनाहृतं कार्यमनुभावेन नीयते[6] ।

---

सूचीमुखांगुल्यादिपरः मन्निर्दिश्यते तद्द्वारेण क्रोधः । अनेन च सहाध्याये यदुक्तं तत्राभिप्रायविशेषो दर्शितः । तत्र ह्युक्तं "रिपुर्देशे तथैव क्रोध" (२२-अध्या.)इति एवं स्नेहाख्यपद्मरूपकेण हंसपक्षेणानुभावानां भावसिद्ध्या प्रवर्त्तितमभिनयं कुर्यादिति संबन्धः । ...... णोऽभिनयः शोकोचितेन मुखविकूणनादिना । ननु विभावः कथमभिनय इत्याशंक्याह विभावेनाहृतं कार्यमिति । विभावः करणत्वाद्गमक इति यावत् । विभावेन हि कार्यमाहृतः । सामग्री हि कार्यं व्यभिचरन्ती गमयत्येव ।

---

1 ज - अत्र 2 ज - नैः 3 ज - प्रयुञ्जीत विचक्षणः । दुःखोपेतांस्तु दुःखेन सुखोपेतान्सुखेषु च 4 च - विभावेनाहृतं कार्यमनुभावे निरूपणात् 5 ज - प्रवर्तितेः 6 ज - भावेन प्रतिदर्शयेत

आत्मानुभवनं भावो विभावः परदर्शनम् ॥ ४१
गुरुर्मित्रं सखा स्निग्धः संबन्धी बन्धुरेव वा ।
आवेद्यते हि यः प्राप्तः स विभाव इति स्मृतः ॥
यत्त्वस्य संभ्रमोत्थानैरर्घ्यपाद्यासनादिभिः[1] ।
पूजनं क्रियते[2] भक्त्या [3]सोऽनुभावः प्रकीर्तितः ॥
एवमन्येष्वपि ज्ञेयो नानाकार्यप्रदर्शनात् ।

ननु भावः कथमनुभावस्य गमक इत्याह अनुभावेनेति । अनुभवान्तरे साहचर्यानुभवात् गमकमित्येतदमुल तत्त्वम् । यदुक्तं भावसिद्धिमवर्तितमनुभावानामभिनयं कुर्यादिति । अथ विस्मरणशीलान् प्रति शृंगग्राहिकया भावविभावानुभावस्वरूपं दर्शयति आत्मानुभवनं भाव इत्यादि । आत्मविश्रान्तं यदनुभवनं सुखदुःखसंविद्रूपं स भाव इत्यर्थः । आत्मग्रहणात् घटाद्यनुभवनं न भाव इत्युक्तं भवति । णिचमन्ये पठन्ति । तत्रार्थः आत्मानुभाव्यते येन न च तादृगर्थस्तत्रस्तीति प्रकर्षो गम्यते । तेन यल्लब्धसत्तार्थकं चेत् तदवश्यमनुभूयते सुखादिरूपम् । तदेव भाव इत्युक्तं भवति ।

यत्तु व्यतिरिक्तवस्तुज्ञानं तत्सर्वं सुखादिजनकत्वाद्विभावः । तदाह विभावः परदर्शनमिति । तदुदाहरन्ति गुरुर्मित्रमित्यादि । गुरुदर्शने सति विनयग्रहणे आदावुत्साह एव मित्रादेर्यथोचितं हर्षादनुविभावत्वं बोद्धव्यम् । मित्रं कार्यवशात् समानव्यापारियोगत्वात् सखा सहपांसुक्रीडनापरिचितः आवेद्यत इत्यनेन दर्शनविषयस्यैव भावतां दर्शयति । प्राप्त इत्यनेन चित्तवृत्तिजन्मनि गुर्वादेरन्वयव्यतिरेकौ सूचयन् कारणमाह । यत्त्वस्येति गुर्वादेः संभ्रमेण यदुत्थानं प्रत्युद्गमनं बहुवचनाद्यततं सूचकौ यथोचितं भावे संग्रहालिङ्गनादिवचनेनेत्यर्थः । उदाहरणमात्रमेतदिति दर्शयति एवमन्येष्वपीति ।

1 ज - अर्घ्यासनपरिग्रहैः 2 ब - वाचा 3 ज - स्वभाव इति कीर्तितः

विभावो वापि भावो वा विज्ञेयोऽर्थवशाद्बुधैः ॥

यस्त्वपि प्रतिसंदेशो दूतस्येह प्रदीयते ।

सोऽनुभाव इति ज्ञेयः [1]प्रतिसन्देशदर्शितः ॥ ४५

एवं भावो विभावो वाप्यनुभावश्च कीर्तितः ।

पुरुषैरभिनेयः स्यात्प्रमदाभिरथापि वा ॥ ४६

स्वभावाभिनये स्थानं पुंसां कार्यं तु वैष्णवम् ।

आयतं वावहित्थं वा स्त्रीणां कार्यं स्वभावतः ॥

प्रयोजनवशाच्चैव शेषाण्यपि भवन्ति हि ।

नानाभावाभिनयनैः प्रयोगैश्च पृथग्विधैः[2] ॥ ४८

रसेषु शृङ्गारादिष्विति भावः एकेन वा ग्रहणेनानुभावः सूचितः । द्वितीयो विकल्पार्थः अपिशब्देन स्थायिव्यभिचारिरूपतां समुच्चिनोति । अर्थवशादिति प्रयोजनवशात् ।

ननु नियमेनायमस्याश्चित्तवृत्तौ विभाव इति शक्यं वक्तुम् । प्रयोजनान्तरयोगे तस्यैवान्यत्र विभावत्वदर्शनात् । न केवलं प्रत्यक्षेण दृश्य एवानुभवश्चित्तवृत्तिं गमयति । यावत्प्रमाणान्तरेण शब्दादिनाप्यविदित इति दर्शयितुमाह यस्त्वपि प्रतिसन्देश इति । एतच्चानुमानस्याप्युपलक्षणम् । सन्तमसे हि गद्गदगुरुसज्जनवचनानुमेयात् । बाष्पादपि हि भवति शोकावगमः । एतदुपसंहरति एवमित्यादि । पुरुषैः प्रमदाभिर्वेत्युक्तं तत्रानावेश्यादेषां स्थानमात्रेदयति । गतिं च दर्शयति स्वभावाभिनय इत्यादिना । शेषाणीति । स्थानान्तराण्यपीति यावत् । यदुक्तम्—

1 ज - पर 2 ज - भावानभिनयैः कार्यं नित्यं प्रयोक्तृभिः

[1]धैर्यलीलांगसंपन्नं [2]पुरुषाणां विचेष्टितम् ।
मृदुलीलागहारैश्च[3] स्त्रीणां कार्यं तु चेष्टितम् ॥ ४९
करपादांग[4]सञ्चारास्त्रीणां तु ललिताः स्मृताः ।
[5]सुधीरश्चोद्धताश्चैव पुरुषाणां प्रयोक्तृभिः ॥ ५०
यथा रसं यथाभावं स्त्रीणां भावप्रदर्शनम् ।
नराणां प्रमदानां च भावाभिनयनं पृथक्[6] ॥ ५१
भावानुभावनं युक्तं[7] व्याख्यास्याम्यनुपूर्वशः ।
आलिंगनेन गात्राणां सस्मितेन च चक्षुषा ॥ ५२
तथोल्लुकसनाच्चापि [8]हर्षं सन्दर्शयेन्नरः ।
क्षिप्रसञ्जातरोमाञ्चात्[9] बाष्पेणावृतलोचना ॥ ५३
कुर्वीत नर्तकी हर्षं प्रीत्या वाक्यैश्च सस्मितैः[10] ।
उद्वृत्तरक्तनेत्रश्च[11] सन्दष्टाधर एव च ॥ ५४

---

धैर्यलीलाङ्गसंपन्नं कृत्वा पुरुषचेष्टितम् ।
प्रयोक्तृभिः प्रयोक्तव्यं स्त्रीणां चेष्टित मन्यथा ॥

मार्दवलीलाप्रधानैरङ्गविक्षेपैरिति तत्र तथा सिद्धत्वं हेतुमाह करपादाङ्गसञ्चार इति । तुर्हेतौ । आलिङ्गनेन गात्राणामिति । स्वात्मीयानामेवान्योन्यमासे.... णेत्यर्थः । क्रोधस्त्वभिनयेदिति व्यभिचरितः प्राप्तिमिति मन्तव्यम् । रसेषु हि

---

1 प - धैर्यं ज - धैर्योदात्त 2 ज - नराणामपि 3 ज - हारं तु 4 ज - अग्र 5 ज - धीरोदात्तास्तु विज्ञेया 6 ज - शब्दार्थाभिनयं बुधाः (न - पृथक्) 7 न - संयुक्तं 8 प - प्रहर्षं संप्रयोजयेत् 8 - हर्षं पुंसां प्र... 9 भ - रोमाञ्चा 10 प - प्रीतियुक्ता स्मितेन च 11 प - नेत्रास्यास्स

निश्वासकम्पितांगश्च क्रोधं चाभिनयेन्नरः ।
[1]नेत्राभ्यां बाष्पपूर्णाभ्यां चिबुकोष्ठप्रकम्पनात् ॥ ५५
शिरसः कम्पनाच्चैव भ्रुकुटीकरणेन च ।
मौनेनागुलिभंगेन माल्याभरणवर्जनात् ॥ ५६
आयतस्थानकस्थाया ईर्ष्या क्रोधे[2] भवेत्स्त्रियाः ।
निश्वासोच्छ्वासबहुलैरधोमुखविचिन्तनैः ॥ ५७
आकाश[3]वचनाच्चापि दुःखं पुंसां तु योजयेत् ।
रुदितैः[4] श्वसितैश्चैव शिरोभिहननेन च ॥ ५८
भूमि[5]पाताभिघातैश्च दुःखं स्त्रीषु प्रयोजयेत् ।
आनन्दजं चार्तिजं वा[6] ईर्ष्यासंभूतमेव वा ॥ ५९
यत्पूर्वमुक्तं रुदितं तत्स्त्रीनीचेषु योजयेत् ।
संभ्रमावेगचेष्टाभिश्शस्त्रसंपातनेन च ॥ ६०
पुरुषाणां भयं कार्यं[7] धैर्यावेगबलादिभिः ।
[8]चलतारकनेत्रत्वाद्गात्रैः स्फुरितकम्पितैः ॥ ६१

---

सामान्याभिनयः शृङ्गारद्वारेण दर्शितः । अत्र तु व्यभिचारिषु दर्श्यते । दुःखमिति शोकः भूम्यां हस्ताभ्यां च ये घाता हस्तताडनानि तथाभूतैर्हस्ताभ्यां घातास्तैराकाशस्येति शून्योऽप्यवलम्बनप्रवृत्तेत्यर्थः । विलयं कलासंकथितानि

---

1 प - बाष्पपूर्णैः क्षणत्वाच्च  2 ज - क्रोधो  3 द - वीक्षणात्  4 द - सस्वरैः  5 प - हस्त  6 प - आनन्दार्थसमुत्पन्नं  7 प - रिपोर्धैर्य  8 द - नेत्रप्रचलहस्तभ्रूगात्रस्फुरणकम्पनैः  प - तथा चलितनेत्रत्वाद्गात्राणां कम्पनादपि

सन्त्रस्तहृदयत्वाच्च [1]पार्श्वाभ्यामवलोकनैः ।
[2]भर्तृरन्वेषणाच्चैवमुच्चैराक्रन्दनादपि[3] ॥ ६२
[4]प्रियस्यालिंगनाच्चैव भयं कार्यं भवेत्स्त्रियाः ।
[5]मदो येऽप्यमहितः पूर्वं नो स्त्रीनीचेषु योजयेत् ॥६३
मृदुभिः [6]स्खलितैर्नित्यमाकाशस्यावलंबनात्[7] ।
नेत्रावघूर्णनैश्चैव [8]सालस्यैः कार्यते तथा ॥ ६४
गात्राणां कम्पनैश्चैव मदः कार्यो भवेत्स्त्रियाः ।
अनेन विधिना कार्यः स्त्रीणां [9]कारणोत्थिताः ॥
[10]पौरुषः स्त्रीकृतो वापि भावा ह्यभिनयं प्रति ।
सर्वे सललिता भावास्त्रीभिः कार्याः प्रयत्नतः[11] ॥६६
धैर्यमाधुर्यसंपन्ना भावाः कार्यास्तु पौरुषाः[12] ।
त्रिपताकां[13]गुलीभ्यां तु वलिताभ्यां प्रयोजयेत् ॥
शुकाश्च शारिकाश्चैव सूक्ष्मा ये चापि पक्षिणः ।
शिखिसारसहंसाद्याः स्थूला येऽपि स्वभावतः ॥ ६८

---

चलिताभ्यामिति मन्थरं चरं चरन्तीत्यारेचितकैरङ्गहारैरिति तुर्याध्यायनिरूपितैर्गतिप्रचारैरिति तदुचितैरेव शिरोग्रीवादिकर्मभिः भयोद्वेगौ स्त्रीनीचानां

---

1 प - तथा पार्श्वावलोकनात् 2 न - भ्रातुः द - भ्रातुः 3 द - नेन च 4 द - पुरुष 5 न - भया 6 न - ललितैः कार्य 7 प - सुकुमारैस्तु ललितैः पार्श्वानतविलम्बितैः 8 द विलग्नैः न - विलासकलितैः 9 द - करणान्वितः 10 ज - स्त्रीकृताः पौरुषा ये वा भावाभिनयनं प्रति 11 न - स्त्रीणां कार्याः प्रयोक्तृभिः 12 ज - पुरुषाणां प्रयोजयेत् 13 द - काभ्यां तु हस्ताभ्यां

[1]रेचकैरंगहारैश्च तेषामभिनयो भवेत् ।
खरोष्ट्राश्वतरासिंहव्याघ्रगोमहिषादयः ॥ ६९
[2]गतिप्रचारैरंगैश्च तेऽभिनेयाः प्रयोक्तृभिः ।
भूताः पिशाचा यक्षाश्च दानवाः सहराक्षसैः ॥ ७०
अंगहारैर्विनिर्देश्या [3]नामसंकीर्तनादपि ।
अंगहारैर्विनिर्देश्या अप्रत्यक्षा भवन्ति ये ॥ ७१
प्रत्यक्षास्त्वभिनेतव्या भयोद्वेगैः सविस्मयैः ।
देवाश्च चिह्नैश्च प्रणामकरणैर्भावैश्च विचेष्टितैः ॥ ७२
[4]अभिनेयो ह्यर्थवशादप्रत्यक्षाः प्रयोगज्ञैः ।
[5]सव्योत्थितेन हस्तेन अरालेन शिरः स्पृशेत् ॥ ७३
[6]नरेऽभिवादनं ह्येतदप्रत्यक्षे विधीयते ।
खटकावर्धमानेन [7]कपोताख्येन वा पुनः ॥ ७४
दैवतानि गुरूंश्चैव प्रमदाश्चाभिवादयेत् ।
दिवौकसश्च ये पूज्याः प्रत्यक्षाश्च भवन्ति ये ॥ ७५

---

राक्षसादिदर्शने विस्मयस्तूत्तमानाम् । अत्र च भावादिगता अनुभावाः...... दिशब्देरुक्ता भावैः ...... यथा गदतो रुद्रस्य रौद्राभिनयस्य चेष्टितानि यथा

---

1 ज - पक्षाङ्गहारैर्विविधैस्तेऽभिनेयाः प्रयोक्तृभिः 2 द - महापशूनङ्गहारैर्गतिभिश्च प्रयोजयेत् 3 द - कर्म 4 ज - अनुकरणादिविधानादप्रत्यक्षानभिनयेत्ताः 5 ज - पार्श्वोत्थितेन मध्येन 6 ज - वन्दनं पुरुषाणां तु परोक्षं संप्रयोजयेत् 7 ज - पताकाख्येन वा तथा

तान् प्रकारैः प्रमाणैश्च गम्भीरार्थैश्च योजयेत् ।
महाजनं सखीवर्गं विटधूर्तजनं तथा ॥ ७६

परिमण्डलसंस्थेन हस्तेनाभिनयेन्नरः ।
पर्वतान् प्रांशुयोगेन[1] वृक्षांश्चैव समुच्छ्रितान् ॥ ७७

प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रयोजयेत् ।
समूहमागरं सेनां बहुविस्तीर्णमेव च ॥ ७८

पताकाभ्यां तु हस्ताभ्यामुत्क्षिप्ताभ्यां प्रदर्शयेत्[2] ।
शौर्यं धैर्यं च [3]गर्वं च दर्पमौदार्यमुच्छ्रयम् ॥ ७९

ललाटदेश[4]स्थानेन त्वरालेनाभिदर्शयेत् ।
वक्षोदेशादपाविद्धौ [5]करौ तु मृगशीर्षकौ ॥ ८०

विस्तीर्णप्रद्रुतोत्क्षेपौ योज्यौ यत्स्यादपावृतम् ।
अधोमुखोत्तानतलौ हस्तौ किञ्चित्प्रसारितौ ॥ ८१

कृत्वा त्वभिनयेद्वेलां[6] बिलद्वारं गृहं गुहाम् ।
कामं शापग्रहग्रस्तान् ज्वरोपहतचेतसः ॥ ८२

[7]एतेषां चेष्टितं कुर्यादङ्गाद्यैः सदृशैर्बुधैः ।

---

रुद्रस्य संचिह्नानि यथास्य त्रिशूलं परिमण्डलत्वेन सम्यग् ज्ञातं यस्येति प्रकरणादत्र पताक एव विशेषो मन्तव्यः । अङ्गाद्यैरिति । आदिग्रहणाद्दृष्टि-सात्त्विकपरिग्रहः । सदृशैरिति डोलाहस्तादिरूपैः । विलोलनैरिति चञ्चलैरिति

---

1 ज - भावेन 2 ज - विक्षिप्ताभ्यां प्ररूपयेत 3 ज - पूजां 4 ज - स्थान 5 ज - कृत्वा 6 ज - क्षिप्रं कुर्यात् 7 ज - एवं विधा नरा ये तु कुर्यात्तेषां विचेष्टितम् न - तेषामभिनयः कार्यो मुखगात्रविचेष्टितैः

दोलाभिनयनं कुर्याद्दोलायास्तु विलोलनैः[1] ॥ ८३

संक्षोभेण [2] गात्राणां [3]रज्ज्वाश्वाग्रहणेन च ।

यदा [4]चांगवती डो[5] [5]प्रत्यक्षा तु स्तजा भवेत्[6] ॥ ८४

आसनेषु[7] प्रविष्टानां कर्तव्यं तत्र डोलनम् ।

आकाशवचनानीह वक्ष्याम्यात्मगतानि च ॥ ८५

अपवारितकं चैव जनान्तिकमथापि च ।

दूरस्थाभाषणं यत्स्यादशरीरं निवेदनम् ॥ ८६

परोक्षान्तरितं वाक्यमाकाशवचनं तु तत् ।

तत्रोत्तरकृतैर्वाक्यैः संलापं संप्रयोजयेत् ॥ ८७

नानाकारणसंयुक्तैः काव्यभावसमुत्थितैः ।

हृदयस्थं वचो यत्तु तदात्मगतमिष्यते ॥ ८८

सवितर्कं च तद्योज्यं प्रायशो नाटकादिषु ।

---

भावः । अथ वाचिकप्रसंगाच्चवाभिनयं वक्तुं प्रतिजानीते आकाशवचनानी-त्यादि । दूरस्थेन रङ्गमप्रविष्टेनैव पात्रेण सहाभाषणमत एवाह अशरीरं यन्नि-वेदनमिति । परोक्षेण अविष्टपात्रसंबन्धिन्यान्तर्हितं व्यवहितम् । नन्वप्रविष्टस्य संबन्धिवचनं केनोदीर्यत इत्याशंक्याह नलोत्तरकृतैरिति । उत्तरत्वेन यानि कृतानि वाक्यानि "मैवं ब्रवीषि" इति तैः प्रयोजयेदिति प्राक् प्रविष्टस्यैव पात्रस्य कर्तृत्वं परोक्तवचनमनुभाषणच्छायाप्रविष्ट एवं ब्रूयादिति तात्पर्यम् ।

---

1 ज - कनैः भ - कार्यं डोलान्दोलनलीलया 2 ज - भणेन 3 ज - रज्जुप्र प - रज्वासं 4 ज - चाङ्क 5 न - भवेत्प्रत्यक्षसंश्रयाः । उदात्तारोहणं कार्यं लोकानुकरणाश्रयम । न चेत्कृवती डोला 6 ज - तदा त्वारोहणं कार्यं लोकानु-करणाश्रयम् 7 ज - तूप

निगूढभावसंयुक्तमपवारितकं स्मृतम् ॥ ८९

कार्यवशादश्रवणं पार्श्वगतैर्यज्जनान्तिकं तत्स्यात् ।

हृदयस्थं सविकल्पं भावस्थं चात्मगतमेव ॥ ९०

[1]इति गूढार्थयुक्तानि वचनानीह नाटके ।

[2]जनान्तिकानि कर्णे तु तानि योज्यानि योक्तृभिः ॥

पूर्ववृत्तं तु यत्कार्यं भूयः कथ्यं तु कारणात् ।

[3]कर्णप्रदेशे तद्वाच्यं मागात्तत्पुनरुक्तताम् ॥ ९२

अव्यभिचारेण पठेदाकाशजनान्तिकात्मगतपाठ्यम् ।

प्रत्यक्षपरोक्षकृतानात्मसमुत्थान् परकृतांश्च ॥ ९३

हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः ।

जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ॥ ९४

स्वप्नायितवाक्यार्थस्त्वभिनेयो न खलु हस्तसंचारैः ।

सुप्ताभिहितैरेव तु वाक्यार्थैः सोऽभिनेयः स्यात् ॥ ९५

---

निगूढभावो निगूढनं सर्वेषां यन्निगूह्यते एक एव शृणुयादिति तदपवारितं जनान्तिकं एकान्तिकत्वं चैकस्यैव निगूहत इति विशेषः ॥

अन्ये त्वाहुः । उभयमित्येतज्जनान्तिकमेव । यावतो हि जनस्य तद्वक्तव्यं तावतोऽन्तिके सामीप्ये तदुच्यते । अपवारितकं तु तदुच्यते यत्र तूहात्पर-मुद्दिश्य नोच्यते । अथ च परः शृणोत्वित्ययमेवाशयो वचने तदपवारितकं तेन निगूढेन भावेनाशयेन संयुक्तमव्यभिचारेणेत्युक्तपूर्वं कालादिसर्वमलानुसरेदिति यावत् । न खल्विति । न तत्र हस्ताभिनय इत्यर्थः । सुप्ताभिहितैरित्युक्तं

---

1 प - यानि गुह्यार्थ 2 प - तानि कर्णनिवेद्यानि एवमित्यभिधाय च

3 ज - वाच्यं कृत्वा प्रदेशे तु न स्यादुक्तं पुनर्यथा

मन्द्रस्वरेण [illegible]त्यकाव्यमपि पुनरुक्तवचनार्थम् ।
पूर्वानुस्मरणकृतं कार्यं स्वप्नायिते पाठ्यम् ॥ ९६

[illegible]शिथिलगुरुकरणाक्षरघण्टानुकारिवाक्यगद्गदजैः ।
हिक्काश्वासोपेतां काकुं कुर्यान्मरणकाले ॥ ९७

हिक्काश्वासोपेतां मूर्च्छारोगे मरणवत्कथयेत् ।
[illegible] कार्यं तद्वत्स्वप्नायिते यथा पाठ्यम्[1]॥

वृद्धानां योजयेत्पाठ्यं गद्गदस्खलिताक्षरम् ।
अस[illegible]साक्षरं चैव बालानां तु कलस्वनम् ॥ ९९

नानाभावोपगतं मरणाभिनये बहुकीर्तितं तु ।
विक्षिप्तहस्तपादैर्निभृतैः साङ्गैस्तथा कार्यम्[2] ॥ १००

व्याधिप्लुते च मरणं निषण्णगात्रैस्तु संप्रयोक्तव्यम् ।
हिक्काश्वासोपेतं [3]तथा पराधीन[illegible]त्रसंचारम् ॥ १०१

---

तानि लक्षणतः कथयति मन्द्रस्व[illegible]चारैरित्यादि । पूर्वानुस्मरणेन कृतं प्रयुक्तं प्रशिथिलानि स्वस्थानतो भ्रंशमानानि गुरूणि स्वकर्मण्यचतुराणि यानि जिह्वाघ्राणाग्रमध्यमूलानि तेषां संबन्धीनि यान्यक्षराणि तथा ते चलद्घण्टावत् अनुकरणं प्रधानं यद्वाक्यं तत्र यो गद्गदस्वरभेदः ततो ये जातास्तारमन्द्रादयः उदात्तानुदात्तादयश्च तैरुपलक्षितां मरणकाले काकुं कुर्यादिति संबन्धः । कलस्वनमिति मधुरस्वरम् ।

एवमाकाशभाषितमात्मगतमपवारितं जनान्तिकं कर्णोक्तं स्वप्नायितोक्तमरणमूर्छामदभाषितं वृद्धबालोक्तमिति वचनगतं चित्राभिनयमुक्त्वा मरणप्रसङ्गेन तद्गतमपि कथयितुमाह नानाभावोपगतमिति । विषं पीतमनेनेति विषपीतः ।

---

1 ज - पाठ्यं पुनरुक्तसंयुक्तम् 2 प - तदा गात्रैः 3 प - स्वनवेक्षित

विषपीतेऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम्।
विषवेगसंप्रयुक्तं विस्फुरिताङ्गक्रियोपेतम्॥ १०२
प्रथमे वेगे कार्श्यं त्वथ वेपथुर्द्वितीये तु।
दाहस्तथा तृतीये विलोहिका स्याच्चतुर्थे तु॥ १०३
फेनस्तु पञ्चमस्थे तु[3] ग्रीवा षष्ठे तु भज्यते।
जडता सप्तमे तु स्यान्मरणं त्वष्टमे भवेत्॥ १०४
तत्र प्रथमवेगे तु क्षामवक्त्रकपोलता।
कृशत्वेऽभिनयः कार्यो वाक्यानामल्पभाषणम्॥
सर्वांगवेपथुं च कण्डूयनं तथा गात्राणाम्[4]।
विक्षिप्तहस्तगात्रं[5] दाहं चैवाप्यभिनयेत्तु॥ १०६
[6]उद्वृत्तनिमेषत्वादुद्गारच्छर्दनैस्तथाक्षेपैः।
अव्यक्ताक्षरकथनैः विलोहिकामभिनयेदेवम्[7] ॥१०७
उद्गारवमनयोगैः शिरसश्च विलोलनैरनेकविधैः[8]।
फेनस्त्वाभिनेतव्या निःसंज्ञतया निमेषैश्च ॥ १०८

तत्रैतस्य दष्टकस्याप्युपलक्षणम्। विषस्य वेगाक्रमणेन धातुषु रसादिष्वोजःपर्यन्तेषु सञ्चरणं प्रथमे वेगे यत्कृशत्वमत्राभिनयः कार्य इति संबन्धः। वलति कामिला। छर्दिः प्रारंभ इवान्तरो दाहं वायूद्रेकः अंसयोः कपोलाभ्यां स्पर्श-

1 ज - विषस्य कुर्यात् प्रकम्पनं परतः 2 ज - हिक्का कुर्यात् 3 प - पञ्चमं कुर्यात् 4 ज - च गात्राणां 5 ज - पादं 6 प - उन्मेष 7 प - धिकामेवं प्रयुञ्जीत 8 प - सकोल्लेहैर्विलोलनैः शिरसः

अंसकपोलस्पर्शी शिरसोऽथ विनामनं शिरोऽपाङ्गः[1]।
सर्वेन्द्रियसंमोहाज्जडतामेवं त्वभिनयेत्तु ॥ १०९

संमीलितनेत्रत्वात् [2]व्याधिविवृद्धौ भुजंगदशनाद्वा।
एवं हि नाट्यधर्मे मरणानि बुधः प्रयोज्यानि ॥ ११०

संभ्रमेष्वथ रोषेषु शोकावेशकृतेषु च।
यानि वाक्यानि युज्यन्ते पुनरुक्तं न तेष्विह ॥ १११

साध्वहो मां च हेहेति किं त्वं मामावदेति च।
एवंविधानि कार्याणि द्वित्रिसंख्यानि कारयेत् ॥

प्रत्यंगहीनं यत्काव्यं विकृतं च प्रयुज्यते।
न लक्षणकृतस्तत्र कार्यस्त्वभिनयो बुधैः ॥ ११२

भावो यत्रोत्तमानां तु न तं मध्येषु योजयेत्।
यो भावश्चैव मध्यानां न तं नीचेषु योजयेत् ॥ ११४

---

संबन्धादित्यर्थः। शिरसो भङ्गो ग्रीवासन्धिविच्युतिस्ततः। पुनरुक्तं न तेष्विति दोषायेति शेषः। तदुदाहरति साध्वहो इत्यादि। तत्र शब्दपुनरुक्तं साधुसाध्वित्यादि। अर्थपुनरुक्तमहो साधु भद्रं चेत्यादि। प्रत्यङ्गहीनमित्यादि। प्रहसनप्रधानतया यथा प्रत्यङ्गेन केनचित्संस्कारांशेनाहीनं कार्यम्। अत एव विकृतत्वाद्धासप्रधानं तत्राप्यभिनयोऽप्यलाक्षणिको हासायैव यथातथापि ॥

---

1 प - स्पर्शात् ग्रीवाभङ्गाद्विवर्तनाच्छिरसः। बाह्येन्द्रिय 2 प - प्रचारणाद्वा महीनिपतनाच्च। व्याधिविषाभ्यां मरणं कर्तव्यं नर्तकैरेवम्। एतेऽभिनयविशेषाः कर्तव्या भावसत्वसंयुक्ताः। अन्ये च लौकिका ये तु ते सर्वे लोकतः कार्याः

पृथक् पृथग्भावरसैरात्मचेष्टासमुत्थितैः ।
ज्येष्ठमध्यमनीचेषु नाट्यं रागं हि गच्छति ॥ ११५

एतेऽभिनयविशेषाः कर्तव्याः सत्त्वभावसंयुक्ताः ।
अन्ये तु लौकिका ये तु ते सर्वे लोकवत्कार्याः ॥११६

नानाविधैर्यथा पुष्पैर्मालां [1]ग्रथनाति माल्यकृत् ।
अंगोपांगै रसैर्भावैस्तथा नाट्यं प्रयोजयेत् ॥ ११७

या यस्य लीला नियता गतिश्च
रंगप्रविष्टस्य विधानयुक्तः ।
तामेव कुर्यादविमुक्तसत्त्वो
यावन्नरांगात्प्रतिनिर्वृतः स्यात्[2] ॥ ११८

---

अथ सर्वानुग्राहकं सामान्यलक्षणमाह भावो य उत्तमानामित्यादि । रागं गच्छतीति । सर्वस्य रञ्जकं भवतीति यावत् । सामान्याभिनयशेषत्वं तदुक्तार्थात्तन्मुखेनोपसंहारादिशा चित्राभिनयस्य दर्शयति एतेऽभिनयविशेषा इति । सत्त्वभावसंयुक्ता इत्यनेन सत्त्वातिरिक्तोऽभिनय इत्यादि स्मरति । नानाविधैरित्यभिनयानां समानीकरणं चित्रत्वं च दर्शितम् । क्रमात्क्रमं श्रमवशादुपचितत्वपरित्यागः प्रयत्नेन परिरक्ष्य इत्येतत्तात्पर्येण श्लोकं पठति या यस्य लीला नियता गति श्चेति । विमुक्तसत्त्वो त्यक्तावष्टंभं प्रति निर्वृत इति निर्वृत्या निश्चिर्वस्यते इति । वृत्तो विषयाज्जनादेर्निवर्तते । तेन

---

1 बध्नाति 2 प - निर्गतोऽसौ

एवमेते मया प्रोक्ता [1]नाट्ये चाभिनयाः क्रमात् ।
अन्ये तु लौकिका ये ते लोकाद्ग्राह्याः सदा बुधैः[2] ॥
लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् ।
वेदाध्यात्मपदार्थेषु प्रायो नाट्यं प्रतिष्ठितम् ॥ १२०
वेदाध्यात्मोपपन्नं तु[3] शब्दच्छन्दस्समन्वितम् ।
लोकसिद्धं भवेत्सिद्धं नाट्यं लोकात्मकं तथा ॥ १२१

रङ्गाद्यावर्जितो निष्क्रान्तः स्यादित्यर्थः । क्रमेतावानभिनयप्रकारः नेत्याह अन्ये तु लौकिका इति । ननु किमत्र लोकः प्रमाणमित्याशंक्याह लोको वेदस्तथाध्यात्ममिति । लोकसिद्धानि प्रत्यक्षानुमानागमप्रमाणानि लोकशब्देनोच्यन्ते । वेद इति तु यथास्वं नियतरूपो लोकप्रसिद्धोऽप्यागमो यथा न्यायेषु धनुर्वेदः स्वरतालादौ गान्धर्ववेद इत्यादि । अध्यात्मं तु संस्थं वेदनं वेदाध्यात्माभ्यां प्रमिता ये पदार्थाः तेषु नाट्यं प्रतीतमित्यत्र हेतुमाह वेदाध्यात्मोपपन्नं त्विति । तुर्हेतौ । समन्वितमिति भावे । एतदुक्तं शब्दसमन्वयो व्याकरणाभिधानेनागमेन सिद्धः । छन्दस्समन्वयस्तु स्वसंवेदनेन । अन्यथा हि तद्विदां स्वसंवित्तिसिद्धात्तेषु प्रगीतानामिव रागभाषादीन् नीयते । एतच्चागमस्ववेदनयोः प्रमोपलक्षणमात्रं । अथ लोकं प्रमाणयितुमाह यल्लोकसिद्धमिति । यल्लोकेसिद्धं तत्सिद्धं न । तत्कस्यचिदसिद्धमिति यावत् । नहि लोकप्रसिद्धिमपह्नोति कश्चित्समर्थः । सुविप्रतिपन्नस्यापि तदपह्नवे काष्ठपाषाणतापत्तिप्रसंगात् । तथेति । तत एव प्रकाराद्धेतोर्लोकात्मकं लोकानुकीर्तनरूपं नाट्यमित्युक्तम् ।

1 प - भावा नाट्यसमाश्रयाः । नोक्ता ये तु मया तेऽपि   2 प - प्रयोगतः
3 प - उपनिषदां

[1]न च शक्यं हि लोकस्य स्थावरस्य चरस्य च ।
शास्त्रेण [2]निर्णयं कर्तुं [3]भावचेष्टाविधिं प्रति ॥ १२२

नानाशीलाः प्रकृतयः [4]शीले नाट्यं प्रतिष्ठितम् ।
तस्माल्लोकप्रमाणं हि विज्ञेयं नाट्ययोक्तृभिः[5] ॥

एतान् विधीं श्चाभिनयस्य सम्य-
ग्विज्ञाय रंगे मनुजः प्रयुंक्ते ।
स नाट्यतत्त्वाभिनयप्रयोक्ता
संमानमग्र्यं लभते हि लोके ॥ १२४

---

ननु लोकेन च प्रत्यक्षं तदागमेनैव प्रमितम् । तत्किं पुनर्लोकेनोक्तेनेत्याशङ्क्याह न शक्यं लोकस्येति । शीलः स्वभावः । प्रकृतमुपसंहरति तस्माल्लोकप्रमाणं हि विज्ञेयमिति । एतान् विधीनिति । सामान्याभिनयात् प्रभृत्येतदध्यायपर्यन्तं ये कर्तव्यतारूपाभिनयानां विधय उक्ताः तान् सम्यग् विज्ञायेति वदन् कोहलादिशास्त्रलक्ष्यप्रवाहसिद्धमपि चित्राभिनयं सूचयति । ततश्चोदाहरणार्थान् दर्शयामो माभूत्सम्प्रदायप्रवाहविच्छेद इति ।

मुख्याभ्याशे हंसपक्षात्स्कन्दो या शक्तिदर्शनात् ।
संमुखौ खटकौ पार्श्वद्वये शाङ्गिनिरूपणम् ॥

---

1 प - देवतानामृषीणां च राज्ञां जनपदस्य च । पूर्ववृत्तानुचरितं नाट्यमित्य-भिधीयते । एवं लोकस्य या वार्ता नानावस्थान्तरात्मिका । सा नाट्ये संविधातव्या नाट्यवेदविचक्षणैः । यानि शास्त्राणि ये धर्मा यानि शिल्पानि या क्रिया । लोकधर्मप्रवृत्तानि तन्नाट्यमिति संज्ञितम् । 2 ज - नियमं 3 ग - नाना 4 ज - नासु
5 ज - अभ्यन्तरं च बाह्यं च द्विविधं नाट्यमिष्यते

लीलालोकितमंदंगयुग्मेन कुसुमायुधः ।
रुद्रवद्रूपयेद्दुर्गां चतुरेण सरस्वतीम् ॥

............ ..... खटकेन तथा श्रियम् ।
गौरीं च दंष्ट्रया देवीं वाराहीमिति मातरः ॥

प्रदर्श्यास्तत्तदुचितब्राह्म्यादिगतलक्षणैः ।
सूचीहस्ताङ्गुलिकाद्रिनन्दिनीस्यान्नयोन्नता ॥

तत्रोत्तानाधोमुखेन त्रिपताकामुखेन तु ।
गङ्गा तथैव चतुरेणान्या सर्पशिरोद्वयम् ॥

उपर्युपरि डोलं स . ले तिर्यग्विलोलितः ।
अरालत्रिपताकौ च पताकद्वयकम्पनम् ॥

अभि ... पुष्पपुटास्त्रिपताकौ तपस्विनाम् ।
मस्त...ध्वप्राचीनौ शिखरौ बाह्यदन्तरे ॥

कूर्परोर्ध्वस्थितेनापि त्रिपताकेन योषितः ।
पार्श्वेऽर्धकटकेन स्याल्लोकपालास्मलक्ष्मभिः ॥

स्लक्ष्णकायौ मुक्तहस्तौ जिनं विद्याधरान् प्रजाः ।
अग्निना वाथ रक्षांसि नष्टं या सूचिकामुखात् ॥

विद्यात्तु त्रिपताकाभ्याम्मूर्ध्निराजप्लवङ्गमान् ।
पताकाभ्यामथो सर्पशिरोभ्यां स्वस्तिकस्थितेः ॥

घर्मे सितादिभिश्चाहीनृतवो मणयः पुनः ।
.... ाङ्गुलेन रिपुन्नाथ ग्रन्थतर्जनिकेऽङ्गुना ॥

कूर्परकुञ्चितां कम्प्रपताकाभ्यां च मारसः ।
प्रसारितं च बाहुभ्यां वृश्चिकस्थलपक्षिषु ॥

शृङ्गाभ्यां च मध्यमाङ्गुष्ठपताकामस्तकोपरि ।
उत्क्षेपार्दाश्चितस्यांघ्रि नतोन्नतकरद्वयात् ॥

[1]एवमेते ह्यभिनया वाङ्नेपथ्यांगसंभवाः[2]।
प्रयोगज्ञेन कर्तव्या नाटके सिद्धिमिच्छता ॥ १२५

इति भारतीये नाट्यशास्त्रे चित्राभिनयो नाम
[3]पञ्चविंशोऽध्यायः ॥

---

गरुडं चतुराभ्यां तु कण्डमूलोभयादधः ।
पताककूर्परे कुञ्च्य चालीढो क्रोधरूपणे ॥

मुखान्तिके तर्जनीं तु विश्लिष्टां वाक्यरूपणे ।
चूडायां मूर्ध्न्युपाङ्गेषु स्त्रीविषादे तथोद्वहम् ॥

वक्षः पार्श्वान्नूर्ध्वतः खं पताकस्वस्तिकेन तु ।
तथा प्रभातहस्ताभ्यामावेगोद्वर्तिताङ्गुलिः ॥

पराङ्मुखाभ्यां रात्रिर्वा पताकस्वस्तिकादिभिः ।
मुखाच्छादात्स्खलत्यादौ शलभाधूलिधूम्रकः ॥

पताकेनोरसि सुहृदरालेन सुतादयः ।
अभिमूर्ध्नाथ तद्युग्मं कुब्जवामनबालकाः ॥

पताका मूर्ध्नि खण्डः स्यादथ स्वस्तिकविच्युते ।
निधिमाकुञ्चिते वामकूर्परे भूधरादिषु ॥

उत्तानं च शिरस्तेषां भेदास्तु न निरीक्षणात् ।
वामकस्त्रिपताकः स्यात् कण्ठमूलोऽपरोऽपरः ॥

करिणीं गण्डविचलच्चतुराभ्यां मदश्रिताम् ।
पद्मोर्णनाभमुकुलैः स्वस्तिकैर्वृश्चिकेन तु ॥

---

1 ज - चत्वारो ह्यभिनया 2 ज - सत्त्वाः 3 प - त्रयोविंशः न - षड्विंशः

सिंहगोमायुशरभा यथास्वं दृष्टिभेदतः ।
ललाटे सर्पशिरसा खड्गि श्रवणमूलतः ॥

खड्गिकाखी तथान्यच्च शिखरं स्यात्प्रसारितम् ।
मुष्टिर्मल्लस्य शल्यश्च खटकेन हृदन्तरे ॥

संदंशेन मतिर्नाभेरुद्यता वक्षसि स्थितिः ।
पल्लवेन स्वमूर्धानं स्पृशता खेचरानतिः ॥

पराङ्मुखपताकाभ्यां मुखे स्वस्तिकविच्युते ।
कवाटाभ्यां करिघटान्मीक्षं (?) च करयुग्मतः ॥

मृगशीर्षे कनिष्ठायां निर्देशश्चतुरेण वा ।
चलः सूच्यास्ययुगलं हयसैन्येदशान्वितम् ॥

शूलपाण्यादिशब्देषु केचिद्वर्तिपदाश्रितम् ।
कुब्जन्त्वभिनयन्त्यन्ये विशेष्येऽन्यद्वयाश्रितम् ॥

अभ्याहतायां वाक्यार्थप्रतीतौ स्यात्पदेष्वथ ।
स्नानं मूर्धिन पताकाभ्यां शकटेऽन्योन्यसंमुखौ ॥

कूर्पराकुञ्चितौ कार्यौ त्रिपताककरेण तु ।
अयस्कारादिनिर्देशे खटकः करिविद्रवे ॥

गणेशे मुकुलास्योऽथ विक्षेपात्स्युर्मरीचयः ।
शिरसः पार्श्वयोः——त्रिपताकद्वये जटा ॥

उपर्युपरि युक्ताभ्यां शिखराभ्यां महेश्वरी ।
ग्रीष्मादिचतुरेण स्यान्मुष्टिना वाथलेखकाः ॥

खटकेन तथामूकाश्शून्योचानोपनो (?) क्रमात्
अधस्स्खलितयोगेन चतुरेणापमीलनात् ॥

शिखरे वामकेऽधस्तः पताकस्थेन दक्षिणे ।
सङ्गतौ खटकौ सूर्ये सारथौ पृष्ठपूर्वगौ ॥

प्रमाणो मानपरिमाः सूची संदष्टचरालकैः ।
एलाक्रीडा धनुर्योगात् पुलिन्दाभिनयो मतः ॥

यामाद्यौ खटकारालौ समपादः कपालिनि ।
स्वबाहूर्ध्वे तु खटकौ पार्श्वक्षेपश्च पादगः ॥

महाभैरवनाथस्य खटकावंसजानुगौ ।
अनूर्ध्वकर्मणः पादः कर्मान्तं यदुदीरितम् ॥

तस्य स्वबुध्या घटनं चित्राभिनयनं विदुः ।
तस्योदाहरणं किञ्चिदिदमूहाविवृद्धये ॥

मयाभिनवगुप्तेन दर्शितं धीमतः प्रति ।
यथालिखितवस्तूनां प्रतिपत्संस्थितान् प्रति ।

अपि वाचस्पतेर्वाणी कुण्ठा किमुत मादृशाम् ॥

एवं प्रमाणत्रयेणाभिनयान् विज्ञाय यो रङ्गे सभायां नाट्ये तत्त्वतोऽभिनयान् प्रयुङ्क्ते स च संमानं लभत इति योऽयम् । अभिनयशेषभूतोऽयमितिकर्तव्यतारूपः परस्परसंमीलनात्मा प्रयोगस्तेन च विना न काचित् सिद्धिरित्युपसंहारव्याजेनैवमिति श्लोकेनांगीशब्दस्वीकृतसात्विकेन दर्शयन् सामान्याभिनयनायकान् सर्वान् दर्शयति सिद्धमिति शिवम् ॥

विचित्राभिनयाध्यायः सोऽयं व्याकृतसारकः ।
कृतोऽभिनवगुप्तेन शिवानुग्रहशालिना ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तविरचितायां ना
वृत्तावभिनवभारत्यां चित्राभिनयः
पञ्चविंशोऽध्यायः समाप्तः ॥

श्रीः

# नाट्यशास्त्रम्

## षड्विंशोऽध्यायः

—— : ० : ——

अनुरूपा विरूपा च तथा रूपानुरूपिणी ।
त्रिप्रकारेह पात्राणां प्रकृतिश्च विभाविता ॥ १

नानावस्थाक्रियोपेता भूमिका प्रकृतिस्तथा ।
भृशमुद्योतयेन्नाट्यं स्वभावकरणाश्रयम् ॥ २

---

॥ अभिनवभारती—षड्विंशोऽध्यायः ॥

यस्मिन् सति प्रकृतिभूमिविकल्प एष
खेधास्य याति हृदयादरणीयभावः ।
रागः स यस्य महिमा महनीयधाम्नि
भूयात्स नित्यमपि तत्र च रागवन्तः ॥

समानीकरणलक्षणः सामान्येऽभिनयः प्रस्तुतः । तत्र यथाभिनयानामन्योन्यं समानीकरणमुपदेश्य तथाभिनेतुरभिनेयस्य च । एवं सोऽभिनेयद्वारेणाभिनयोऽभिनेता समानीकृतो भवति । तदेतदिति । अभिनेत्रभिनेययोः समानीकरणं सामान्याभिनयरूपमनेन प्रकृत्यध्यायोऽभिधीयते । तदर्थसूचनायैव सङ्गतिप्रदर्शनाभिप्रायो वृत्ताध्यायपरिसमाप्तौ यः प्रयुङ्क्त इति प्रयोक्तेति प्रयोगज्ञेति च निरूपितम् । स एव हि प्रयोगं जानाति यः प्रयोज्यप्रयोजकस्वरूपवित् । तत्र कृतिः प्रयोज्यानुकरणीयो अनुकीर्तनीय इति

बहुबाहूबहुमुखास्तथा च विकृताननाः ।
पशुश्वापदवक्त्राश्च खरोष्ट्राश्च गजाननाः ॥ ३
एते चान्ये च बहवो नानारूपा भवन्ति ये ।
आचार्येण तु ते कार्या मृत्काष्ठजतुचर्मभिः ॥ ४
स्वाभाविकेन रूपेण प्रविशेद्रंगमण्डलम् ।
आत्मरूपमवच्छाद्य वर्णकैर्भूषणैरपि ॥ ५
यादृशं यस्य यद्रूपं प्रकृत्या तत्र तादृशम् ।
वयोवेषानुरूपेण प्रयोज्यं नाट्यकर्मणि ॥ ६
यथा जीवत्स्वभावं हि परित्यज्यान्यदेहिकम् ।
परभावं प्रकुरुते परभावं समाश्रितः ॥ ७
एवं बुधः परंभावं सोऽस्मीति मनसा स्मरन् ।
येषां वागंगलीलाभिश्चेष्टाभिस्तु समाचरेत् ॥ ८

---

पर्यायाः । तत्र प्रयोक्ता प्रयोज्यसदृशो वा भवति विसदृशो वा उभयात्मको वा । तत्र सदृशोऽनुरूपः उभयात्मरूपानुरूपः स्वलक्षणं तेना तदेतौ तत्रैव (?) सादृश्यं लक्षितम् । आनुरूप्यं सादृश्यात् । तदुभययोगाद्रूपानुरूपा यद्यपि कथंचित् सर्वत्रैव त्रैविध्यं संभवति । तथाप्युद्रिक्ता सकललोकसंवादिनी अस्मादृशबुद्धिर्यथा पुरुषस्य प्रयोक्तुः पुरुषेण प्रयोज्येन योषितो योषिता तत्र सदृशव्यवहारः । स्त्रिया पुरुषस्य तु कैसादृश्यं । सा सिंहवदनदशवदनादिर्यस्तु प्रयोज्यैरन्यसादृश्यमेव । तदपि प्रकृतित्रैविध्यं दर्शयितुमाह अनुरूपेत्यादि । पात्राणामिति । धीयते रसो यत इत्यनेन नटबुद्धितिरोधानं सूचयन्नटबुद्धे-

सुकुमारप्रयोगो यो राज्ञामामोदसंभवः ।
श्रृंगाररसमासाद्य तन्नारीषु प्रयोजयेत् ॥ ९

युद्धोद्धताविद्धकृता संरंभारभटाश्च ये ।
न ते स्त्रीभिः प्रयोक्तव्याः योक्तव्याः पुरुषेषु ते ॥

अनुद्धटमसंभ्रान्तमनाविद्धांगचेष्टितम् ।
लयतालकलापातप्रमाणनियताक्षरम् ॥ ११

सुविभक्तपदालापमनिष्ठुरमकाहलम् ।
ईदृशं यद्भवेन्नाट्यं नारीभिश्च प्रयोजयेत् ॥ १२

एवं कार्यं प्रयोगज्ञैर्भूमिकाविनिवेशनम् ।
स्त्रियो हि स्त्रीगतो भावः पौरुषः पुरुषस्य च ॥ १३

यथा वयो यथावस्थमनुरूपेति सा स्मृता ।
पुरुषः स्त्रीकृतं भावं रूपात्प्रकुरुते तु यः ॥ १४

---

रप्यपायतामाह । प्रकर्षेण क्रियते साक्षात्कारकल्पनानुव्यवसायगोचरत्वमीयत इति प्रकृतिः । सेयं त्रिप्रकारप्रकृतिप्रविभागेन भाविना सती नाट्यं भृशं द्योतयेदिति ज्ञानस्य प्रयोजनमुक्तम् । कुतः सामान्यं द्योतयेदिति विशेषणद्वारेण हेतुमाह स्वभावेति । प्रयोज्यस्वभावो हि नाट्यकर्तव्यः । तत्र सुकुमारस्वभावे पुंसि प्रयोज्ये लालित्यसौकुमार्ये स्त्रीजनस्यायत्नसिद्धे इति स एव तत्र योक्तः युक्तो रूपानुरूपाणि वा सा तस्य प्रकृतिः, उद्धते तु प्रयोज्ये पुमानेव प्रयोक्ता युक्तः सानुरूपा प्रकृतिरूपायां तु प्रकृतौ कथंचित् यत्नेन संपाद्यमनुकीर्तनमिति तत्र सावधानेन प्रतियोक्ता भाव्यम् ।

रूपानुरूपा सा ज्ञेया प्रयोगे प्रकृतिर्बुधैः ।
छन्दतः पौरुषीं भूमिं स्त्री कुर्यादनुरूपतः ॥ १५

न परस्परचेष्टासु कार्यौ स्थविरबालिशौ ।
पाठ्यप्रयोगे पुरुषाः प्रयोक्तव्या हि संस्कृते ॥ १६

स्त्रीणां स्वभावमधुराः कण्ठाः पुंसां तु बलवन्तः ।
यद्यपि पुरुषो विद्यात् गीतविधानं च
लक्षणोपेतम् ॥ १७

माधुर्यगुणविहीनं शोभां जनयेन्न तद्गीतम् ।
यत्र स्त्रीणां पाठ्याद्गुणैर्नराणां च कण्ठमाधुर्यम् ॥

प्रकृतिविपर्ययजनितौ विज्ञेयौ तावलंकारौ ।
प्रायेण देवपार्थिवसेनापतिमुख्यपुरुषभवनेषु ॥ १९

---

नन्वनुरूपैव प्रकृतिर्युक्तेत्याशङ्क्याह नानेति (२ श्लो)। नानाप्रकाराभिरवस्थाभिः विलासलालित्यौद्धत्यादिभिर्धर्म्यैः क्रियाभिश्च सुकुमारोद्धतात्मिकाभिरुद्यानगमनयुद्धसन्नाहनादिभिरुपेता तस्मान्नानारूपैव प्रकृतिर्युक्ता । तस्याः प्रकृतेः पर्यायेण स्वरूपं स्पष्टयति भूमिकेति । भूमिरवष्टं स्थानं । यथा च ध्यानपटगते दशभुजपञ्चवक्त्रादिरूप एव भगवति सदाशिवे धिषणानिवेशः क्रियते न तु तत्र तद्देशत्वतत्कालत्वे आदर्तव्यम् । नापि तत्सिन्दूरहरितालादिकृतं तद्द्रव्यं केवलमवष्टंभस्थानम् । तदेवं रामादयोऽवष्टंभस्थानमात्रम् । एतच्च रसाध्यायादौ वितत्य निरूपितम् । तेन भूमिरिव भूमिका । इवार्थे अण् । अरूपायाः प्रकृतेरसंभाव्यत्वात् । तत्संपाद्यत्वाच्च पूर्वं स्वरूपमाह बहुबाहु इत्यादि । विकृताधाराः तेष्वप्रावरणादयः पशुवक्त्रा यथा

स्त्रीजनकृताः प्रयोगा भवन्ति पुरुषस्वभावेन ।
रम्भोर्वशीप्रभृतिषु स्वर्गे नाट्यं प्रतिष्ठितम् ॥ २०

तथैव मानुषे लोके राज्ञामन्तःपुरेष्विह ।
उपदेष्टव्यमाचार्यैः प्रयत्नेनांगनाजने ॥ २१

न स्वयं भूमिकाभ्यासो बुधैः कार्यस्तु नाटके ।
स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः ॥ २२

यस्मात्स्वभावोपगतो विलासः स्त्रीषु विद्यते ।
तस्मात्स्वभावमधुरमंगं सुलभसौष्ठवम् ॥ २३

ललितं साष्ठवं यच्च सोऽलंकरः परो मतः ।
प्रयोगो द्विविधश्चैव विज्ञेयो नाटकाश्रयः ॥ २४

---

गोमुखाः अश्वमुखाः श्वापदवक्त्रः यथा सिंहवक्त्राः खरोष्ट्रेत्यादिना सर्ववपुषा तद्रूपान् कार्य इति । आवश्यकेनेति शेषः । अत्र हेतुमाह स्वाभाविकेनेति । अनुकीर्तनीयस्य यः स्वभावः तदुचितेन रूपेणेति यावत् । आत्मरूपमिति । नटरूपमपिशब्दात् । मृत्काष्ठादिनिर्मितबाहुवक्त्रादिरपि । अवष्टंभयोगस्य प्राधान्यं दर्शयितुमेकविंशत्यध्यायोक्तं हेतुं स्मारयति यथा जीवस्वभावमिति । परं भावं रामादिकं वेषादिभिः समाचरेदिति संबन्धः । सोऽस्मीत्यनेन स्वात्मावष्टंभस्यात्याज्यतामाह । अन्यथा लयाद्यनुसरणमशक्यम् । अथ रूपानुरूपिणी प्रकृतिकेत्याशंक्याह सुकुमारप्रयोग इति राज्ञामित्युपलक्षणम् आमोदो विभावपरिपूर्णता । तन्नारीष्विति । प्रयोक्त्रीषु प्रयोज्यतयात्र विषयत्वेन विवक्षितः । प्रयोजयेदिति । नाट्याचार्यः ।

सुकुमारस्तथाविद्धो नानाभावरसाश्रयः ।
नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च ॥ २५
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु ।
सुकुमारप्रयोगोऽयं राज्ञामामोदकारकः ॥ २६
शृंगाररसमासाद्य स्त्रीणां तत्तु प्रयोजयेत् ।
युद्धोद्धताविद्धकृता संरंभारभटाश्च ये ॥ २७
न ते स्त्रीणां प्रकर्तव्याः कर्तव्याः पुरुषैर्हि ते ।
यथाविद्धांगहारं तु भेद्यभेद्याहवात्मकम् ॥ २८

---

नन्वेवमनुरूपा पुरुषविषये प्रकृतिः किं नास्तीत्याशंक्याह युद्धोद्धतोविद्धकृताविति । प्रयोगा इति शेषः । युद्धोद्धतैराविद्धैश्च कृताः व्याप्ताः अत एव संरम्भप्रधाना आरभटादयः । स्त्रीपुरुषभूमिकेत्यस्यार्थस्य व्यापकत्वमाह अनुद्धटमिति । अनुरूपां प्रकृतिं लक्षयितुमाह स्त्रिया हीति । प्रयोक्तृयानुरूपाननुरूपां लक्षयति पुरुषस्त्रीगतमिति । यत्र पुरुषत्वमालम्ब्य स्त्रीवर्तते यथा सांकृत्यायिनी । न तु सर्वत्रेत्यर्थः । स्त्रीपुरुषं प्रयुक्तमित्यतेत् सर्वत्र युक्तमिति दर्शयति छन्दत इति । स्थविरबालिशाविति । संबन्धिशब्दाः संबन्ध्यन्तरमाक्षिपन्तीति स्थविरो युवभूमिकायां युवा च वृद्धभूमिकायां न योज्यः । बालिशोऽत्र विरूपः स विरूपभूमावायोज्यः । एतच्चोपलक्षणम् । यत्र यत्प्रयोजनो न श्लिष्यति न स तत्र योज्य इत्यर्थः । पाठ्यप्रयोग इति । संस्कृतपाठ्यप्रधाने सुकुमारप्राकृतपाठ्यप्रधाने । गीत इति गीतप्रधाने प्रयोग इत्यर्थः । अत्र हेतुमाह प्रायः प्रकृतिरिति । बलवन्त इति । रङ्गपूरणोचितगम्भीरस्वरा। ननु पुमांसोऽपि भावयन्त्येव तत्कथमुक्तं स्त्रीणां गेयं प्रकृतिरित्याशंक्याह यद्यपि पुरुष इति ।

मायेन्द्रजालबहुलं पुस्तनैपथ्यदीपितम् ।
पुरुषप्रायसंचारमल्पस्त्रीकमथोद्धतम् ॥ २९

सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् ।
डिमः समवकारश्च व्यायोगेहामृगौ तथा ॥ ३०

एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ।
एषां प्रयोगः कर्तव्यो देवदानवराक्षसैः ॥ ३१

उद्धता ये च पुरुषाः शौर्यवीर्यसमान्विताः ।
योग्यः स च प्रयत्नः कर्तव्यः सततमप्रमादेन ॥ ३२

---

ननु विपर्ययोऽपि दृष्ट इत्याशंक्याह तावलङ्काराविति । कदाचित्कापीति यावत् । तत्र स्त्रीपुरुषप्रयोगमनुकरोतीत्ययमेव प्रचुरः प्रकार इति दर्शयति । प्रायेणेति । पुरुषस्वभावेन प्रयोज्येनोपलक्षितोऽयं स्त्रीभिः कृताः प्रयोज्याः । अत्रानुवादं दर्शयति रंभोर्वशीप्रभृतिष्विति । अत्र हेतुमाह उपदेष्टव्यमिति । उपदेष्टुं शक्यमित्यर्थः । स्वयमिति पुरुषैः न्यासोऽत्र प्रयोगः ।

ननु पुमानपि भावबुद्धिमाश्रित्याशंक्य हेत्वन्तरमाह यस्मादिति । पुरुषसंबन्धिबलितं च यद्वस्तु तदतीवहृद्यं प्रतिभाति । तदाहसोऽलंकार इति । यदुक्तमनुद्धट इत्यादिना युद्धोद्धता इत्यादिना प्रयोगद्वैविध्यं तद्रूपकभेदेन विभजंस्तद्रूपके सप्रयोग उचित इति दर्शयति नाटकमित्यादिना । शौर्यवीर्यसमन्विता इत्यनेन श्लोकसप्तकेन प्रायः प्रकृतिः स्त्रीणां गेयं नृणां तु पाठ्यविधिरित्युक्तम् । तत्रायत्नसिद्धेऽर्थे को नाट्याचार्यप्रवर्तितस्य गुणनिकाभ्यासव्यापार इत्याशंक्याह संगीतपरिक्लेश इति । मधुरत्वं स्वाभाविक

न हि योग्यया विना भवति च भावरससौष्ठवं किंचित्
संगीतपरिक्लेशो नित्यं प्रमदाजनस्य गुण एव ॥ ३३

यन्मधुरकर्कशत्वं लभते नाट्यप्रयोगेण ।

प्रमदाः नाट्यविलासैर्लभते यत् कुसुमैर्विचित्रलावण्यम् ।
कामोपचारकुशला भवति च काम्या विशेषेण ॥ ३४

गीतं वृत्तं तथा वाद्यं प्रस्तारगमनाक्रिया ।
शिष्यनिष्पादनं चैव षडाचार्यगुणाः स्मृताः ॥ ३५

---

कर्कशत्वं सविघ्नत्वं कलाभ्यासकृतः । अथ नाट्याभ्यासप्रोत्साहनार्थमाह प्रमदा नाट्यविलासैरिति ।

न स्वयं भूमिकान्यासो बुधैः कार्यस्तु नाटके इत्युक्तम् । तत्र नाट्याचार्यः किं बुद्धयते येन बुधा इति संशये स इत्याह गीतं नृत्तमित्यादि । स्वरज्ञोऽग्रहारक्रियापि चतुर्विधातोद्यकुशलस्तालज्ञः लोकोपकारविच्चेत्यर्थः । प्रस्तारोऽत्र तालः । गमने क्रियाङ्गस्य कीदृशी गतिरित्यनेनोपचारकौशलं तद्वक्ष्यते । एतैर्विना नाट्याचार्यनामापि न लभत इत्यर्थः । ऊहादयस्तन्पृष्ठे भवन्तस्तदुत्कृष्टं कुर्वन्तीति ते गुणा इति त्रिभागेनोक्ताः । ऊहोऽनुक्तस्य कल्पनमपोहो अनुक्तस्य अनुसरणमिति पूर्वोन्मेषरूपा प्रतिभा स्मृतिरुपदिष्टस्याविस्फुरणं मेधाः उपदिष्टस्य झटिति ग्रहणं शिष्यनिष्पादनं शिष्याशयौचित्यान्नोपदेश्यत्वं गुणमख्यानोद्यमः प्रगल्भते इत्यर्थः । राग इति । प्रयोजनानभिसन्धिना तत्र कलायाश्चासंघर्षाभ्यधिकं प्रतिपत्तिः

एतानि पञ्च यो वेत्ति स आचार्यः प्रकीर्तितः ।
ऊहापोहौ मतिश्चैव स्मृतिर्मेधा तथैव च ॥ ३६

मेधास्मृतिर्गुणश्लाघारागः संघर्ष एव च ।
उत्साहश्च षडेवैतान् शिष्यस्यापि गुणान् विदुः॥३७

एवं कार्यं प्रयोगज्ञैर्नानाभूमिविकल्पनम् ।
अत ऊर्ध्वं प्रवक्ष्यामि सिद्धीनामपि लक्षणम् ॥ ३८

इति भारतीये नाट्यशास्त्रे विकृतिविकल्पो
नाम षड्विंशोऽध्यायः ॥

---

स्पर्धा । एतदुपसंहरन्नध्यायान्तरमासूत्रयति एवमिति । अत ऊर्ध्वमिति चेति । सिद्धेर्द्वैविध्येऽप्यवान्तरभेदेन बहुत्वमिति सिद्धीनामित्युक्तमिति शिवम् ॥

प्रकृतिविकल्पाध्याये विषमपदालोचनं समारचितम् ।
अभिनवगुप्तेन मया विषमविलोचनपदाब्जभृङ्गेण ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तेन विरचितायां भारतीयनाट्यवेदवृत्तावभिनवभारत्यां प्रकृतिविकल्पाध्यायः षड्विंशः ॥

श्रीः

# नाट्यशास्त्रम्

## सप्तविंशोऽध्यायः

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयम् ।
यस्मात्प्रयोगः सर्वोऽयं सिद्ध्यर्थं संप्रदर्शितः[1] ॥ १

सिद्धिस्तु द्विविधा ज्ञेया [2]वाङ्मनोंगसमुद्भवा ।
[3]दैवी च मानुषी चैव नानाभावसमुत्थिता[4] ॥ २

---

अभिनवभारती—सप्तविंशोऽध्यायः

सत्त्वमित्यमलरङ्गमण्डले दैवमानुषविभेदभेदिता ।
सिद्धिमानयति यः स्वविधया तं नमामि गिरिजार्धधारिणम् ॥

इह यो यथाभिनये यस्मिन् योक्तव्यः सिद्धिमिच्छतेति सर्वमभिनयानां तावत्सिद्धिपर्यन्तमुक्तम् । अभिनयप्रक्रमेणैवोपाङ्गाभिनयाध्याये सप्तमे । तथाभिनयसमानीकरणात्मकमेळनिका संपादनात्मकस्सामान्याभिनयस्यापि सिद्धिफलत्वमेव दर्शितम् । चित्राभिनयाध्यायान्ते "एवमेते ह्यभिनया वाङ्नैपथ्याङ्गसंभवाः । प्रयोगज्ञेन कर्त्तव्या नाटके सिद्धिमिच्छतेति" श्लोकेन तत एव रसा भावा इत्यत्र सिद्धिरुद्दिष्टा तत्र केयं सिद्धिर्नामेति भवितव्यमधुना जिज्ञासया तदभिप्रायेणानन्तरवृत्तावध्यायपर्यन्ते दर्शितः ॥

---

1 न - प्रतिष्ठितम् 2 ड - वाक्सत्त्व च - मानुषीदैविकी तथा । वाङ्मनःश्रयसंभूता नानाभावरसाश्रया 3 भ - पुनश्च 4 न - सममाश्रया भ - विविधा नाट्यभाविनी

दशांगा मानुषी सिद्धिर्दैवी तु द्विविधा स्मृता।
नानासत्त्वाश्रयकृता वाङ्नैपथ्यशरीरजा[1] ॥ ३

स्मितापहासिनी हासा[2] साध्वहो [3]कष्टमेव च।
प्रवद्धनादा च तथा सिद्धिर्ज्ञेयाथ वाङ्मयी ॥ ४

पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च।
चेलदानांगुलिक्षेपैः शारीरी शिद्धिरिष्यते ॥ ५

किञ्चिच्छ्लिष्टो रसो हास्यो नृत्यद्भिर्यत्र युज्यते।
स्मितेन [4]स प्रतिग्राह्यः प्रेक्षकैर्नित्यमेव च ॥ ६

किञ्चिदस्पष्टहास्यं यत्तथा वचनमेव च।
अर्थहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव हि ॥ ७

---

अत ऊर्ध्वं प्रवक्ष्यामि सिद्धीनामपि लक्षणम् ॥ इति। तत्र सिद्धिर्नामा-साध्यप्रयोजनसंपत्तिः। सा च नटानां सामाजिकानां च। तत्र कतरा वक्तव्येत्याशंक्याह

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयमिति।

तुर्व्यतिरेके। यद्यपि सामाजिकाश्रयं नाटकाश्रयं च सिद्धीनां लक्षणं वक्तव्यं तथापि नटाश्रयमेव वक्ष्यामि। नेतरदिति। नाटकोऽत्र नटः नटतीति अपि हि व्युत्पत्तिः। कस्मात्पुनरितरं नोच्यत इत्याशङ्क्याह—

---

1 न - शारीरी वाङ्मयी तथा 2 ट - हासातिहासा 3 प - हाहतेति च। भवेत्प्रवृद्धानन्दाया 4 प - संपरि

विदूषकोच्छेद[1]कृतं भवेच्छिल्पकृतं च यत् ।
अतिहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव तु ॥ ८

[2]अहोकारस्तथा कार्यो नृणां प्रकृतिसंभवः ।
यद्धर्मपदसंयुक्तं तथातिशयसंभवम् ॥ ९

तत्र साध्विति यद्वाक्यं प्रयोक्तव्यं हि साधकैः ।
विस्मयाविष्टभावेषु[3] प्रहर्षार्थेषु चैव हि ॥ १०

करुणेऽपि प्रयोक्तव्यं कष्टं शास्त्रकृतेन तु ।
प्रबद्धनादा च तथा विस्मयार्थेषु नित्यशः ॥ ११

[4]साधिक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः ।
कुतूहलोत्तरावेधैर्बहुमानेन साधयेत् ॥ १२

---

यस्मात्प्रयोगः सर्वोऽयं सिद्ध्यर्थः संप्रदर्शितः ॥ इति ।

सामाजिकानां सिद्ध्यर्थो यः प्रयोगः स इति विशेषणभागे विश्रान्तिः । दण्डीप्रैषादस्याह लोहितोष्णीषाः प्रचरन्तीति । यथा विधिविवक्तेः तेनायमर्थः । यथा सिध्यां प्रयोगः सप्रयोजनः सामाजिकगतया तदुद्देशेनैव नाट्योत्पत्तौ न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिष्वित्यादेशेषु प्रयोगदर्शित्वात् सा सिद्धिः पूर्वं दर्शितैव । तदुपयोगनान्तरीयकतया क परा सिद्धिः । अनेनाध्यायेन दर्श्यते । एतदुक्तं भवति । सामाजिगानां तावदभि-

---

1 प - पदं 2 - प हीकारो नियतं 3 प - यादिषु भावेषु ज - येषु भावेषु शृङ्गाराद्भुतविक्रमैः । 4 प - अविच्छेदेषु

दीप्तप्रदेशं यत्कार्यं छेद्यभेद्याहवात्मकम् ।
सविद्रवमथोत्फुल्लं [1]तथा युद्धनियुद्धजम् ॥ १३

प्रकम्पितांसशीर्षं च साश्रं सोत्थानमेव च[2] ।
तत्प्रेक्षकैस्तु कुशलैस्साध्यमेवं विधानतः[3] ॥ १४

एवं साधयितव्यैषा तज्ज्ञैः सिद्धिस्तु मानुषी ।
दैविकीं च पुनः सिद्धिं संप्रवक्ष्यामि तत्त्वतः ॥ १५

या भावातिशयोपेता सत्त्वयुक्ता तथैव च ।
[4]सा प्रेक्षकैस्तु कर्तव्या दैवी सिद्धिः प्रयोगतः ॥ १६

न शब्दो यत्र न क्षोभो न चोत्पातनिदर्शनम् ।
संपूर्णता च रंगस्य दैवी सिद्धिस्तु सा स्मृता ॥ १७

---

संहितफलाप्तिलक्षणा सिद्धिः । व्रीडात्मिका व्रीडादिष्वधिगच्छन्तीत्यादौ तत्र स्थाने निरूपितपूर्वैव । सा च मानुषेण सामाजिकेनाभिसंहितत्वान्मानुषीत्युच्यते । तत्रापि तया न संहितोऽसौ यथा निर्विषयस्वकपरमानन्दाविर्भावस्वरूपापत्तिवर्गब्रह्मचारिणी गीतादेर्विषयस्य नाट्यान्तरुपरञ्जकतया निमग्नस्य विषयसमत्वान्नटादेः निह्नुतत्वाद्रामादेस्तुच्छत्वाद्देशकालनियन्त्रणतया एव विषयत्वापादनात्तस्याश्चात्र असंभवस्योपादानात् सोऽप्ययं सिद्ध्यंशो दैवशान्त्याः समस्त रसप्रकृतितां—

---

1 प - पूर्ण 2 ज- प्रत्युत्थानात्संभवः 3 ज - चेलस्य चालनात्
4 ज- नाट्यसंप्रेक्षकै र्येया नित्यं सिद्धिस्तु दैविकी ।

[1]दैवी च मानुषी चैव सिद्धिरेषा मयोदिता ।
अत ऊर्ध्वं प्रवक्ष्यामि घातान्दैवसमुत्थितान् ॥ १८

दैवात्मपरसमुत्था त्रिविधा घाता बुधैस्तु विज्ञेया ।
औत्पातिकश्चतुर्थः कदाचिदथ संभवत्येषु ॥ १९

वाताग्निवर्षकुञ्जरभुजङ्ग[2]मण्डूपनिपाताः ।
कीटव्यालपिपीलिकपशुप्रवेशनाश्च दैवककृता ॥ २०

घातानतः परमहं परयुक्तान् संप्रवक्ष्यामि ।
[वैवर्ण्यं चाचेष्टं विभ्रमितत्वं स्मृतिप्रमोहश्च ॥ २१

अन्यवचनं च काव्यं तथांगदोषो विहस्तत्वम् ।
एते त्वात्मसमुत्था घाता ज्ञेया प्रयोगज्ञैः ॥ २२]

---

"स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः" इति वदताप्युचित एव स्पष्टतयानुरोधो रहस्यार्थस्यान्यपरत्वाच्च शास्त्रस्य । तदुक्तं भट्टनायकेन—

प्रधाने सिद्धिभागेऽस्य प्रयोगाङ्गत्वमागताः ।
गेयादयस्तथैवैते लैधैनं (?) ह्युपयोगिनः ॥

सोपानपदपङ्क्त्या च सा च मोक्षस्पृशात्मिका ।
सा तु मोक्ता यतो गुह्यमृषयोऽन्यपदे कथम् ॥

शास्त्रे प्रकटयेयुर्हि ताळमानकृते यथा ॥ इति ॥

---

1 ज - एवं सिद्धिस्तु विज्ञेया प्रेक्षकैर्दिव्यमानुषी । प - एवं साधयितव्यैषा तज्ञैः सिद्धिस्तु मानुषी 2 प - संक्षोभणं

मात्सर्याद्द्वेषाद्वा तत्पक्षत्वात्तथार्थभेदत्वात् ।
एते तु परसमुत्था ज्ञेया घाता बुधैर्नित्यम् ॥ २३

अतिहसितरुदितविस्फोटितान्यथोत्कृष्टनालिकापाताः
गोमयलोष्ट[1]पिपीलिकविक्षेपाश्चारिसंभूताः[2] ॥ २४

औत्पातिकाश्च घाता मत्तोन्मत्तप्रवेशलिङ्गकृतः ।
पुनरात्मसमुत्था ये घातांस्तांस्तान् प्रवक्ष्यामि ॥ २५

वैलक्षण्यमचेष्टितविभूमिकत्वं स्मृतिप्रमोषश्च ।
अन्यवचन च काव्यं तथार्तनादो विहस्तत्वम् ॥ २६

[3]अतिहसितरुदितविस्वरपिपीलिकाकीटपशुविरावाश्च ।
मुकुटाभरणनिपाता[4] पुष्कर[5]जाः कव्यदोषाश्चः ॥ २७

---

यस्तु प्रस्फुटो दैवसिद्ध्यंशः पुरुषार्थव्युत्पत्तिलक्षणः सोऽपि "धर्मो धर्मप्रवृत्तानां कामं कामोपसेविना" मित्यादिना प्रदर्शित एवेति सामाजिकाश्रया सिद्धिर्न वक्तव्या । लक्षणतस्तदाह सम्यक् प्रकर्षेण प्रकटित इति । नटस्य तु या सम्यक् प्रयोगनिष्पत्तिलक्षणा सिद्धिः सा प्रयोगसिद्धिरुपयोगिनी प्रयोगनिष्पत्या हि विना नाट्यतथैव नेति कुतः सा भवेत्प्रयोगनिष्पत्तिश्च सामान्याभिनयस्यैव सम्यक्तापत्तिः । परमार्थतस्तु परकीयप्रोत्साहनतारतम्योदितप्रकृतिभानप्रत्ययबलेन वा स्वतः प्रतिभानमाहात्म्येन वा तत्र पूर्वा मनुष्यनिष्पादितत्वान्मानुषीत्युच्यते । दृश्यतेऽपि प्रोत्साहनबलेना-

---

1 ष - धूली 2 प - स्यु परसमुत्थाः 3 ट - आरटितरुदितविहसितश्वासक्षताङ्गकंपाद्या ; 4 ट - प्रपतन 5 ट - स्वागतित दोषाश्च

अतिहसितरुदितहसितानि सिद्धेर्भावस्य दूषकाणि स्युः[1] ।
कीटपिपीलिकपाता सिद्धिं सर्वात्मना घ्नन्ति ॥ २८

[2]विस्वरमजाततालं वर्णस्वरसंपदा च परिहीणम् ।
अज्ञातस्थानलयं स्वरगतमेवंविधं हन्यात् ॥ २९

मुकुटाभरणनिपातः प्रबद्धनादश्च नाशनो भवति ।
[3]पशुविशसनं तथा स्याद्बहुवचनघ्नं प्रयोगेषु ॥ ३०

विषमं मानविहीनं विमार्जनं चाकुलप्रहारं च ।
अविभक्तग्रहमोक्षं पुष्करगतमीदृशं हन्ति ॥ ३१

पुनरुक्तो ह्यसमासो विभक्तिभेदो विसन्धयोऽपार्थः ।
त्रैलिंगजश्च दोषः प्रत्यक्षपरोक्षसंमोहाः ॥ ३२

---

प्रबोधो हनूमत एव सागरलंघने । तत्र प्रोत्साहनं वाचिकं । पञ्चधा सा त्वहो कष्टमित्येकं स्थानं शारीरं पञ्चधेति दशधा । अन्ये तु विभागमाहुः । तथा हि प्रोत्साहनं वचसा वा सात्त्विकदर्शनेन वा शरीरव्यापारेण वा । वचनं सप्तधा । तद्यथा मध्यमारूपतत्प्ररोहात्मकं सामान्यवैखर्यात्मकं तत् प्ररोहात्मकं विशेषशब्दात्मकं वैखरीस्वभावम् । आवेशोचितविशेषवैखरीरूपं तत्प्रबन्धं विच्छेदं च । तदाह । स्मितंहयन्तःसञ्जल्परूपा मध्यमां सूचयति । संविदो

---

1 ट - सिद्धिवादप्रणामकरणानि प - दरहसितरुदितयोगैः सिद्धिविभागं प्रणाशमुपयाति 2 ट - विशसनमपि ज्ञेयं बाधाजननं प्रयोगस्य 3 प - विस्वरमरकरागं

छन्दोवृत्तत्यागो गुरुलाघवसङ्करो यतेर्भेदः ।
एतानि यथा स्थूलं घातस्थानानि काव्यस्य ॥ ३३

ज्ञेयौ तु काव्यजातौ द्वौ घातावप्रतिक्रियौ नित्यम् ।
प्रकृतिव्यसनसमुत्थः शेषोदकनालिकत्वं च ॥ ३४

अप्रतिभागं स्खलनं विस्वरमुच्चारणं च काव्यस्य ।
अस्थानभूषणत्वं पतनं मुकुटस्य विभ्रंशः ॥ ३५

[1]वाजिस्यन्दनकुञ्जरखरोष्ट्रशिबिकाविमानयानानाम् ।
आरोहणावतरणेष्वनभिज्ञत्वं विहस्तत्वम् ॥ ३६

प्रहरणकवचानामप्ययथाग्रहणं विधारणं चापि ।
अमुकुटभूषणयोगाश्चिरप्रवेशोऽथवा रङ्गे ॥ ३७

एभिः स्थानविशेषैर्घाता लक्ष्यास्तु सूरिभिः कुशलैः ।
यूपाग्निचयनदर्भस्रुग्भाण्डपरिग्रहान्मुक्त्वा ॥ ३८

---

हि हासविकासानुपः सुन्दरस्पन्दो यदाह ब्लहणं स्मितेनेति । सात्त्विकं तु पुलकादिरूपमेकं चैव । शरीरविकारोऽपि द्विधा । अनभिसन्धिपूर्वक एव यथा झटिति ह्युत्थानः । अभिसन्धानकृतो वा यथा चेलादिप्रक्षेपं चेलाद्यभावे चोर्ध्वांगुलिकरणादिभिस्तेनेयं दशविधा मानुषी सिद्धिः तत्र तत्र प्रयोगौचित्यात्सभेदेन प्रवर्तते । यदाह हास्यं स्मितेनेत्यादि । स्वप्रतिभानतारतम्यकृता तु सिद्धिर्द्विविधा । कदाचित्तु प्रतिभवन्त्यपि स्वप्रयोगादतीव

---

1 प - रथनाग

सिध्द्या मिश्रो घातस्सर्वगतश्चैकदेशजो वापि ।
नाट्यकुशलैः सलेख्या सिद्धिर्वा स्याद्विघातो वा ॥

[1]नालेख्यो बहुदिनजः सर्वगतोऽव्यक्तलक्षणाविशेषः ।
यस्त्वेकदिवसजातस्स प्रत्यवरोऽपि[2] लेख्यस्स्यात् ॥

जर्जरमोक्षस्यान्ते सिद्धेर्मोक्षस्तु नालिकायास्तु[3] ।
कर्तव्यस्त्विह सततं नाट्यज्ञैः प्राश्निकैर्विधिना ॥ ४१

दैन्ये दीनत्वमायान्ति ते नाट्ये प्रेक्षकाः स्मृताः ।
ये तुष्टौ तुष्टिमायान्ति शोके शोकं व्रजन्ति च ॥ ४२

---

मन्दीभवति । तत्संभाव्यमानमध्यात्मिकाधिदैविकानां शरीरादिगता व्याधि-रूपप्रक्षोभबाह्यभूतजनितकलकलशब्दादिभूकम्पवातवर्षादीनां विघ्नानां दैव-परपर्यायाद्दष्टकृतादद्दष्टप्रेरितं न पुरुषव्यापारोपनतादपसारणाद्वा भवति । यत्रेदमाह न शब्दो यत्र न क्षोभ इत्यादि । मूलत एव विघ्नानामसंभवाद्वा यदाशयेनाह यो भावातिशयोपेतेति ।

तदेतदाहुर्यन्मुनिराह सिद्धिस्तु द्विविधा ज्ञेयेति । अत एवास्या रसः प्रत्यङ्गत्वान्नाट्याङ्गमध्ये रसा वा इत्यत्र गुणाङ्गयुक्तं सामाजिकाश्रिता तु फलमाहुः ।

यत्तु भट्टनायकेनोक्तं "सिद्धेरपि नटादेरङ्गत्वं व्रजन्त्यास्तत्पक्षेऽयमिति" तेन नाट्याङ्गता समर्थितफलश्च पुरुषार्थत्वादिति केवलं जैमिनिरनुसृत

---

1 प - सिद्धिर्वा घातो वा सर्वगतोव्यक्त लक्षणो बहुशः 2 प - रोऽहि । भ - ञोल्पतरत्वात 3 ज - नालिकलेख्याश्च सिद्धिर्लेख्यं च

योऽन्यस्य महे मूर्धो नांदीश्लोकं पठेद्धि देवस्य।
स्ववशेन पूर्वरङ्गे सिद्धेर्घातः प्रयोगस्य[1] ॥ ४३

[2]यो देशभा[3]वरहितं भाषाकाव्यं प्रयोजयेद्बुद्ध्या।
तस्याप्यभिलेख्यः स्याद्घातो देशः प्रयोगज्ञैः ॥ ४४

कः शक्तो नाट्यविधौ यथावदुपपादनं प्रयोगस्य।
[4]कर्तुं व्यग्रमना वा यथावदुक्तं परिज्ञातम् ॥ ४५

[5]तस्माद्गम्भीरार्थाः शब्दा ये लोकवेदसंसिद्धाः।
सर्वजनेन ग्राह्यास्ते योज्या नाटके विधिवत् ॥ ४६

---

इत्यलमनेन। वाङ्मनोऽगसमुद्भवेति सर्वाभिनयैकीकारसंपत्तिरपीत्यर्थः मनोरूपत्वात्।

अन्ये तु वाङ्मनोंगसमुद्भवा दशाङ्गा मानुषीति संबन्धयन्ति। तदन्येऽप्यभिनयविषयैवेति दर्शितं नानासत्त्वाश्रयकृता वाङ्मयथशरीरजेति। विदूषकच्छेदकृतमिति। च्छेदोऽत्र वचनभङ्गी प्रकम्पितस्कन्धना...श्रयोच्छाटनं च कृत्वा तत्साध्यं प्रोत्साहने बृंहितव्यमिति संबन्धः। अथानेन साभ्युत्थानै-

---

1 प - योऽन्यस्य कवेः काव्ये काव्यं संमिश्रयेत्तथान्येन। तस्यापि बलदङ्के तज्ज्ञैर्घातो विलेख्यस्तु योऽन्यस्य कवे नाम्ना काव्यं काव्येन मिश्रयेन्मोहात् निर्दिष्टदोषतस्तास्मिन् सिद्धा लेख्यो बुधैः क्रमशः 2 भ - निर्दिष्टः स बुधैः ख्यातः काव्यापहारिणो बन्धः 3 भ - वेषहीनं प - विषयभाव्येतमपि च प्रयोजयेत्काव्यम् भ - भाषावयवं च योजयेत् काव्ये 4 प भ्रष्टो व्यग्रमनो वा 5 प - गम्भीराः शब्दा ये व्याकरणे वेदशास्त्रसंप्रोक्ताः

न च किञ्चिद्गुणहीनं दोषैः परिवर्जितं न चाकिंचित् ।
तस्मान्नाट्यप्रकृतौ दोषा नात्यार्थतो ग्राह्याः ॥ ४७

[1]न च नादरस्तु कार्यो नटेन वागङ्गसत्त्वनेपथ्ये ।
रसभावयोश्च गीतेष्वातोद्ये लोकयुक्त्यां च ॥ ४८

एवमेतत्त विज्ञेयं सिद्धीनां लक्षणं बुधैः ।
अत ऊर्ध्वं प्रवक्ष्यामि [2]प्राश्निकानां तु लक्षणम् ॥

चारित्राभिजनोपेताः शान्तवृत्ताः कृतश्रमाः[3] ।
यशोधर्मपराश्चैव मध्यस्थवयसान्विताः ॥ ५०

षडङ्गनाट्यकुशलाः प्रबुद्धाः शुचयः समाः ।
चतुरातोद्यकुशला [4]वृत्तज्ञास्तत्त्वदर्शिनः ॥ ५१

देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः ।
चतुर्धाभिनयोपेता रसभावविकल्पकाः[5] ॥ ५२

---

रिति नवमो भेदो व्याख्यातः । प्रकम्पितांसशीर्षमित्यनेन वचनाङ्गुलिक्षेपात् दशमोऽपि भवेदस्पृष्टो मन्तव्यः । सास्रमिति वदन्नेवं सूचयन्ति ।

यद्यपि भेदान्तरमप्यत्रानुप्रविष्टं तथापि बाहुल्यादभ्युत्थानेन व्यपदेश इति । एवं भेदात्क्रियते । द्वेषः सहजैवाप्रीतिर्मात्सर्यं तु कार्यार्थमेकद्रव्याभिलाषात् । पिपीलिकानिक्षेपः सुकुमारप्रकृतेः स्त्रीपालप्रायस्य त्रासनोत्पादनेन सिद्धिविघातः "औत्पातिकाश्च घाताः पशुवेगोन्मत्तलिङ्गकृता इति । अशंकितं

---

1 म - नानादरस्तु 2 न - प्रेक्षकाणां 3 म - श्रुतान्विताः 4 भ - नेपथ्यज्ञाः सुधार्मिकाः 5 म - सूक्ष्मज्ञा रसभावयोः ।

शब्दच्छन्दोविधानज्ञा नानाशास्त्रविचक्षणाः ।
एवं विधास्तु कर्तव्याः प्राश्निका दशरूपके[1] ॥ ५३

अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः ।
त्यक्तदोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ॥ ५४

न चैवैते गुणाः सम्यक् सर्वस्मिन् प्रेक्षके स्मृताः[2] ।
विज्ञेयस्याप्रमेयत्वात्संकीर्णानां च पर्षदि ॥ ५५

यद्यस्य शिल्पं नेपथ्यं कर्मचेष्टितमेव वा ।
तत्तथा तेन कार्यं तु स्वकर्मविषयं प्रति ॥ ५६

नानाशीलाः प्रकृतयः शीले नाट्यं विनिर्मितम् ।
उत्तमाधममध्यानां वृद्धबालिशयोषिताम् ॥ ५७

तुष्यन्ति तरुणाः कामे विदग्धाः समयात्विते ।
अर्थेष्वर्थपराश्चैव मोक्षे चाथ विरागिणः ॥ ५८

शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च ।
धर्माख्याने पुराणेषु वृद्धास्तुष्यन्ति नित्यशः ॥ ५९

न शक्यमधमैर्ज्ञातुमुत्तमानां विचेष्टितम् ।
तत्त्वभावेषु सर्वेषु तुष्यन्ति सततं बुधाः ॥ ६०

---

1 भ - नाठ्ययोक्तृभिः न - नाट्यदर्शने 2 य - ये तुष्टे तुष्टिमायान्ति शोके शोकं व्रजन्ति च । दैन्ये दीनत्वमायाति ते नाट्ये प्रेक्षकाः स्मृताः

बाला मूर्खाः स्त्रियश्चैव हास्यनैपथ्ययोः सदा ।
यस्तुष्टो तुष्टिमायाति शोके शोकमुपैति च ॥ ६१

क्रुद्धः क्रोधे भये भीतः स श्रेष्ठः प्रेक्षकः स्मृतः ।
एवं भावानुकरणे यो यस्मिन् प्रविशेन्नरः ॥ ६२

स तत्र प्रेक्षको ज्ञेयो गुणैरेभिरलंकृतः ।
एवं हि प्रेक्षका ज्ञेयाः प्रयोगे दशरूपतः ॥ ६३

संघर्षे तु समुत्पन्ने प्राश्निकान् संनिबोधत ।
यज्ञविन्नर्तकश्चैव छन्दोविच्छब्दवित्तथा ॥ ६४

अस्त्रविच्चित्रकृद्वेश्या गान्धर्वो राजसेवकः ।
यज्ञविद्यज्ञयोगे तु नर्तकोऽभिनये स्मृतः ॥ ६५

छन्दोविद्वृत्तबन्धेषु शब्दवित्पाठ्यविस्तरे ।
इष्वस्त्रवित्सौष्ठवे तु नेपथ्ये चैव चित्रकृत् ॥ ६६

कामोपचारे वेश्या च गान्धर्वः स्वरकर्मणि ।
सेवकस्तूपचारे स्यादेते वै प्राश्निकाः स्मृताः॥ ६७

---

पशोः सिंहादेर्वेषं कृत्वा सुकुमारं भयोत्कारं भीषयति सामाजिकं वा । एवं मात्सर्यादुन्मत्तलिङ्गमपि कश्चित्करोति हासानयनेन प्रकृतप्रयोगविप्रसंवादनायेति वैलक्षण्ये लक्षणविस्मरणमन्यभूमिकोचितसत्त्वस्वीकारोऽपि विभूमिकस्तूष्णी कता । अन्येन पठनीयमन्यः पठतीत्यन्यवचनं काव्यमिति बहुव्रीहिः (२२) । आर्तनाद इति । इतः प्रभृति परद्वेषप्रयुक्ताः सिद्धिविघाताः । आर्तत्वं हि छद्मना प्रदर्श्य नादं सिद्धिविघातकं करोति । एवं व्याधिदर्शनेन मकुटाभरण-

एभिर्दृष्टान्तसंयुक्तैर्दोषा वाच्यास्तथा गुणाः ।
अशास्त्रज्ञा विवादेषु यथा प्रकृतिकर्मतः ॥ ६८

अथैते प्राश्निका ज्ञेयाः कथिता ये मयानघाः ।
शास्त्रज्ञानाद्यदा तु स्यात्संघर्षः शास्त्रसंश्रयः ॥ ६९

शास्त्रप्रमाणनिर्माणैर्व्यवहारो भवेत्तदा ।
भर्तृनियोगादन्योऽन्यविग्रहात्स्पर्धयापि भरतानाम् ॥

अर्थपताका हेतोस्संघर्षो नाम संभवति ।
तेषां कार्यं व्यवहारदर्शनं पक्षपातविरहेण ॥ ७१

कृत्वा पणं पताकां व्यवहारः स भवितव्यस्तु ।
सर्वैरनन्यमतिभिः सुखोपविष्टैश्च शुद्धभावैश्च ॥ ७२

यैर्लेखकगमकसहायास्सह सिद्धिभिर्घाताः ।
नात्यासन्नैर्नदूरसंस्थितैः प्रेक्षकैस्तु भवितव्यम् ॥ ७३

तेषामासनयोगो द्वादशहस्तास्थितः कार्यः ।
यानि विहितानि पूर्वं सिद्धिस्थानानि तानि लक्ष्याणि ॥

---

निपात इति (२७) नेपथ्यभ्रंशः । अन्यः पुष्करावाहितदोषा इत्यनेनेदमाह न केवलमभिनयानामेव समानीकरणं सामान्याभिनयानां यावदातोद्यगीतयोरप्यन्योन्यमभिनयैश्च समं मीलनं सोऽपि सामान्याभिनयः । अन्यदिति । गीतादि । तच्चाभिनयाश्चेति द्वन्द्वः । समशब्देन कर्मधारयः तत्र भवः प्रयोग इति ।

घाताश्च लक्षणीयाः प्रयोगतो नाट्ययोगे तु ।
दैवाद्धातसमुत्थाः परोत्थिता वा बुधैर्नवैर्लेख्याः ॥ ७५

घाता नाट्यसमुत्था ह्यात्मसमुत्थास्तु लेख्याः स्युः ।
घाता यस्य त्वल्पाः संख्याताः सिद्धयश्च बहुलाः स्युः ॥

विदितं कृत्वा राज्ञस्तस्मै देया पताका हि ।
सिध्यतिशयात्पताका समसिद्धौ पार्थिवाज्ञया देया ॥

अथ नरपतिः समः स्यादुभयोरपि सा तदा देया ।
एवं विधिज्ञैर्यष्टव्यो व्यवहारः समञ्जसाम् ॥ ७८

स्वस्थचित्तसुखासीनैः सुविशिष्टैर्गुणार्थिभिः ।
विमृश्य प्रेक्षकैर्ग्राह्य सर्वरागपराङ्मुखैः ॥ ७९

साधन दूषणाभासः प्रयोगसमयाश्रितैः ।
समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः ॥ ८०

---

नन्वाञ्चितादिभिः को दोषो जायते इत्याह । भावस्य प्रयोगस्यानुभावादिरूपस्य दूषणानि तेषु सत्सु तदवस्थावचनात् तत्र सर्वात्मने रसादिदोषाः । प्रथमेऽध्यायेऽप्याह—

त्रासं सञ्जनयन्ति स्म शेषा विघ्नास्तु नृत्यताम् ।

इति तत्र स एव सिद्धिविघाते प्रधानतमत्वेनोक्तः । विस्वरमजाततालमित्यत्र स्पष्टीकृतं वर्णेत्यादिना । एतत्स्वरूपं च वितत्य गेयाधिकारे निरूपयिष्याम इतीह नोक्तम् । एवं विधं स्वरगतं कर्तृहन्याद्विहन्ति प्रयोगं नाशयन्तीत्यर्थः । एवं पुष्करगतं कर्तृनियोन्यं विधिप्रयोगं हन्तीत्यकाव्यकृतघातस्य स्थानानिः

वाद्यं गानं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः[1] ।
[2]गीतवादित्रतालेन[3] कलान्तरकलासु च ॥ ८१

[4]यदङ्गं क्रियते नाट्यं समन्तात् सममुच्यते ।
अङ्गोपाङ्गसमायुक्तं[5] गीततालल्यान्वितम् ॥ ८२

[6]गानवाद्यसमत्वं च तद्बुधैः[7] सममुच्यते ।
[8]सनिर्भुग्नमुरः कृत्वा चतुरश्रकृतौ करौ ॥ ८३

ग्रीवाञ्चिता [9]तथा कार्या स्वङ्गमाधुर्यमेव च ।
पूर्वोक्तानीह शेषाणि [10]यानि द्रव्याणि साधकैः ॥

[11]वाद्यादीनां पुनर्विप्रा लक्षणं सन्निबोधत ।
वाद्यप्रभृतयो गानं वाद्यमाणानि निर्दिशेत् ॥ ८५

---

निमित्तानीत्यर्थः । काव्यजातामिति सप्तमी । प्रकृतिव्यसनेति । प्रकृतकृतमनौचित्यमिति यावत् ।

तदुक्तम् —

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ॥ इति ।

शेषोदकनालिकया काल उपलक्ष्यते । तस्य शेषत्वमन्यकालव्याप्तियोग्यत तेन यत्र काले यदनुचितं तत्र तन्निबन्धनं । यथा प्रभाते सङ्गीतकदर्शनार्ि राज्ञः । चकारादेशादौचित्यमपि । तेन देशकालस्वभावकृतं यदनौचित्यं कार्

---

1 र - प्राश्निके ज्ञेयवादितः 2 म - ध्रुवाणां गानयोगे तु 3 र - लैश्च
4 प - तदङ्गं 5 र - योग 6 न - भाण्ड 7 न - समं चैव वास्मिन्तर
8 र - समुन्नत 9 र - हनस्थाने 10 म - पाठ्यादीनि क्रमेण तु 11 र - वाद्
प्रकृतयो गानं वक्ष्यमाणं विनिर्दिशेत्

यानि स्थानानि सिद्धीनां तैः सिद्धिं तु प्रकाशयेत् ।
हर्षादङ्ग[1]समुद्भूतां नानारससमुत्थिताम् ॥ ८६

वारकालास्तु विज्ञेया नाट्यज्ञैर्विविधाश्रयाः ।
दिवसश्चैव रात्रिश्च तयोर्वारान् निबोधत[2] ॥ ८७

पूर्वाह्णस्त्वथ मध्याह्न स्त्वपराह्णस्तथैव च ।
दिवा समुत्था विज्ञेया [3]नाट्यवाराः प्रयोगतः ॥ ८८

प्रादोषिकार्धरात्रिश्च तथा प्राभातिकोऽपरः[4] ।
नाट्यवारा भवन्त्येते रात्रावित्यनुपूर्वशः ॥ ८९

एतेषां यत्र यद्योज्यं नाट्यकार्यं रसाश्रयम् ।
तदहं संप्रवक्ष्यामि वारकालसमाश्रयम् ॥ ९०

---

तत्सर्वमेव सिद्धिविघातकमिति । उत्तमव्यतिक्रियामीति । स्थानविशेषैरिति । स्थानविशेषैरिति निमित्तैरित्यर्थः । यूपाग्निपावनेति । तच्छिद्रात् नटो दुर्लभश्च तत्र यथात्वं सर्वजनेन सुज्ञातं न च लोकवृत्तोपयोगिनीति भावः । सर्वगत इति । सर्वत्र प्रयोग एकदेशज इत्यंशे बहुदिन-जा......वरुद्धत्यसौ सिद्धिविघातकः । अव्यक्त इति । प्रयोगान्तेऽस्य प्रयोगा-न्तरेण संबन्धो रङ्गे कार्य इत्यर्थः । एकादिवसजात इति । एकप्रयोगो लक्षणं प्रत्यपर इत्यन्वेति । जर्जरमोक्षस्यान्त इति पूर्वरङ्गप्रयोगोऽपि परीक्ष्य इति दर्शयति । नाट्यविधौ यथावदुक्तं ज्ञातुं प्रयोगस्य चोपपादनं कर्तुमशक्तोऽपि व्यग्रमनस्कत्वात् देशवेषाद्यनौचित्येन यो यं प्रयोगं कुर्यात्तस्य सर्वस्य

---

1 र - वशोभूतां 2 र - विशेषाश्चतंबस्तु ये । 3 र - वारकालाः प्रयोक्तृभः
4 र - प्रभातसमयस्तथा

यच्छ्रोत्ररमणीयं स्याद्धर्मोत्थानकृतं[1] च यत् ।
पूर्वाह्णे तत्प्रयोक्तव्यं शुद्धं वा विकृतं तथा ॥ ९१
सत्त्वोत्थानगुणैर्युक्तं वाद्यभूयिष्ठमेव च ।
पुष्कलं [2]सत्त्वयुक्तं च अपराह्णे प्रयोजयेत् ॥ ९२
कैशिकीवृत्तिसंयुक्तं शृङ्गाररससंश्रयम्[3] ।
नृत्तवादित्रगीताढ्यं प्रदोषे नाट्यमिष्यते । ९३
यन्नर्महास्यबहुलं[4] करुणप्रायमेव च ॥
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम् ॥ ९४
अर्धरात्रे नियुञ्जीत समध्याह्ने तथैव च ।
सन्ध्याभोजनकाले च नाट्यं नैव प्रयोजयेत् ॥ ९५

---

घाताः । नन्वङ्गस्यैवेत्यार्याद्वयस्य योजना दोषप्रत्यर्थं न ग्राह्य इत्युक्ते प्रयोक्तुरवलेपोऽवतरेदित्याशयेनाह न च नादस्त्विति । तज्ज्ञैरित्युक्तम् । तान् वशीकर्तुमाह अतः ऊर्ध्वं प्रवक्ष्यामि प्राश्निकानां त्विति । प्रश्ने भवा प्रध्यस्थत्वेनाभिनयचतुष्कगीतातोद्ये चेति । षडङ्गत्वान्नाट्यं सन्तोष इत्यादिना विमलाशयत्वेन सहृदयत्वमेषां परमो गुण इति दर्शयिति कार्यमिति । तेन सह विचार्यमित्यर्थः । शीलमेव दर्शयति । तुष्यन्ति तरुणाः काम इत्यादिना । प्रविशेदिति साधारणीभावमेवं सूचयन्नि तत्समीपे भवेदिति यावत् । एवं वस्तुमात्रविचारे विधिरुक्तः । प्रयोक्तॄणां परस्परकलहहेतुविधिर्वक्तव्यः । स च कदाचिल्लक्ष्यमात्रविषयो भवति । कदाचिल्लक्षणविषयोऽपि पूर्वमधिकृत्याह ।

---

1 र - धर्माख्यान 2 र - सिद्धिबहुलं 3 प - ललिताभिनयात्मकम्
4 र - संयुक्तं

एवं कालं च देशं च [1]समीक्ष्य च बलाबलम् ।
[2]नित्यं नाट्यं प्रयुञ्जीत यथाभावं यथारसम् ॥ ९६

[3]अथवा देशकालौ च न परीक्ष्यौ प्रयोक्तृभिः ।
यथैवाज्ञापयेद्भर्ता तदा योज्यमसंशयम् ॥ ९७

तथा समुदिताश्चैव विज्ञेया नाटकाश्रिताः ।
पात्रं प्रयोगमृद्धिश्च विज्ञेयास्तु त्रयो गुणाः ॥ ९८

बुद्धिमत्वं सुरूपत्वं लयतालज्ञता तथा ।
रसभावज्ञता चैव वयस्स्थत्वं कुतूहलम् ॥ ९९

ग्रहणं धारणं चैव गात्रावैकल्यमेव च ।
[4]निजसाध्वसतोत्साह इति पात्रगतो विधिः ॥ १००

सुवाद्यता सुगानत्वं सुपाठ्यत्वं तथैव च ।
शास्त्रकर्मसमायोगः प्रयोग इति संज्ञितः ॥ १०१

---

संघर्षेत्विति । उपचार इति । राजोचित इति भावः । द्वितीयमधिकृत्याह शास्त्रज्ञानात्त्विति । भर्तृनियोगादिति । लेखको लिखति गणकः पिण्डयति । द्वयोरपि यथैकस्य न घातः तेनायमस्याधिकारसिद्धिः । स चेत्याह सिद्ध्यतिशयात्पताकेति । यदि तु न कुत्रचिदतिशयः । तदा कथमित्याह । इति शब्दोऽध्याहार्यः । तत्तद्रसप्रधानं नाट्यं तत्र तत्र-कालेषु रसः संभवतीत्यभिप्रायेणाह देशकालाविति । नेपथ्ये पाठः यत्कर्तुं जानाति तेन योग इति पात्रसंपाद्यन्तर्भावोऽस्य । पात्रं हि रसप्रविष्टमेव । यदा समुदिता

---

1 र - पर्वरं च 2 र - नाट्यवारं 3 र - कदाचित् 4 र - जित

शुचिभूषणतायां तु [1]माल्याभरणवाससाम् ।
विचित्ररचना चैव समृद्धिरिति संज्ञिता ॥ १०२

यदा समुदिताः सर्वे एकीभूता भवन्ति हि ।
अलङ्काराः सकुतपा मन्तव्यो नाटकाश्रयाः ॥ १०३

एतदुक्तं द्विजश्रेष्ठाः सिद्धीनां लक्षणं मया ।
अत ऊर्ध्वं प्रवक्ष्याम्यातोद्याना च विकल्पनम् ॥ १०४

इति भारतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नाम
[2]सप्तविंशोऽध्यायः

---

इति सामान्याभिनयत्वमाह । अध्यायपञ्चकेन हि तदेवोक्तम् । नाट्योत्पत्तिरिव पूर्वरङ्गान्तेनेत्युक्तम् । वक्ष्यति च अलङ्कार इति शोभापूर्णतायाश्चतुरित्यर्थः ।

वक्तव्यशेषं सूचयति अत ऊर्ध्वमित्यादि । शिवम् ॥

नृसिंहगुप्तापरनामधेय-
विद्यावदातः सुखलाभिधानः ।
यं देहविद्यभिरयूयुजत्सः
प्रयोगसिद्धिं कृतवान् महार्थाम् ॥

इति श्रीकाश्मीरमहामाहेश्वराचार्याभिनवगुप्ताचार्यविरचितायां
अभिनवभारत्यां नाट्यवेदवृत्तौ सिध्यध्यायः सप्तविंशः ॥

---

1 शुमाल्याम्बरता तथा 2 र - षड्विंशः

——— : o : ———